श्रीश्रीजगन्नाथः शरणम् ।

# गदाधरपद्धतौ—

## कालसारः ।



### श्रीगणेशाय नमः ।

अविघ्नमस्तु ।

अशेषवर्णाश्रमधर्मवृद्धये
शरीरिमात्रस्य च शीघ्रमुक्तये ।
निजालये श्रीपुरुषोत्तमाह्वये
दधद्वपुर्दारुमयं महः श्रये ॥

रचितजननिकायाभीष्टदानैकदक्षः
क्षपयतु विमलाया दीनपक्षः कटाक्षः ।
स्मृतिनिकरगभीराम्भोधिमध्यार्थरत्ना-
नयनकृतिविधाने नूनयत्नेऽन्तरायम् ॥

कृष्णात् कौशिकवाजपेयि-तुलसीवंशाद् बृहत्पण्डिता-
कीर्तिपन्थकृतः स रायगुरुरित्यासीद् वदान्याग्रणीः ।
पुत्रः शारदवाजपेयमखकृद् विद्वान् हरेः कृष्णभू-
नाथश्रीमद्दिपीगुरुर्हलधराभिख्योऽग्रजो पामकृत् ॥

वेदान्तादिसमस्तशास्त्रनिलयो नीलाम्बराख्योऽनुज-
स्तस्य स्मार्त्तवरोऽतिदैवविदभूत्साहित्यविद्यार्णवः ।
सद्वैयाकरणश्च नीतिनिपुणः श्रीनीलगैलेशितु-
र्मंत्रस्नानसुखोत्सवान[1]वयवस्तोत्रं च योऽवर्णयत् ॥
धीरेशान् स्ववितीर्णदापितमहासत्शासनेपूत्तमान्
संस्थाप्याध्वरिणो विधाय धनदप्रख्यान् द्विजांस्तान् व्यधात् ।
प्राज्यं प्राप चतुर्मुखादिकमहायज्ञेषु सन्तोषयन्
विप्रादीनपि राजसूयजनितं यौधिष्ठिरं यो यशः ॥
यो नीलाम्बरराजगुर्व्वभिधया ख्यातः क्षितौ श्रीहरे-
कृष्णाख्यक्षितिपेश्वरेभपतिना शिष्येण सम्मानितः ।
सौवर्णोडुचतुष्टयाच्युतपदाम्भोजाङ्कक्षणातप-
त्राणेन द्विपचामरप्रभृतिभिस्त्वात्मीयचिह्नैः परैः ॥
यज्वा यज्ञरमो यमेश्वर इति भ्राता बृहत्पण्डित-
स्तं नीलाम्बरनामकं च पितरं श्रीजानकीं मातरम् ।
नत्वा राजगुरुर्गदाधरसुधीस्तं कालसाराभिधं
ग्रन्थं प्रारभते विलोक्य यमिमं निःसंशयाः स्यु र्जनाः ॥

कालो द्विविधः, नित्यो जन्यश्चेति । तत्र कालकालापरनामा ईश्वर एव नित्यकालः । स विश्वकृद्विश्वविदात्मा योऽभिज्ञः कालकालो गुणी सर्व्वविद्यः प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुरिति श्रुतेः ।

---

(१) मध्वस्नानसुखोत्सवावयवस्तोत्रं च योऽवर्णयत् ।

कौर्म्मेऽपि,—

अनादिरेष भगवान् कालोऽनन्तोऽव्ययः परः ।
सर्व्वगत्वात् स्वतन्त्रत्वात् सर्व्वात्मत्वान्महेश्वरः ॥

पुनश्च,—

परं ब्रह्म च भूतानि वासुदेवोऽपि शङ्करः ।
कालेनैव हि सृज्यन्ते स एव ग्रसते पुनः ॥

ज्योतिःशास्त्रेऽपि,—

भूतानामन्तकृत्कालः कालोऽन्यः कलनात्मकः ।

तस्मात् अन्यस्य कालस्य वासुदेवादीनामपि कलनात् कालकालः परमेश्वरः तस्य सर्व्वकर्मारम्भे स्मर्त्तव्यत्वात् तन्निरूपणमप्युचितम् । तथाच स्मरन्ति,—

सर्व्वेषु कालेषु समस्तदेशेष्वशेषकार्य्येषु तथेश्वरेश्वरः ।
सर्व्वैः स्वरूपैर्भगवाननादिर्ममास्तु माङ्गल्यविवृद्धये हरिः ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिकम् ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

वामनपुराणे,—

सर्व्वमङ्गलमङ्गल्यं वरेण्यं वरदं शुभं ।
नारायणं नमस्कृत्य सर्व्वकर्माणि कारयेत् ॥ इति

परमेश्वरस्य निर्गुणत्वात् कथं तत्स्मरणमिति चेत्, उच्यते,—

नित्यो अन्यश्च कालौ द्वौ तयोराद्यः परेश्वरः ।
सोऽवाङ्मानसगम्योऽपि[१] देही भक्तानुकम्पया ॥ इति

---

(१) अवाङ्मनसगम्योऽपि ।

तस्य देहवत्त्वाच्च विरोधः ।

तथाच वाशिष्ठरामायणे,—

खड्गपाशधरः श्रीमान् कुण्डली कवचान्वितः ।
स्फुटपद्ममयोदारवक्त्रपद्मसमन्वितः ॥
मासद्वादशकोद्दामभुजद्वादशकोद्भटः ।
स्वाकारसमया बद्धा वृतः किङ्करसेनया ॥ इति

कालस्वरूपं यद्यप्यस्ति तथापि भक्तानुजिघृक्षया स्वीकृतनाना-मूर्त्तेस्तस्य नानामूर्त्तिस्मरणम् ।

तथाच भगवद्गीतायाम्,—

यो यो यां यां तनुं भक्त्या श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान् ॥

तथा,—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥

अतएव लोकेष्वाविद्दिदा गोपालं सर्व्वेऽपि स्वेच्छया एकैकां देव-तामुपासते । एवं च मायाया अपि ईश्वरात्मकत्वात् नानाविध-शक्तिमयी सा जनयति कालतत्त्वमेवादौ ।

भाविभवद्भूतमयं कलयति जगदेष कालोऽत इति ।

भोजराजशैवागमसङ्ग्रहोक्तावपि जन्यकालस्य मायाकार्य्यत्वं सङ्ग-च्छते। भाविभवद्भूतमयमित्येकं पदं स्वार्थे मयट्प्रत्ययः। आरभ इव

कर्म्मणोऽन्तेऽपि ईश्वरस्मरणं कर्त्तव्यम्[१] ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥

इति भगवदुक्तेः ।

पूर्व्ववदत्रापि यो यां यां देवतां समुपास्ते स तत्र समर्पयेत् चेत् न कश्चित् विरोधः। देवीपूजादौ शिष्टा अपि तथा एव आचरन्ति[२] । ईश्वरकृपात् नित्यकालात् जन्यकालोत्पत्ति-स्तैत्तिरीयशाखायां नारायणीये श्रूयते ।

सर्व्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
*कलाः काष्ठा मुहूर्त्ताश्च अहोरात्राश्च[३] सर्व्वशः ॥*

अर्द्धमासा मासा ऋतवः संवत्सराश्च कल्पान्ता इति ।

मनुरपि,—

कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा ।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः ॥ इति ।

तत्र निमेषादिपरार्द्धान्तेषु जन्यकालेषु संवत्सरः प्रधानभूतः, अन्ये गुणभूताः ।

सोऽकामयत, द्वितीयो मम आत्मा जायेत इति मनसा वाचं मिथुनं समभवत् तदाश्रितः समभवदिति श्रुतेः ।

एवं नानासमुत्थानाः कालाः संवत्सराश्रिताः ।
*अणवश्च महान्तश्च सर्व्वे समवयन्ति तम् ॥ इति श्रुतेश्च ।*

---

(१) कार्य्यं । (२) तथाचरन्ति ।
(३) अहोरात्रश्च सर्व्वशः ।

कालस्य जन्यत्वपक्षे चिरक्षिप्रप्रत्ययोपाधिद्वारेण कल्पयत्याक्षिपतीत्यर्थः इति व्युत्पत्तिः। तथाच जन्यकालेष्वादौ संवत्सरो नाम मासायनाद्यवयवयुक्तो अवयवी कालविशेषः, सम्यग् वसन्त्यस्मिन्नयनर्त्तुमासादय इति व्युत्पत्तेः। स च द्वादशमासात्मकः द्वादशमासाः संवत्सर इति श्रुतेः। स पञ्चविधः, तथाच ज्योतिःशास्त्रे,—

सौरो वर्षः पञ्चषष्ठ्युत्तरत्रिशतवासरैः।
बार्हस्पत्य एकषष्ठ्युत्तरत्रिशतवासरैः॥
सावनोऽब्दः षष्ठ्यधिकत्रिशतैर्वासरैर्भवेत्।
चतुःपञ्चाशदधिकत्रिशताहैस्तु चान्द्रकः॥
नाक्षत्रोऽब्दश्चतुर्विंशत्यधिकैस्त्रिशतैर्दिनैः।
पञ्चेत्यब्दाः सौर-जैव-सावनैन्दव-तारकाः॥

तारकाणामयं तारको नाक्षत्र इत्यर्थः। तत्र,

सौरसावनचान्द्राणां श्रौतस्मार्त्तेषु कर्मसु।
उपयोगोऽथ नाक्षत्रस्यायुर्द्दायेऽधिवत्सरे॥
बार्हस्पत्यस्योपयोग इति वर्षेषु पञ्चसु॥

तथाच माधवाचार्य्याः,—

अब्दे पञ्चविधे चान्द्रो व्रतादौ तिलकादिके।
सुजन्मादिव्रते सौरो गोचरादिषु सावनः॥
चयोऽप्याचार्य्यसेवादौ विकल्प्यन्ते निजेच्छया।
आयुर्द्दाये हि नाक्षत्रो बार्हस्पत्योऽधिवत्सरे॥
चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे।
सम्परीदान्विदित्येतत् शब्दपूर्व्वास्तु वत्सराः॥

तिलं यवो वस्त्रधान्ये रजतं दीयतेऽत्र तु।

तत् स्फुटं विष्णुधर्म्मोत्तरे,—

संवत्सरे तु दातव्यं तिलदानं महाफलम्।
परिपूर्व्वे तथादानं यवानां द्विजसत्तम॥
इदापूर्व्वे तु वस्त्राणां धान्यानां चानुपूर्व्वके।
इत्पूर्व्वे रजतस्यापि दान दत्तं महाफलम्॥

इति संवत्सरनिर्णयः॥

अथ अयनम्। अयगताविति धातोर्निष्पन्नं, अयते यात्यनेन ऋतुत्रयेण सूर्य्यो दक्षिणामुत्तरां चेति, ऋतुत्रयमयनम्। तच्च द्विविध, दक्षिणायनमुत्तरायणं चेति।

यान् षण्मासान दक्षिणादित्य एति यान् षण्मासान् उदगादित्य एतीति श्रुतेः।

अयनप्रकरणे, सौरमानमधिकृत्य ऋतुत्रय स्यादिति विष्णुधर्म्मोत्तरोक्तेश्च। एतेन अयनद्वय सौरमानेनैवेति सिद्धम्।

तत्र सत्यव्रत',—

देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ।
दक्षिणाभिमुखे कुर्व्वन् न तत्-फलमवाप्नुयात्॥

भविष्योत्तरे,—

पुण्यानि यानि कर्म्माणि वर्ज्जयेद्दक्षिणायने।

उग्रदेवतानां तु प्रतिष्ठा अत्रैव(१) कार्य्या। तथाच वैखानरसंहितायाम्,—

(१) अत्रापि।

मातृभैरववाराहनारसिंहत्रिविक्रमाः ।
महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने ॥
एतासां देवतानां गृहप्रासादादिकमप्यत्र कार्य्यम् ।
यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे ।
गर्त्तापूरशिलान्यासे स कालः परिकीर्त्तितः ॥ इति देवीपुराणोक्तेः ।

येषां येषां कर्मणां यत्र यत्र अयने उल्लेखः, तत्र तत्र तानि कार्य्याणि। दक्षिणायने कार्य्याकार्य्यविचारो य स्तन्यः, स चातुर्मास्य प्रकरणे वाच्यः । इत्ययननिर्णयः ॥

अथ ऋतुः । स च ऋगतावित्यस्माद्धातोर्निष्पन्नः। इयर्त्ति गच्छति अशोकपुष्पाद्यसाधारणलिङ्गमिति वसन्तादिकालविशेषः ऋतुः । स षड्विधः, वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिरभेदादिति,[१] षड्वा ऋतवः इति श्रुतेः। यत्तु, द्वादशमासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेनेति श्रुतावुक्तम् । तदनुमन्त्रणीयस्य षष्ठस्य प्रयाजस्य अभावात् प्रयाजानुमन्त्रणार्थम् । न तु ऋतूनां पञ्चत्वप्रतिपादनार्थमिति ज्ञेयम् । ते च ऋतवः[२] चैत्रवैशाखाभ्यां वसन्त इत्यादि मासाभ्यां मासाभ्यां भवन्ति । तथाच काण्वशाखायां, इष्टकोपाधानमन्त्रेषु पठ्यते, मधुश्च माधवश्च वासन्तिका ऋतू, शुक्रश्च शुचिश्च ग्रैष्मा ऋतू, नभश्च नभस्यश्च वार्षिका ऋतू, इषश्चोर्ज्जश्च शारदा ऋतू, सहश्च सहस्यश्च हैमन्तिका ऋतू, तपश्च तपस्यश्च शैशिरा ऋतू इति, तत्र वसन्तः प्रथमः। मुखं वा एष ऋतूनां यद्वसन्त इति श्रुतेः ।

---

(१) शिशिरा इति । (२) ते च विशेषा ऋतव ।

ते च प्रत्येकं द्विविधाः, चान्द्राः सौराश्चेति। चैत्राद्यात्मकानां वसन्तादीनां चन्द्रगतिकल्पितत्वात्, चन्द्रमाः षड्होतायष्ठु ऋतून् कल्पयतीति श्रुतेश्च। ननु ऋतूनां मासद्वयात्मकत्वमेवेत्युक्तं अधिमासपाते चान्द्रत्वे कथं निर्वाह इति चेत् उच्यते। ययोर्मासयोर्मध्ये मलमासपातः[1] तयो र्यो मास उत्तरः तस्मिंस्तस्यान्तर्भावः, तथासौ षष्टिदिनात्मको मलिनशुद्धभागद्वयात्मक इति न का अनुपपत्तिः तच्च मलमासविचारे स्फुटी[2]भविष्यति। सौरेषु ऋतुषु मीनादित्वं मेषादित्वञ्च वैकल्पिकम्।

तदाह वृद्धगार्ग्यः,—

मीनमेषौ रविर्यावत् वसन्तस्तदद्देव हि।

वशिष्ठः,—

यावन्मेषवृषौ भानु र्वसन्तस्तावदिष्यते। इति

उभयोर्विकल्पः, तदनुसारेण ग्रीष्माद्योऽपि यथायथं विकल्प्यन्ते। ऋतूनां विनियोगस्तु श्रुत्याद्यवगतः, तथाच श्रुतिः, वसन्ते ब्राह्मणः अग्नीनादधीत,[3] ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीतेत्यादि। स्मृतिस्तु, वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमित्यादि।

विष्णुधर्मोत्तरे,—

षण्मूर्त्तिव्रते षट्सु वसन्ताद्यृतुषु पृथक् पृथक् पूजाविशेषा उक्ताः। तथा वसन्ते स्नानानुलेपनादि दानं, एवमन्यचाप्युदाहार्य्यम्।

इत्यृतुनिर्णयः ॥

---

(१) मलमासो दृश्यते। (२) स्फुटी। (३) अग्नीन्यादधीत।

अथ मासाः। मासिति सान्तं चन्द्रवाचकं प्रातिपदिकं तस्यायमिति सम्बन्धार्थे अण्[१] मासः, एवं सति चान्द्र एव मासो मुख्यः, अन्यत्र गौणः, सर्व्वेषां साधारण्याय अर्थान्तरमुच्यते, मसी परिमाणे इति धातोर्निष्पन्नोऽयं मासशब्दः, मास्येते परिमीयेते यावता कालेन चन्द्रवृद्धिचयौ, स चान्द्रमासः, चन्द्रवृद्धिक्षयाभ्यां स्वयं मस्यत इति वा मासः। तथाच

[२]सिद्धान्तशिरोमणौ,—

मास्यन्ते परिमीयन्ते स्वकालवृद्धिहानितः ।
तस्मादेते स्मृता मासा त्रिंशत्तिथिसमन्विताः ॥

सूर्य्यस्य राशिगतिर्यत्र परिमीयते स सौरो मासः । अहोरात्राणां त्रिंशत्सङ्ख्या यत्र परिमीयते स सावनो मासः ।

तथाच ब्रह्मसिद्धान्ते,—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः ॥

भास्करस्यायमिति भास्करः सौरः। नक्षत्राणां सप्तविंशतिसङ्ख्या परिमीयतेऽनेनेति नाक्षत्रो मासः ।

तदुक्तं विष्णुधर्म्मोत्तरे,—

सर्व्वर्क्षपरिवर्त्तैस्तु नाक्षत्रो मास उच्यते ।

तथाच चान्द्रसौरसावननाक्षत्राश्चतुर्विधा मासाः। तत्र सौरमा-

---

(१) अथवा मासः ।　　(२) तर्कसिद्धान्तशिरोमणौ ।

सस्य आद्यन्तौ मेषादिराशीनामाद्यन्ताभ्यां व्यवस्थितः। सावनेष पुरु-षेच्छादिनियामकः[1]। चान्द्रो द्विविधः दर्शान्तः पूर्णिमान्तश्चेति।

दर्शान्तत्वे लघुहारीतः,—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।

अग्निषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ। इति

दर्शपौर्णमासयाजिना शुक्लप्रतिपदि दर्शेष्टिदैवते इन्द्राग्नी हूयेते, पौर्णमासे अग्निषोमौ इष्टिदैवते[2] हूयेते। दर्शे पिण्डपितृयज्ञे पितृसोमकौ देवौ इति दर्शान्तो मासः।

पूर्णिमान्तत्वे तु महालयप्रकरणे स्मर्य्यते,—

अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्य्यं दिने दिने। इति

दर्शान्तत्वे तु भाद्रकृष्णपक्ष इत्युक्तं स्यात्। तस्मात् दर्शान्त पौर्णमास्यन्तत्वयोः समो विकल्पः। अनुष्ठानन्तु क्वचित् वचन-विशेषात् शिष्टाचाराद्वा व्यवस्थितम्।

यत्तु ब्रह्मसिद्धान्ते,—

अमावास्यापरिच्छिन्नो मासः स्यात् ब्राह्मणस्य तु।

सङ्क्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः॥

इत्युक्तं तत्कर्मविशेषे बोध्यं।

यथा विष्णुपुराणे,—

माघासिते पञ्चदशी कदाचित् उपैति योगं यदि वारुणेन।

इति शतभिषायुक्तमाघदर्शे यत् श्राद्धं विहितं तद् ब्राह्मणस्याधिक-

---

(१) गाछत्वे नक्षत्रं नियामकं। (२) देवते।

फलदमिति । एवं चचविशेः सौरपौर्णमास्यन्तमासयोरुदाहार्थम् । तेन सर्व्वकर्म्मसु सामान्यतः सर्व्वेषामपि पौर्णमास्यन्तमासो ग्राह्यः । तस्य मुख्यत्वादाचाराच्च । चान्द्रमासानां चैत्रादिसंज्ञा नचत्रप्रयुक्ता। तथाच, चित्रायुक्ता पौर्णमासी चैत्री साऽस्मिन् मासे अस्ति इति चैत्रो मासः। दर्शान्त-चान्द्रेऽपि मध्ये तादृशपौर्णमासीसत्त्वात् चैत्रादिसंज्ञाप्यविरुद्धा, एवं वैशाखादिष्वूह्येयम् । तत्र चित्राविशाखादियोगस्योपलक्षणत्वात् तत्प्रत्यासन्नस्वात्यनुराधादियोगोऽप्यविरुद्धः । तदुक्तं,

ज्योतिःशास्त्रे,—

चित्रादिचितयं चैत्रश्रावणान्तेषु पञ्चसु ।
वारुणादिचयं भाद्रेऽथाश्विने रेवतीचिकम् ॥
ऊर्ज्जादिमाघान्तेषु स्यात् कृत्तिका रोहिणी तथा ।
फाल्गुने पूर्व्वफाल्गुन्यादिचयन्तु मयोजकम्[१] ॥

तत्र सामान्यतः कर्त्तव्यानि । श्रुतेः, मासि मासि वोऽशनं वा पितॄणाम् ।

तथा स्कान्दे,—

एकभक्तेन यो देवि मासं मार्गं क्षिपेन्नरः ।

इत्यादि व्रतानि, एवं माघमासादिषु तिलदानादीनि विष्णुधर्म्मोत्तराद्युक्तानि । कर्म्मविशेषेषु मासविशेषाणां प्राशस्त्यं, यथा,—

आभ्युदये रवेर्मानं चन्द्रस्य पितृकर्म्मणि ।
यज्ञे सावनमित्याहु र्व्वचमृचमतेषु च ॥

---

(१) प्रयोजनं ।

आभ्युदये विवाहादौ।

पाद्मे,—

देवव्रत-वृषोत्सर्ग-चूड़ाकरण-मेखलाः।

सौरमानेन कर्त्तव्या अभिषेकस्तथाब्दिकः॥

व्यासः,—

सूतकादिपरिच्छेदो दिनमासाब्दगास्तथा।

मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता॥ इत्यादि

इति शुद्धमासनिर्णयः। मलनिर्णयस्तु अशुद्धकालप्रकरणे लेख्यः।

अथ मासकृत्यानि। यद्यपि महाभारतादिषु मार्गशीर्षादित्वेन तत्कृत्यानि लिखितानि तथापि चैत्रस्य सृष्ट्यादिमत्त्वात् तमारभ्य लिख्यते।

तथाच ब्राह्मे,—

चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि।

शुक्लपक्षे समग्रन्तु तथा सूर्य्योदये सति॥

प्रवर्त्तयामास तदा कालस्य गणनामपि।

ग्रहान् नागानृतून् मासान् वत्सरान् वत्सराधिपान्॥ इति।

चैत्रमासकृत्यं, महाभारते,—

चैत्रन्तु नियतो मासमेकभक्तेन यः क्षिपेत्।

सुवर्णमणिमुक्ताढ्ये कुले महति जायते॥

मासव्रतादिकमस्मद्देशे पूर्णिमान्त[1] एव कुर्व्वन्ति।

---

(१) पूर्णिमान्तमास एव।

ब्राह्मे कार्त्तिकपूर्णिमान्तमुक्त्वा,—

मार्गशीर्षस्य मासस्य प्रारम्भे प्रतिपद्यपि ।

नववर्षसमारम्भो देवैः कृतयुगे कृतः ॥ इति ।

पूर्णिमान्तस्य मासस्य[१] मुख्यत्वेन कल्पितत्वादिति दिक् । तत्र वक्ष्यमाणे मध्याह्नरूपैकभक्तकाले मासादिप्रतिपत्तिथेरुभयदिनगामित्वे उत्तरदिने व्रतारम्भः कार्य्यः[२] ।

तथाच स्मृतिः,—

मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत् ।

तत्रोत्तरोत्तमा ग्राह्या पूर्व्वा तु स्यात् मलिम्लुचः ॥

मासादितिथेर्वर्षादितिथेश्च द्वैधे यत् कर्म्मारभ्यं तत्कर्मयुक्तकालस्य दिनद्वये सम्भवे इत्यर्थः । सर्व्वकर्म्मारम्भे सङ्कल्प आवश्यकः ।

तथाच भविष्ये,—

सङ्कल्पेन विना विप्र यत्किञ्चित् कुरुते नरः ।

फलञ्चाल्पाल्पिकं तस्य धर्म्मस्यार्द्धक्षयो भवेत् ॥

शुक्तिशङ्खाश्महस्तैश्च कांस्यरूप्यादिभिस्तथा ।

सङ्कल्पो नैव कर्त्तव्यो मृन्मये च कदाचन ॥

गृहीत्वौदुम्बरं पात्रं वारिपूर्णं गुणान्वितम् ।

दर्भत्रयं साग्रमूलं फलपुष्पाक्षतान्वितम् ॥

जलाशयारामकूपे सङ्कल्पे पूर्व्वदिङ्मुखः ।

साधारणे चोत्तरास्ये ऐशान्यां निक्षिपेत्पयः ॥

---

(१) पूर्णिमान्तमासस्य ।  (२) व्रतारम्भः ।

ताम्रपात्रस्य अत्यन्तासम्भवे जलमात्रं[1] गृहीत्वा तत्करणम्।

गृहीत्वौदुम्बरं पात्रं वारिपूर्णं गुणान्वितम्।

उपवासन्तु गृह्णीयात् यद्वा वार्य्यैव धारयेत्॥ इति वाराहोक्तेः।

पौर्णमास्युल्लेखेन शुक्लपक्षोक्ते वैयर्थ्येऽपि

मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्व्वशः।

उल्लेखनमकुर्व्वाणो न तस्य फलभाग् भवेत्॥ इति भविष्योक्तेः पक्षोल्लेखः कार्य्य एव।

एवं कृष्णपक्षामावास्ययोरुल्लेखः।

व्रतमारभ्यासमापने दोषः।

परिगृह्य व्रतं सम्यगेकादश्यादिकं नरः।

न समापयते तस्य गतिः पापीयसी भवेत्॥ इति विष्णुरहस्योक्तेः[2]। आपदि तु जलादौनां न व्रतघ्नत्वं।

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः।

हवि ब्राह्मणकाम्या च गुरोर्वचनमौषधम्॥ इतिशास्त्रात्।

सर्व्वभूतभयं व्याधिः प्रमादो गुरुशासनम्।

अव्रतघ्नानि चोच्यन्ते सकृदेतानि शास्त्रतः॥ इति भविष्योक्तेश्च।

अथ वैशाखमासकृत्यम्।

भारते,—

निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः।

---

(१) जलपात्रं। (२) रहस्योक्तेः।

नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् ॥

स्कान्दे धनदत्तमण्युक्तम् ।

पाद्मे च,—

य: परित्यज्य वैशाखं व्रतमन्यदुपाचरेत् ।
स्वकरस्थं महारत्नं हित्वा लोष्ठं हि याचते ॥
अवैशाखी भवेत्पापी विप्रः श्रौतपरोऽपि च ।

तथाच,—

वक्ष्यमाणसंयोगपृथक्त्वन्यायेनेदं व्रतं नित्यं काम्यञ्च ।

पुनः पाद्मे,—

वैशाखं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन् हविष्यभुग् दान्तः सर्व्वपापैः प्रमुच्यते ॥
तीर्थे चानुदिते स्नानमिति च ।

तथा,—

माधवं सकलं मासं तुलस्या योऽर्च्चयेन्नरः ।
त्रिसन्ध्यं मधुहन्तारं नास्ति तस्य पुनर्भवः ॥

मात्स्ये,—

वैशाखे पुष्पलवणे वर्जयित्वाथ गोप्रदः ।
भूत्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह ॥

गोदानं मासान्ते । पुष्पलवणवर्जनस्य निषेधरूपत्वात् "निषेधः कालमात्रके" इत्युक्तेः वैशाखमासप्रवेशमारभ्यैव कार्य्यत्वं । इदं पुष्पवर्जनं देवार्चनकालीननिर्माल्यपुष्पेतरपरं, तद्ग्रहणस्य पूजाङ्गत्वेन विहितत्वात् ।

तत्स्नानमन्त्रः। पाद्मे,—

वैशाखं सकलं मासं मेषसङ्क्रमणे रवेः।
प्रातः सुनियतः स्नास्ये प्रीयतां मधुसूदनः॥
मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात्।
निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम्॥
माधवे मेषगे भानौ मुरारे मधुसूदन।
प्रातःस्नानेन मे नाथ फलदो भव पापहा॥

एतत् काम्यप्रातःस्नानं नित्यप्रातःस्नानोत्तरं सन्ध्यातः पूर्व्वमेव कार्य्यम्। प्रातःस्नायी अरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायादिति विष्णुस्मृतौ सर्व्वसाधारण्येन काम्यनित्यस्नानोद्देशेनारुणोदयकालविधानात्[१]। प्रातःस्नानस्य देहशुद्धिद्वारा कर्म्माधिकारसम्पादकत्वात् काम्यस्य स्नानान्तरस्य प्रातःस्नानानन्तरमेव काल इति कालभेदसम्भवाच्च न नित्यकाम्ययोस्तन्त्रेणानुष्ठानम्॥

ननु सन्ध्याया अकरणे सर्व्वकर्म्मानर्हत्वात् सन्ध्योत्तरं काम्यं प्रातःस्नानमिति चेत् न। सन्ध्यायाः सूर्य्योदयावधिकत्वात् सूर्य्योदयोत्तरकालीनकर्म्मणामेव सन्ध्योत्तरत्वाधिकारसम्पादकत्वात्॥

ननु सूर्य्योदयात् पूर्व्वं सन्ध्यां समाप्य काम्यं स्नानं कर्त्तव्यमिति चेन्न। सूर्य्योदयावधिजपरूपसन्ध्याबाधापत्तेः सन्ध्यावसाने काम्यप्रातःस्नानं कार्य्यमिति वाक्याभावाच्च॥

ननु "न वासोभिः सहाजस्रम्" इति अजस्रस्नानस्य मनुना

---

(१) काम्यनित्यप्रातःस्नानोद्देशेनारुणोदयकालविधानात्।

निषिद्धत्वात् कथं बङ्गस्नानमिति चेत् न। तस्य याद्दच्छिकस्नानत्वेन निर्णयादित्यलमतिविस्तरेण(१)। एवं माघादिकाम्यप्रातःस्नानेष्वपि बोध्यम्॥ यत्तु,—

तुलायां मकरे मेषे प्रातःस्नानं तिलैः सह।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम्॥

इति भारते उक्तम्। तत्तिलसहितस्नानपूर्वकं काम्यं व्रतान्तरम्॥

यत्तु, पाद्मे नारदेनोक्तम्,—

मधुमासस्य शुक्लायामेकादश्यामुपोषितः।
पञ्चदश्याञ्च भो वीर मेषसंक्रमणेऽपि च॥
वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया।
मधुसूदनमभ्यर्च्य कुर्य्यात् सङ्कल्पपूर्व्वकम्॥

इति। तत्र व्यवस्थितो विकल्पः। तथाच, वैष्णवानां कार्त्तिकव्रतवच्चैत्रशुक्लैकादश्यामारम्भपक्षः। स्वस्य वैष्णवत्वादादौ तदुद्देशः कृतः। व्रतस्यास्य वैष्णवानामावश्यकत्वमिति हरिभक्तिविलासादौ लिखितम्। क्षत्रियाणां संक्रमणाद्यारम्भः। तेषां सौरमासेऽधिकफलप्राप्त्युक्तेः। ब्राह्मणानां वैश्यानाञ्च चान्द्रमास एवाधिकारात् पौर्णमास्यादिपक्षः। शूद्राणामप्ययं पक्षः। "शूद्रा वाजसनेयिनः" इति आपस्तम्बोक्त्या तेषां सर्व्वकर्म्मसु वाजसनेयिसमाचरणात् इति व्यवस्था॥

ननु वक्ष्यमाणचातुर्म्मास्यव्रतवत् अत्रापि एकादश्यादिपक्षाणां सर्व्वसाधारण्यमस्तु इति चेन्न। तत्र सर्व्वेषामेव पक्षाणां "द्वादश्यांमेव

---

(१) विस्तरेण तत्र।

पारणम्" इति सर्व्वसाधारणस्य वाचकत्वात् तथाचारात्। अत्र तु तादृशवाक्याभावात् तथाचाराभावाच्च॥

अथास्मत्पितृचरणाः, चैत्रपौर्णमास्युपादानमपि अस्य व्रतस्य पौर्णमास्यन्तमासाभिव्यञ्जकम्, व्रतन्तु वैशाखकृष्णप्रतिपदाद्येवेत्याहुः॥

केचित्तु, पौर्णमास्युपादानं सङ्कल्पपरमिति, तदपि युक्तम्। प्रातः प्रतिपदि सन्ध्यातः पूर्वं कर्म्मण्यनधिकारात् सङ्कल्पकरणस्यानुचितत्वात्। सन्ध्योत्तरं सङ्कल्पकरणे तु "वैशाखं सकलं मासम्" इत्युक्तस्य साकल्यस्य बाधापत्तिरिति। अतो मासादितिथे द्वैधे उत्तरविद्धाया ग्राह्यत्वेऽपि एतद्वचनबलात् पूर्वविद्धा ग्राह्या। एवं माघादिमासेऽपि[1] बोध्यम्॥ सङ्कल्पवाक्ये तु अद्य चैत्रपौर्णमास्यामित्याद्युक्त्वा श्वः प्रातरारभ्य वैशाखपौर्णमासीपर्य्यन्तं वैशाखव्रतमहं करिष्ये इति विशेषः। केवलस्नानपक्षे तु वैशाखस्नानमहं करिष्ये इति॥

अत्र जपस्त्विति सामान्येनोक्तत्वात् सङ्ख्यानुक्तौ शतं सहस्रमयुतं वेति सिद्धान्तितत्वात् शतसंख्यकजपेनापि पापक्षयात् शतजपेऽपि व्रतसिद्धिः। शक्तौ तु प्रत्यहं सहस्रजपोऽत्यन्ताशक्तौ मासेन लक्षजपः कार्य्यः। जपोऽयं वहिर्जपविधिना कार्य्यः। स जपविधिरस्मत्कृते आचारसारे द्रष्टव्यः॥ स्त्रीशूद्रयोस्तु स्नानम्,—

सह्याचक्रविशाञ्चैव मन्त्रवत् स्नानमिष्यते।
तुष्णीमेव हि शूद्रस्य स्त्रीणाञ्च कुरुनन्दन॥

---

(१) माघमासेऽपि।

इति महाभारतोक्तेरमन्त्रकमत्रापीति न शङ्कनीयम्। अत्र मन्त्रशब्दस्य वैदिकमन्त्रपरत्वात्। प्रकृते तु मन्त्रशब्दस्य पौराणिकत्वेन स्मार्त्तत्वात् स्त्रीशूद्राणामप्यधिकारः। आचारोऽपि तथैव। एतद्विचारः श्राद्धप्रकरणे वक्ष्यते॥

अथ हविष्यद्रव्याणि। भविष्योत्तरे,—

हैमन्तिकं सिताखिन्नं धान्यमुद्गास्तिला यवाः।
कलायकन्दुनीवारा वास्तुकं हीडमोचिका॥
कालेयं कालशाकञ्च मूलकं केमुकेतरत्।
कन्दं सैन्धवसामुद्रे लवणे दधिसर्पिषी॥
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी।
पिप्पली जीरकञ्चैव नागरं तिन्तिड़ीफलम्॥
कदली लवली धात्री फलान्यगुड़मैक्षवम्।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते॥

छन्दोगपरिशिष्टे,—

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः।
माषकोद्रवगौरादीन् सर्व्वालाभेऽपि वर्ज्जयेत्॥

मात्स्ये— कलायाश्चणका मुद्गा मिथुनानां हवींषि च।
एतेभ्योऽन्यानि नाश्नीयात् मिथुनानामनापदि॥

अगस्त्यसंहितायाम्,—

नारिकेलफलञ्चैव कदलीं लवलीं तथा।
आम्रमामलकञ्चैव पनसञ्च हरीतकीम्॥
मतान्तरे प्रशस्तञ्च हविष्यं मन्यते बुधः॥

हैमन्तिकं हेमन्तपक्वं शाल्यपरनामकं। मुद्गाः स्थूलमुद्गव्यतिरिक्ताः, स्थूलमुद्गानां सामान्यतोऽप्यभक्ष्यत्वात्। "निष्पावा आढ़का मुद्गा" इति वक्ष्यमाणस्कान्दोक्तौ मुद्गस्य हविष्यत्वाभावोऽपि स्थूलमुद्गपर एव। अन्यथा वक्तवाक्यप्रतिपादितं मुद्गहविष्यत्वं व्याहतं स्यात्। कालेयं तिक्तशाकविशेष इति वृद्धाः। कन्दं शूरणादि। पयोदधिघृतानि गव्यान्येव।

अमाहिष्यं तथा सर्पिर्दधिक्षीरमथापि वा।
एतद्व्रतं[1] मतं विप्रा मैथुनस्य विपर्य्ययः॥

इति विष्णुधर्मोत्तरोक्तेः। पनसं दाक्षिणात्यप्रसिद्धभूमीतफलकं पनसव्यतिरिक्तम्। हरीतकी वन्यैव। भूमीतफलकपनसस्य ग्राम्यहरीतक्याश्च सामान्यतोऽप्यभक्ष्यत्वात्। जीरकमपश्च[2] शुक्लजीरकं, कृष्णजीरकस्य आद्धेऽपि निषेधात्। नागरं शुण्ठी तस्य आर्द्रकप्रकृतिकत्वात् आर्द्रकस्य हविष्यत्वमिति आचार्य्याः। ऐक्षवपदेन इक्षुरस एव ग्राह्यः। खण्डादीनां गुडप्रकृतिकत्वात् गुडत्वम् इत्यस्मत्पितामह-कृष्णदेवतपण्डितादीनामाग्रहः॥ वस्तुतस्तु यथा इक्षुरसस्य पाके गुडत्वं तथा गुडस्य पुनःपाकेन खण्डादित्वमिति हविष्यत्वमेव। शिष्टाचारोऽपि तथैव दृश्यते। व्रीहिः शरत्पक्वधान्यम्। गौराः श्वेतसर्षपाः। "मुख्यालाभे प्रतिनिधिरपि शास्त्रार्थः" इति प्रतिनिध्यधिकरणन्यायेन प्राप्तान् माषकोद्रवगौरादीन् वर्ज्जयेदित्यर्थः। मिथुनानां द्विदलानां मध्ये कलायचणकाः खुडि-

(१) मतं। (२) जीरकमश्च।

याचणा इति प्रसिद्धा हविष्याः। हविष्यनिषेधं प्रक्रम्य "वर्त्तुला-·श्चणकाश्चापि" इति स्कान्दोक्ते, हृहच्चणकादीनां निषेध इति केचित्। बहवः स्थूलकलायचणकयोः[१] पार्थक्यं। चणकम्कोला इति देशान्तरीयः। कलायो वर्त्तुलकलायः इति नानाविध-संशयात् अस्मद्देशचणकवाच्यानां देशान्तरवाच्यकोलानामप्युभयो र्नैव हविष्यत्वमिति वदन्ति। इति परिगणनपक्षो बहुग्रन्थकाराणां सम्मतः॥ हविर्योग्यं हविष्यमिति विज्ञानेश्वरः[२]। कल्पतरु-कारास्तु मधुमाषमांसेतरश्राद्धदेयं हविष्यमित्याहुः। तदनुया-यिनस्तु हविष्यदेयेष्वपि[३] विविच्यागणयन्। तथाच वेशवार-हिङ्गुमरीचादीनां व्यञ्जनसंस्कारकत्वेनोपात्तत्वात् न तेषां हवि-ष्यत्वम्॥ भविष्योत्तरादिगणितद्रव्येभ्योऽधिकहविष्याणि, यथा,—

गोधूमश्यामाकप्रियङ्गवो धान्यानि। सुखाग्निकाख्यकर्कटीभेद-पटोलतिन्दुकखर्जूराम्रातककर्म्मरणा इति प्रसिद्धफललकुचहहदरी-वैकङ्कतदाड़िमहहतीफलानि। मध्यालुकशालूककसेरुविदारीशता-वरीतालमूलीफलालूव्यतिरिक्तसर्व्वालुभेददीर्घमूलकानीति मूलानि। पालङ्क्यखदिरतुलसीतण्डुलीयकसर्षपपिप्पलीकुष्माण्डवार्त्ताकु[४]काक-जङ्घाकुसुम्भभूस्तृणकफेलुवर्जितानि शाकानि। सर्व्वगव्यविकाराः। वेचाङ्कुरं कर्पूरं लाजाश्चेति॥ एतद्द्रव्याणां हविष्यत्वादिविवेकः श्राद्ध-प्रकरणे लेख्यः॥

---

(१) बहव कलायचणकयो। (२) हविर्योग्यं हविष्यं स्यात्।
(३) श्राद्धदेयेष्वपि। (४) वार्त्ताकी।

ननु मधुमाषमांसानां श्राद्धदेयत्वेन हविष्यत्वमिति चेन्न। माषमसूरमधुमांसपरान्नमैथुनानि व्रतेऽहनि वर्जयेदिति वाक्यात्, माषस्य हविष्यप्रतिनिषिद्धत्वनिषेधाच्च ॥

यदा वैशाखपौर्णमासी परदिने जपादिकालव्यापिनी तदा परदिने जपादिमासकृत्यं[1] कार्य्यम्, "कर्म्मणो यस्य यः कालः" इति वृद्धयाज्ञवल्क्योक्तेः। हविष्यभोजनस्य तु हविष्येतरभोजन-निवृत्तिरूपत्वात्। "निषेधः कालमात्रके। निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते"॥ इति वृद्धगार्ग्योक्तेः। एकभक्तकाले पौर्णमास्य-भावात् हविष्याकरणेऽपि न व्रतहानिः॥ एवं कार्त्तिकाद्येक-भक्तादिषु बोध्यम् ॥

---

अथ ज्यैष्ठमासकृत्यम्।

भारते,—ज्येष्ठामूलन्तु यो मासमेकभक्तेन संक्षिपेत्।
ऐश्वर्य्यमतुलं श्रैष्ठ्यं पुमान् स्त्री वाभिविन्दते ॥

श्रैष्ठ्यमिति ज्ञातीनामिति शेषः "ज्ञातीनां भवति श्रेष्ठः" इति स्कान्दोक्तेः।

---

अथ आषाढ़मासकृत्यम्।

भारते,—आषाढ़मेकभक्तेन स्थित्वा मासमतन्द्रितः।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते।

---

(१) तदा जपादिवैशाखमासकृत्यं कार्य्यम्।

अथ श्रावणमासकृत्यम् ।

भारते,—श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् ।

यत्र तत्राभिषेकेण पूज्यते ज्ञातिवर्द्धनः ॥

---

अथ भाद्रमासकृत्यम् ।

भारते,—प्रौष्ठपदं तु यो मासमेकाहारो भवेन्नरः ।

गवाढ्यं स्फीतमतुलमैश्वर्य्यं प्रतिपद्यते ॥

एकाहार इति एकभक्तागी ।

---

अथ आश्विनमासकृत्यम् ।

भारते,— अथैवाश्वयुजं मासमेकभक्तेन यः क्षिपेत् ।

मृजावान् वाहनाढ्यश्च बहुपुत्रश्च जायते ॥

मृजा शुद्धिः ॥

---

अथ कार्त्तिकमासकृत्यम् ।

भारते,—कार्त्तिकन्तु नरो मासं यः कुर्य्यादेकभोजनम् ।

शूरश्च बहुभार्य्यश्च कीर्त्तिमांश्चैव जायते ॥

स्कान्दे, अश्वमेधफलप्राप्तिर्वह्निलोकफलप्राप्तिश्चोक्ता ।

नारदीयपुराणे,—

एकभक्तेन नक्तेन तथैवायाचितेन च ।

कृते व्रते धराप्राप्तिर्जायते दीपमालिनी ॥

इति केवलैकभक्तादिके फलम् ॥

सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते ।
क्रियमाणे व्रते नॄणां स्वल्पेऽपि च महाफलम् ॥
इति विष्णुरहस्ये यत्किञ्चित्व्रतमात्रेऽपि फलम् ।
अव्रतेन क्षिपेद्यस्तु मासं दामोदरप्रियम् ।
तिर्य्यग्योनिमवाप्नोति सर्व्वधर्म्मबहिष्कृतः ॥
इति नारदीयोक्तः यत्किञ्चित्व्रताकरणे दोषः ॥
नारदीये,— न कार्त्तिकसमो मासः न कृतेन समं युगम् ।
न वेदेन समं शास्त्रं न तीर्थं गङ्गया समम् ॥
तथा,— मांसाशिनोऽपि भूपाला अत्यर्थं[१] मृगयारताः ।
ते मांसं कार्त्तिके त्यक्त्वा गता विष्णालयं शुभम् ॥
तथा,— न मात्स्यं भक्षयेत् मांसं न कौर्म्मं नान्यदेव हि ।
चण्डालो जायते राजन् कार्त्तिके मांसभक्षणात् ॥
स्कान्दे,— दुष्प्राप्यं प्राप्य मानुष्यं कार्त्तिकोक्तव्रतेन हि ।
धर्म्मं धर्म्मभृतां श्रेष्ठ स मातृपितृहा[२] भवेत् ॥
स ब्रह्महा स गोघ्नश्च स्वर्णस्तेयी सदानृती ।
न करोति मुनिश्रेष्ठ यो नरः कार्त्तिके व्रतम् ॥
विधवा च विशेषेण व्रतं यदि न कार्त्तिके[३] ।
करोति मुनिशार्द्दूल नरकं याति दारुणम् ॥
तथा,— यतिश्च विधवा चैव विशेषेण वनाश्रमी ।

(१) अत्यन्तम् । (२) मातृपितृघातकः ।
(३) व्रतं या न तु कार्त्तिके ।

कार्त्तिके नरकं यान्ति अकृत्वा वैष्णवं व्रतम् ॥

एवं गृहस्थस्याप्यन्ये बहवो दोषा प्रकरणे उक्ताः ॥

तथा,— न गृहे कार्त्तिकं कुर्यात् विशेषेण तु कार्त्तिकीम् ।
क्षेत्रे तु(१) कार्त्तिकीं कुर्यात् सर्व्वयत्नेन भाविनि ॥

नन्दीपुराणे,— यो नरः कार्त्तिकं मासं मांसं तु परिवर्ज्जयेत् ।
संवत्सरस्य लभते पुण्यं मांसस्य वर्जनात् ॥

असामर्थ्ये शुक्लपक्षेऽपि मांसं वर्ज्यम् ।

कौमुदं तु विशेषेण शुक्लपक्षं नराधिप ।
वर्जयेत् सर्व्वमांसानि धर्म्मो ह्यत्र विधीयते ॥

इति वाक्यात् । कौमुदं कार्त्तिकम् ।

तत्राप्यसामर्थ्ये भीष्मपञ्चके मत्स्यमांसादिकं वर्ज्यम् । तेनात्र मांसवर्जनं नित्यं काम्यञ्च ॥

नारदीये,— कार्त्तिके वर्जयेत्तैलं, कार्त्तिके वर्जयेन्मधु ।
कार्त्तिके वर्जयेत् कांस्यं, कार्त्तिके शुक्ति सन्धितम् ॥

कार्त्तिके वर्जयेत् स्त्रियमिति क्वचित् चतुर्थपादे पाठः । सन्धितं आसवादि ।

काशीखण्डे,— ऊर्जे यवान्नमश्नीयादेकान्नमथवा पुनः ।
वृन्ताकं शूरणं चैव शूकशिम्बीञ्च वर्जयेत् ॥

शूरणं ओल इति ख्यातम् ।

नारदीये,— आमिषं मैथुनञ्चैव कार्त्तिके यस्तु वर्जयेत् ।

---

(१) तीर्थेषु ।

सर्व्वकालकृतं पापं दुष्कृतं वापि नश्यति॥

विष्णुः,— कार्त्तिकोऽग्निदैवत्योऽग्निश्च देवानां मुखं तस्मात् कार्त्तिके मासि वहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी संवत्सरकृतात् पापात् मुक्तो भवति॥ पुनः स एव,—

कार्त्तिकं सकलं मासं वहिःस्नायी जितेन्द्रियः।

जपन् हविष्यभुग्दान्तः सर्व्वपापैः प्रमुच्यते॥ इति।

अत्र कल्पतरुकाराः आवश्यककृत्यान्तरवर्जिते काले कार्त्तिके वहिःस्नानं प्रातःकालेतरकालेऽपि प्रकरणान्तराधिकरणन्यायेन काम्यं स्नानान्तरम्। यत्तु, "प्रातःकालो मुहूर्त्तांस्त्रीन्" इति मात्स्यादावुक्तं, तच्छ्राद्धादिविषयमिति। अतएव, शिष्टास्तदनुसारेण दिवसे यदा कदापि कार्त्तिकव्रतकाम्यस्नानं कुर्व्वन्ति। वहिःस्नायी प्रातःस्नानादहिरित्यर्थापयन्ति। एतदेव विधिवाक्यमित्यपि वदन्ति। वहिर्नद्यादाविति केचित्॥

कार्त्तिकं सकलं मासमित्युक्तेर्मासादितिथिः पूर्व्वविद्धापि ग्राह्या। तस्मात् पूर्व्वदिवसमारभ्य व्रतस्यारम्भात्र प्रातःकाले काम्यस्नानप्राप्तिः॥

ननु,— कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन।

प्रीत्यर्थं तव देवेश दामोदर मया सह॥

इति मन्त्रलिङ्गात् प्रातःस्नानस्य प्राप्तिरिति चेन्न। वैशाखमाघयोस्तु प्रातःस्नानस्यावश्यकताभिप्रायेणैव चैत्रपौर्णमास्यां पुष्यपौर्णमास्यां च सङ्कल्पस्योक्तिर्नात्र तथोक्तेः। वैशाखे वाक्यमुक्तम्। माघे वक्ष्यते॥

ननु, मन्ते प्रातःशब्दस्य का गतिरिति चेत् उच्यते। "अहं सायं अहं प्रातः" इति प्राजापत्यकृच्छ्रादाविव प्रातःशब्दस्य दिवसपरत्वमित्यभियुक्ताः।

यदीच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान्।
कार्त्तिके सकले मासि प्रातःस्नायी भवेन्नरः॥

इति वाक्यस्य केवलस्नानपक्षे सावकाशत्वमिति केचित्। तथाचारस्य दर्शनात्। मन्ते मयेति लक्ष्म्या सह॥

ननु,— तुलामकरमेषेषु प्रातःस्नानं प्रशस्यते।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम्॥

इति राजमार्त्तण्डोक्तेः का गतिरिति चेदुच्यते। तत्[१] सौरमासत्रयात्मकमन्यदेव व्रतमिति पूर्वाचार्य्याः॥

ननु, एतदपि न साधु। मासत्रयस्य संहतत्वविवक्षायां "आकामावेषु यत्स्नानम्" इत्यादावपि पौर्णमासीचतुष्टयकालीनपृथक्स्नानविधानापत्तिः[२]। न तत् केषाञ्चिदपीष्टं। सौरमासोपादानं तुलादिपदोपादानादिति चेत् वाच्यम्। तर्हि "कन्यां गते सवितरि" इत्यादौ सौरमासोपादानादाश्विनमासि महालयश्राद्धं कथं स्यादिति चेत् सत्यं। राजमार्त्तण्डोक्तौ यत्प्रातःस्नानमुक्तं तत् केवलस्नानमभिप्रेत्यैव। अत एव प्रशस्यत इत्युक्तम्। "हविष्यं ब्रह्मचर्य्यञ्चेति" पुनर्यदुक्तं तत् यत्किञ्चिद्व्रताभिप्रायेण इति वाक्यद्वयं तत्॥

अतएव,— तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः।

---

(१) एतत्। (२) स्नानापत्ति।

हविष्यभुक् ब्रह्मचारी सर्व्वपापैः प्रमुच्यते ॥

इत्यादिवाक्यान्तरेऽपि पृथक्क्रियादर्शमुक्तम् ॥

किञ्च कार्त्तिकव्रताङ्गभावे यद्भीष्मपञ्चकमुक्तम्, तत्र प्रातःस्नानमुक्त्वा पुनः स्नानान्तरं तर्पणान्तरमुक्तमिति दिवसे यदा कदापि कार्य्यं स्नानान्तरमिति सिद्धम् ॥ अस्य स्नानस्य काम्यत्वा[१]त्तीर्थे करणम्। तदसम्भवे स्वकारिते पितृकारिते वा जलाशये अत्यन्तासम्भवे तु पञ्चपिण्डोद्धारणादिपूर्व्वकं परजलाशयेऽपि कार्य्यम् ॥ जलवर्द्धिष्णुरोगवता तु,—

आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः।
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा ॥

इति षट्त्रिंशन्मतोक्तेरुष्णजलेनापि स्नातव्यं। अस्य नित्यकाम्यत्वाद् यथाकथञ्चिन्निर्वाह्यत्वात्। एतत्सर्व्वमस्मत्कृते आचारसारे द्रष्टव्यम् ॥ स्नानोत्तरमर्घ्यदानम्। तत्र मन्त्रः,—

व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम।
गृहाणार्घ्यं मया दत्तं दनुजेन्द्रनिसूदन ॥
नित्यनैमित्तिके कृष्ण कार्त्तिके पापनाशने।
गृहाणार्घ्यं मया दत्तं राधया सहितो भवान् ॥
इति मन्त्रं समुच्चार्य्य योऽर्घ्यं मह्यं प्रयच्छति।
स यूपपूर्णपृथिवीदानस्य फलमश्नुते ॥

अत्र गायत्रीजपसंख्याया अनुक्तावपि सर्व्वपापक्षयार्थं लक्षजप-

---

(१) नित्यकाम्यत्वात्।

स्योक्तत्वात्तन्मासे लक्षजपः कार्य्यः। "सर्व्वपापैः प्रमुच्यते" इति लक्ष-
जपं प्रकृत्य विष्णुस्मृतेः। तत्रासामर्थ्ये प्रत्यहं सहस्रजपः कार्य्यः॥

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः।

महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते॥

इति मनूक्तेः। त्रिकं प्रणवव्याहृतिगायत्र्यात्मकम्। अत्र "गायत्री-
जपनिरत" इति निरतपदोपादानात् सहस्रजपान्न्यूनजपो न कार्य्यः॥
बहिर्ग्रामाद्बहिरिति बहवः। असम्भवे तु,—

जलान्ते चाग्न्यगारे च जले देवालयेऽपि वा।

गवां गोष्ठे पुण्यतीर्थे विद्धृचेत्येऽथवा गृहे॥

इत्युक्तेरनावृते गृहैकदेशेऽपि शिष्टा जपन्ति॥

स्कान्दे,—गवामयुतदानेन यत्फलं लभते खग।

तुलसीपत्रकैकेन तत्फलं कार्त्तिके स्मृतम्॥

विहाय सर्व्वपुष्पाणि मुनिपुष्पेण केशवम्।

कार्त्तिके योऽर्च्चयेद्भक्त्या वाजपेयफलं लभेत्॥

सायंसन्ध्याकालारम्भे आकाशदीपदानम्। विष्णुधर्म्मोत्तरे,—

आश्वयुज्यामतीतायां यावद्राजेन्द्र कार्त्तिकी।

तावत् दीपप्रदस्योक्तं फलं राजेन्द्र शाश्वतम्॥

तावत्कालं प्रयच्छन्ति ये तु दीपं सदा निशि।

तुङ्गे देशे बहिस्तेषां महत्पुण्यफलं भवेत्॥

अप्यन्धकारे गहने प्राकाश्यं तेन जायते।

प्राकाश्याद् यदुशार्द्दूल तेन यान्ति तथा सुखम्॥

ब्रह्माण्डे,—तुलायां तिलतैलेन सायंसन्ध्यासमागमे।

आकाशदीपं यो दद्यान्मासमेकं निरन्तरम्।
सश्रीकाय श्रीपतये स श्रिया न वियुज्यते॥

दीपदानमन्त्रः, शतानन्दसङ्ग्रहे,—

दामोदराय नभसि तुलायां लोलया सह।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे॥
इति मन्त्रेण यो दद्यात् प्रदीपं सर्पिरादिना।
आकाशमण्डले वापि स चाक्षयफलं लभेत्॥

लोलया लक्ष्म्या। एवञ्च तिलतैलगव्याज्ययोर्दीपदाने विकल्पः॥

ब्राह्मे तु,—अत्युच्चैर्दीपमाकाशं यो दद्यात् कार्त्तिके निशि।
सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति॥
चतुष्पथेषु रथ्यासु ब्राह्मणावसथेषु च।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च॥
विष्णुवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम्।
अग्निष्टोमसहस्रस्य फलं प्राप्नोति मानवः॥०॥

अथ भीष्मपञ्चकम्।

भविष्योत्तरे,—कार्त्तिके शुक्लपक्षस्य शृणु धर्मं पुरातनम्।
एकादश्यां समारभ्य विज्ञेयं भीष्मपञ्चकम्॥

तथा,— शाकाहारेण मुन्यन्नैः कृष्णार्च्चनपरैर्नरैः।
स्त्रीभिर्वा भर्तृवाक्येन कर्त्तव्यं सुखवर्द्धनम्॥
विधवाभिश्च कर्त्तव्यं पुत्रपौत्रविवृद्धये।
सर्व्वकामसमृद्ध्यर्थं मोक्षार्थमपि पार्थिव॥

इत्यादि विधिस्तत्रैव द्रष्टव्यः॥

विष्णुरहस्ये,—भीष्मेऐतत् यतः प्राप्तं व्रतं पञ्चदिनात्मकम् ।
सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् ॥

तथा,— व्रतस्यास्य गुणान् वक्तुं कः शक्तः केशवादृते ।

तथा,— कार्त्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः ।
एकादश्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् ॥
प्रातः स्नात्वा विधानेन मध्याह्ने च तथा व्रती ।
नद्यां निर्झरगर्ते वा समालभ्य च गोमयम् ॥
यवव्रीहितिलैः सम्यक् प्रकुर्य्यात्तर्पणं क्रमात् ॥ इत्यादि ।

ब्राह्मे,— एकादशीं समारभ्य राका यावत् प्रबोधने ।
वकोऽपि तत्र नाश्नीयान्मत्स्यं मांसञ्च किञ्चन ॥

तेन मत्स्यादिकं सर्व्वथा न भक्ष्यम् ॥ अतएव वकपञ्चकमिति प्रसिद्धिः ॥ इति कार्त्तिकव्रतं[१] अकरणे प्रत्यवायाद्युक्तेः फलश्रवणाच्च नित्यकाम्यम् । तच्चान्द्रमानेनैव ।

कार्त्तिकस्य तु यत् स्नानं माघे मासि विशेषत ।
कृच्छ्रादिनियमानाञ्च चान्द्रमानं प्रशस्यते ॥ इति पितामहोक्तेः ॥

चैतन्यदेवानुयायिगौड़वैष्णवैस्तु आश्विनशुक्लैकादश्यामारभ्य कार्त्तिकशुक्लैकादशीं यावद् व्रतमाचरन्ति तत्र शुक्लद्वादश्यां पारणे सम्यक् प्रमाणं न दृश्यते । इति तत्पक्षेऽपि पूर्णिमावधि व्रताचरणं समीचीनम् । तथाचारस्य श्रीपुरुषोत्तमक्षेत्रे श्रीजगन्नाथप्रासादे दर्शनात् । इति कार्त्तिकव्रतविचार. ॥

---

(१) इदं कार्त्तिकव्रतम् ।

अथ चातुर्मास्यव्रतम्।

भारते,—आषाढ़स्य सिते पक्षे एकादश्यामुपोषितः।

चातुर्मास्यव्रतं कुर्याद् यत्किञ्चिन्नियतो नरः॥

वाराहे,—आषाढ़शुक्लैकादश्यां पौर्णमास्यामथापि वा।

चातुर्मास्यव्रतारम्भं कुर्यात् कर्कटसंक्रमे॥

अभावेऽपि तुलार्केऽपि मन्त्रेण नियमं व्रती।

कार्त्तिके शुक्लद्वादश्यां विधिवत्तत् समापयेत्॥

चतुर्धापि हि तत् चीर्णं चातुर्मास्यव्रतं नरः।

तुलार्के कार्त्तिके। चीर्णं शुक्लैरिति शेषः। "चतुर्धा शुक्लैश्चीर्ण"मिति भारतोक्तेः। नारदीये,—

एकभक्तेन नक्तेन तथैवायाचितेन च।

कृते व्रते धरामाप्तिर्जायते दीपमालिनी।

भविष्ये,—यस्तु सुप्ते हृषीकेशे नक्तमाचरते व्रती।

वस्त्रयुग्मं नरो दत्वा विष्णुलोकस्य गच्छति॥

मात्स्ये,—आषाढ़ादिचतुर्मासं प्रातःस्नायी भवेन्नरः।

वाराहे,—चातुर्मास्यव्रतं कुर्यान्नरः किञ्चिन्महीपते।

नान्यथा लाब्दिकं पापं विनिहन्त्यप्रयत्नतः॥

पक्षचतुष्टयाशक्तौ तु स्कान्दे,—

अशक्तः कार्त्तिके मासि व्रतं कुर्यात् पुरोदितम्।

तत्रापि चेदशक्तः स्याद्भीष्मपञ्चकमुत्तमम्॥

पुरोदितं चातुर्मास्योक्तम्। एतेन चातुर्मास्यव्रतस्य नित्यत्वम्॥

तस्यारम्भमन्त्रो विष्णुरहस्ये,—

इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसन्ने त्वयि केशव ॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे म्रियाम्यहम् ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादात् जनार्द्दन ॥

उद्यापनमन्त्रोऽपि तत्रैव,—

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
नूनं सम्पूर्णतां यातु त्वत्प्रसादाज्जनार्द्दन ॥

चातुर्मास्यनियमाः स्कान्दे,—

मञ्चखट्वादिशयनं वर्जयेद्भक्तिमान्नरः ।
अनृतौ न व्रजेद्भार्यां मांसं मधु परौदनम् ॥
पटोलं मूलकञ्चैव वार्त्ताकीं नैव भक्षयेत् ।
अभक्ष्यं वर्जयेत् दूरान्मधुरं सितसर्षपम् ॥
राजमाषान् कुलुत्थांस्तथाणुधान्यञ्च वर्जयेत् ।
शाकं दधि पयो माषान् श्रावणादौ क्रमादिमान् ॥
राज-गोप-यतींस्त्यक्त्वा नारोहेच्चर्मपादुके ।
तैलाभ्यङ्गं दिवास्वप्नं मृषावादञ्च वर्जयेत् ॥

एतेनाच नृपगोपालयतीनां चर्मपादुकारोहणं न निषिद्धम् । हविष्यस्यापि दीर्घमूलकस्यात्र वर्जनम्, साक्षान्निषेधात् । केषाञ्चिन्मते पटोलस्यापि तथा ॥ मात्स्येऽच काम्यनियमाः,—

चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि ।
मधुस्वरो भवेन्नित्यं नरो गुड़विवर्जनात् ॥
तैलस्य वर्जनादेव सुन्दराङ्गः प्रजायते ।

लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन्॥
सदा मुनिः सदा योगी मधुमांसस्य वर्ज्जनात्।
निर्व्याधि नीरुगोजस्वी विष्णुभक्तश्च जायते॥
एकान्तरोपवासेन विष्णुलोकमवाप्नुयात्।
धारणान्नखलोम्नां वै गङ्गास्नानं दिने दिने॥
नमो नारायणायेति जप्त्वाऽनशनजं फलम्।
पादादिवन्दनाद्विष्णोर्लभेद् गोदानजं फलम्॥
एवमादिव्रतैः पार्थ तुष्टिमायाति केशवः॥

नात्र कालशुद्ध्यपेक्षा। तथाच गार्ग्यः,—
न शैशवं नैव मौढ्यं शुक्रगुर्वो र्न वा तिथेः।
खण्डत्वं चिन्तयेच्चातुर्मास्यव्रतविधौ नरः॥

एवञ्च सति,—
अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे।
उद्यापनमुपारम्भं व्रतानां नैव कारयेत्॥

इति वृद्धगार्ग्यवाक्यं सामान्यत्वादितरव्रतविषयम्॥
याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्जयेत्।

इत्यपि विहितेतरविषयम्॥ तथाचात्र कर्त्तव्याकर्त्तव्यविषये अस्मत्कृतशुद्धिसारकारिका तत्साहचर्य्यव्याख्या च अशुद्धकालप्रकरणे लेख्याः॥ तत्र श्रीभुवनेश्वरक्षेत्रे निवासफलं शिवपुराणे,—
चातुर्मास्यं नरस्तत्र कृत्वा शिवपरायणः।
राजसूयसहस्रस्य फलं प्राप्नोति नान्यथा॥

तत्र एकाम्रक्षेत्रे श्रीपुरुषोत्तमक्षेत्रे। तत्र निवासफलं ब्राह्मे,—

वार्षिकांश्चतुरो मासान् यस्तिष्ठेत् पुरुषोत्तमे ।
विहाय सर्व्वपापानि विष्णुलोकं स गच्छति ॥
पृथिव्यां यानि तीर्थानि क्षेत्राण्यायतनानि च ।
तिष्ठन्ति चतुरो मासान् क्षेत्रे श्रीपुरुषोत्तमे ॥
पुष्करिण्याश्च नद्याश्च वाप्यां कूपे सरित्सु च ।
तिष्ठन्ति सर्व्वतीर्थानि शयनोत्थापने हरेः ॥

स्कान्दे,— काश्यां बहुयुगे वासान्नियमव्रतसंस्थितेः ।
फलं यदुक्तं तद्विद्यात् क्षेत्रे श्रीपुरुषोत्तमे ॥
चातुर्मास्ये निवसतिः क्षेत्रे श्रीपुरुषोत्तमे ।
साक्षात् दृष्टिर्भगवतस्तद्वयं मोक्षसाधनम् ॥
दिने दिने महापुण्यं सर्वक्षेत्रनिवासजम् ॥

इत्यादि बहुफलानि विस्तरभयान्न लिखितानि ॥

यतीनां तु एकस्थानावस्थानादिचातुर्मास्यधर्म्माः श्रावणादि-मासद्वय एव। ऊर्द्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासः स्यादिति तद्धर्म्मेषु शङ्खोक्तेः ॥

एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥

इति काकटस्थमत्यन्तासक्तविषयम् ॥

---

अथ मार्गशीर्षमासकृत्यम् ।

भारते,— मार्गशीर्षन्तु यो मासमेकभक्तेन सङ्क्षिपेत् ।
भोजयेत्तु द्विजान् भक्त्या स मुच्येद्व्याधिकिल्बिषैः ॥

सर्वकल्याणसम्पन्नः सर्वौषधिसमन्वितः।
उपोष्य व्याधिरहितो वीर्य्यवानभिजायते॥
कृषिभागी बहुधनो बहुधान्यश्च जायते॥

---

अथ पौषमासकृत्यम्।

भारते,—पौषमासन्तु कौन्तेय भक्तेनैकेन यः क्षिपेत्।
सुभगो दर्शनीयश्च यशोभागी च जायते॥

---

अथ माघमासकृत्यम्।

भारते,—पितृभक्तो मघास्वेवं क्षिपेद्‌यस्त्वेकभोजनः।
श्रीमत्कुले ज्ञातिमांश्च[१] सुमहांश्चैव जायते॥
मघासु मघायुक्तपौर्णमासीके माघ इत्यर्थः। भविष्योत्तरे,—
दुर्लभो माघमासस्तु वैष्णवानामतिप्रियः।
देवतानामृषीणाञ्च मुनीनां सुरनायक॥

तथा,—माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ।
ब्रह्मघ्नं वा सुरापं वा कम्पतन्तं पुनीमहे॥

किञ्चिदभ्युदित इति प्रातःकालावधिरूपम्।
मकरस्थे रवौ माघे प्रातःकाले तथामले।
गोष्पदेऽपि जले स्नानं मोक्षदं पापिनामपि॥

इति पाद्मोक्तेः॥ भविष्योत्तरे,—
यो माघमास्युषसि सूर्य्यकराभितामे

---

(१) ज्ञातिमत्ति स महत्त्वं प्रपद्यते।

स्नानं समाचरति चारुनदीप्रवाहे ।
उद्धृत्य सप्त पुरुषान् पितृमातृवंशान्
स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ ॥

अत्र सूर्य्यकराभिताप्त इति उक्तं न तु सूर्य्याभितापु इति ।

तथा,— दारिद्र्यपापदौर्भाग्यपापप्रक्षालनाय वै ।
माघस्नानान्न चान्योऽस्ति उपायो नरसत्तम ॥
अविमुक्ते प्रयागे च गङ्गासागरसङ्गमे ।
यत्फलं दशभिर्वर्षैः प्राप्यते नियतं नरैः ॥
तत्फलं लभते माघे गृहस्नानान्न संशयः ।
ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ॥
माघस्नायी विपापः स्यात् तत्संसर्गी तु पञ्चमः ।
आयुर्वित्तकलत्रादिसम्पदः प्रभवन्ति च ॥

तथा,— कामादिकस्य यत्पापं ज्ञानाज्ञानकृतञ्च यत् ।
स्नानमात्रेण नश्येत्तु मकरस्थे दिवाकरे ॥

पाद्मे,— सम्प्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे सदा ।
कर्त्तव्यो नियमः कश्चिद्व्रतरूपी नरोत्तमैः ॥
फलातिशयहेतौ वै किञ्चिद्भोज्यं त्यजेद्बुधः ।
हरेरर्चा तु वैशाखे तपः पूजा तु कार्त्तिके ॥
तपोऽभ्यर्चा तथा दानं त्रयं माघे विशिष्यते । इति ॥

माघव्रतं यद्यपि नित्यकाम्यम् तथापि बहुवाक्येषु स्नाने बहुफलोक्तेः केवलस्नानमावश्यकम् ॥

ब्रह्माण्डे,— माघे प्रतिदिनं प्रातःस्नानाशक्तौ तु पर्वणि ।

स्नातव्यं यत्नतो धीरैरवश्यं देवपूजनम् ॥
आद्ये चान्ते च मध्ये च अर्द्धं च स्नानमाचरेत् ।
बलवान् पुरुषो नित्यं बालवृद्धातुरैर्विना ॥
नारदीये, माघप्रातःस्नाने जलोक्तिः,—
पुनीमः सर्वपापानि त्रिविधानि न संशयः ॥
तथा,— माघमासे वरारोहे शस्तं वै निम्नगाजलम् ।
तदभावे तु स स्नायात् कूपे भाण्डाश्रिते तथा ॥
तथा,— सरितामप्यभावे तु नवकुम्भस्थितं जलम् ।
वायुना ताड़ितं रात्रौ गङ्गास्नानसमं विदुः ॥
तथा,— न वह्निं सेवयेत् स्नातो नास्नातो वा वरानने ।
होमार्थं सेवयेद्वह्निं न शीतार्थं कदाचन ॥
शैवे,— माघमासे नरो यस्तु स्नायात् शीतेन वारिणा ।
स याति ब्रह्मणः सद्म ब्रह्महत्यायुतोऽपि सन् ॥
यत्रातिशीतलं तोयं पुण्यं तत्राधिकं भवेत् ॥
अत्यन्ताशक्तौ तु पाद्मे,—
तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः ।
षडब्दफलदं तद्धि मकरस्थे दिवाकरे ॥
अत्र वह्निप्रज्वलनादिकं वस्त्रादिदानं[१]च अस्मत्कृतदानसारे द्रष्टव्यम् ॥
भविष्ये,— बालाश्चतरुणका वृद्धा नरो नारी नपुंसकाः ।
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥

(१) वस्त्रादिदानञ्च सर्वम् ।

विष्णुः,— दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत् ।
त्रिंशद्दिनानि पुण्यानि मकरस्थे दिवाकरे ॥
तत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्वकम् ।
माघमासमिमं पूर्णं स्नास्येऽहं देव माधव ॥ इत्यादि ।

अत्र व्रतारम्भः पुष्यपौर्णमास्यामिति न भ्रमः कार्य्यः । "दर्शं वा पौर्णमासीं वा" इति द्विविधचान्द्रमासस्यैवादरो न मासान्तराणामित्यभिप्रायात् । पौर्णमास्यारम्भे तु "त्रिंशद्दिनानीति" विरोधः स्यात्, तस्मान्माघकृष्णप्रतिपद्येवारम्भः ॥ स्पष्टं स्कान्दे,—

पौष्यां तु समतीतायां यावद्भवति पूर्णिमा ।
माघमासस्य राजेन्द्र विष्णोः पूजा विधीयते ॥

इति पूर्णिमाकथनं सङ्कल्पपरमिति नारायणोपाध्यायाः ॥ अत्र दर्शान्तपक्षो(१)ऽस्मद्देशे नाचर्य्यते ॥ माघमुपक्रम्य स्कान्दे,—

मातॄणां देवतानाञ्च मूलकं नैव दापयेत् ।
दद्यान्नरकमाप्नोति भुञ्जीत ब्राह्मणो यदि ॥
ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम् ।
अन्यथा यान्ति नरकं क्षत्रविट्शूद्र एव हि ॥
वर्जनीयं प्रयत्नेन मूलकं यदि वागममिति ।

स्नानमन्त्रो नारदीये,—

सवितुः प्रसवस्येह परं धाम जले मम ।
तत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥

---

(१) दर्शान्तमासपक्षो ।

दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ।
परिपूर्णं कुरुष्वेदं माघस्नानं ममाच्युत ॥

इमं मन्त्रं सर्वे पठन्ति ॥ पाद्मे तु,—

मकरस्थे रवौ माघे गोविन्दाच्युत माधव ।
स्नानेनानेन देवेश यथोक्तफलदो भव ॥
यथा नारायणः सूर्य्यो यथा नारायणो जलम् ।
यथा नारायणो माघ स्तथा पाप विनश्यतु ॥

इति मन्त्रान्तरं तदपि पठन्ति ॥ माघस्नानं प्रयागेऽधिकफलम् ।
महाभारते,—

सितासिते च यैः स्नातं माघमासे युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥

मात्स्ये,— षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च ।
माघमासे गमिष्यन्ति गङ्गायमुनसङ्गमे ॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत् फलम् ।
प्रयागे माघमासस्य त्र्यहं स्नातस्य तत् फलम् ॥

माघस्नानमन्त्रे स्त्रीशूद्रयोरप्यधिकारः पौराणिकत्वादिति पूर्व-मुक्तम् ॥

---

अथ फाल्गुनमासकृत्यम् ।

भारते,— भगदैवं तु यो मासमेकभक्तेन सङ्क्षिपेत् ।
स्त्रीषु वल्लभतां याति वश्याश्चैव भवन्ति ताः ॥

भगदैवतं, पूर्वफल्गुनीनक्षत्र तदुपलक्षित मासं फाल्गुनमित्यर्थः ॥

विष्णुः,— स दृश्चेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥
यमोऽप्यधिकमाह,—
देवान् पितॄन् समभ्यर्च्च्य सर्वपापैः प्रमुच्यते ।
देवपित्रर्चनं तर्पणादिना ॥

इति मासकृत्यानि ॥

---

अथ पक्षनिर्णयः ।

पक्षशब्दः पक्ष परिग्रह इति धातोर्निष्पन्नः। चन्द्रस्य पञ्चदशकलानां पूरणं क्षयो वा यत्र पक्ष्यते गृह्यते स पक्षः। यद्वा देवपितृकार्य्यार्थं पक्ष्यते यः कालविशेषः स पक्षः। तथा च स द्विविधः, शुक्लः कृष्णश्चेति। तथा च हारीतः, उदगयनं शुक्लोऽहः पूर्वाह्णश्च तद्देवानां, दक्षिणायनं तमिस्रो रात्रिरपराह्णश्च तत् पितॄणामिति। शुक्लः शुक्लपक्षः। तमिस्रः कृष्णपक्षः। तथा च माधवीये,—
दैवे मुख्यः शुक्लपक्षः कृष्णः पित्र्ये विशिष्यते ।

---

अथ तिथिनिर्णयः ।

तिथिशब्दोऽपि तनु विस्तार इति धातोर्निष्पन्नः। वर्द्धमानया क्षीयमाणया वा चन्द्रकलया तन्यते यः कालविशेषः सा तिथिः।
सिद्धान्तशिरमणौ,—
तन्यन्ते कलया यस्मात् तस्मात्तास्तिथयः स्मृताः ।
यद्वा तनोति वर्द्धमानां क्षीयमाणां वा चन्द्रकलामेनां यः कालविशेषः सा तिथिः। षट्त्रिंशन्मते,—

चन्द्रवृद्धिकरः शुक्लः कृष्णः चन्द्रक्षयात्मकः ।
पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदश स्मृताः ॥

पक्षतिः प्रतिपत् । तथा च सोमोत्पत्तौ पठ्यते,—

प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः ।
विश्वेदेवास्तृतीयान्तु चतुर्थीं सलिलाधिपः ॥
पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः ।
सप्तमीमृषयो दिव्यामष्टमी मज एकपात् ।
नवमीं कृष्णपक्षस्य यमः प्राप्नोति[१] वै कलाम् ॥
दशमीं पिबते वायुः पिबत्येकादशीमुमा ।
द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः ॥
त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् ।
चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः ॥
निष्कलस्तु कलाशेषश्चन्द्रमा न प्रकाशते ।
कला षोडशिका या तु अपः प्रविशते सदा ॥
अमायां तु सदा सोम ओषधीः प्रतिपद्यते ।
तमोषधिगतं गावः पिबन्त्यम्बुगतं च यत् ॥
तत् क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः ।
हुतमग्निषु यज्ञेषु पुनराप्यायते शशी ॥
दिने दिने कलावृद्धिः पौर्णमास्यां च पूर्णता ॥

एवं प्रतिपदादिपौर्णमास्यन्ताभ्यः पञ्चदशतिथिभ्योऽतिरिक्ता अमावास्या तिथिरिति सामान्यविशेषरूपेण तिथयो द्विविधाः । तत्र

(१) प्राश्नाति ।

अमावास्यातिथिः सामान्यरूपा। अन्याः प्रतिपदाद्यास्तिथयो विशेष रूपाः ॥

ननु ज्योतिःशास्त्रादौ कलानां सूर्य्यप्रवेशनिर्गमाभ्यां तिथ्युत्पत्तिरुक्ता, अत्र पानमुक्तमिति तद्विरोध इति चेन्न। अस्मदादिदर्शनापेक्षया ज्योतिःशास्त्रस्य प्रवृत्तत्वात् अत्र च वह्न्यादिदेवानां तत्कालप्रयुक्तत्वेनैर्विवक्षितत्वात् ॥ वस्तुतस्तु सूर्य्यप्रवेशनिर्गमौ वा वह्न्यादिदेवतापानं वा सर्वथापि कलाप्रयुक्ता एव प्रतिपदादितिथयः। तत्र तिथिविशेषेषु प्रथमा कला इति प्रतिपन्नाम्नी। प्रतिपच्छब्दः प्रत्युपसर्गात् पद्गताविति धातोर्निष्पन्नः। चान्द्रः पक्षो मासो वा प्रतिपद्यते आरभ्यते यस्यां सा तिथिः प्रतिपत्। सा च शुक्लपक्षे चन्द्रं प्रविशेत् कृष्णपक्षे चन्द्रान्निःसरेदित्युभयथापि प्रथमैव। तदुपलक्षितः कालविशेषः प्रतिपच्छब्देनोच्यते। एवं द्वितीयादिषु बोध्यम् ॥ तत्र ज्योतिःशास्त्रे,—

षष्टिदण्डात्मिकाः सर्वास्तिथयस्तत्र तु क्षयः।
षड्दण्डावधिका वृद्धिः पञ्चदण्डावधिर्मता ॥

तथा च ह्रासवृद्धिवशेन सन्देहात् तन्निर्णयः कार्य्यः ॥

ह्रासवृद्धौ तु गार्ग्येणोक्तम्,—

खर्व्वो दर्पस्तथा हिंस्र स्त्रिविधं तिथिलक्षणम्।
धर्म्माधर्म्मवशादेव तिथिस्त्रेधा विदन्ति ते[१] ॥

नृणां धर्म्माधर्म्मवशादिति कालादर्शे। बौधायनः,—

---

(१) विवर्त्तते।

खर्वा समतिथिर्ज्ञेया दर्पा वृद्धिमती स्मृता।
चीयमाणा तिथि र्हिंस्रा निर्णयः प्रागुदीरितः॥

खर्वः साम्यमल्पचयो वा हिंस्रोऽधिकचय इति माधवाचार्य्याः।
एतत्त्रैविध्यस्य विपरिवर्त्तनविशेषात् तिथिर्द्विविधा सम्पूर्णा खण्डा चेति। तत्र स्कान्दे,—

प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः।
सम्पूर्णा इति विख्याता हरिवासरवर्जिताः॥

हरिवासर एकादशी। तत्र वैष्णवमते अरुणोदयवेधात्तद्वर्जिता इत्युक्तम्। नारदीये तु,—

आदित्योदयवेलाया आरभ्य षष्टिनाडिकाः।
या तिथिः सा तु शुद्धा स्यात् सार्वतिथ्यो ह्ययं विधिः॥

या तु नोक्तलक्षणा सा खण्डा। एतेन सम्पूर्णा शुद्धा खण्डा विद्धेति बोध्यम्॥ तत्र शुद्धायां विधिनिषेधयोर्न सन्देहः॥
विद्धायां विधिनिषेधयोर्व्यवस्था गार्ग्येणोक्ता,—

निमित्तं कालमासाद्य वृत्तिर्विधिनिषेधयोः।
विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके॥
तिथीनां पुज्यता नाम कर्मानुष्ठानयोग्यता।
निषेधस्तु निवृत्त्यात्मा कालमात्रमपेचते॥

वृत्तिः पालनम्। तथा च पूज्यकालमाश्रित्य विधेरनुष्ठानरूपपालनमिति तिथिमाश्रित्य निषेधस्यानुष्ठानरूपपालनमिति। तयोः पालने कालस्य निमित्तत्वमित्यर्थः। यथा, यस्मिन्नहनि एकादशी उदयमात्रव्यापिनी तत्र "एकादशीमुपवसेत्" इति विधिमला-

त्तद्व्रते कृत्स्नमहो गृह्यते इति तिथेः पूज्यता। तैलाभ्यङ्गादि-
निषेधे तु कालमात्रापेक्षा। तथा च शिवरहस्ये,—

अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने।
जाते च निधने चैव तत्कालव्यापिनी तिथिः॥ इत्यादि।
तस्मादिद्धतिथौ पूज्यत्वं निर्णयम्॥ तत्र पराशरः,—
त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः।
न तत्र युग्मादरणमन्यत्र हरिवासरात्॥

मरीचिः,— स्वखण्डव्यापिमार्त्तण्डा ह्यखण्डा सूर्य्योदयगा तिथिः।
सा ह्यखण्डा व्रतानां स्यात् तत्रारम्भसमापनम्॥

अन्यत्र,— उदितो यत्र मार्त्तण्डः स्वखण्डादतिवर्त्तते।
अखण्डा सा तिथिर्ग्राह्या स्नानदानव्रतादिषु॥

सत्यव्रतः,— उदयस्था तिथिर्या हि न भवेद्दिनमध्यगा।
सा खण्डा न व्रतानां स्यादारम्भस्य समापनम्॥

विष्णुधर्मोत्तरे,—
व्रतोपवासस्नानादौ घटिकैका यदा भवेत्।
सा तिथिः सकला ज्ञेया श्राद्धादौ लग्नगामिनी॥

भविष्ये तु व्रतोपवासनियम इति पाठः। इति कर्मकाल-
व्याप्तिः॥ तत्र व्रते वेध उक्तः पैठीनसिना।
पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्।
त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः॥

पूर्वेद्युरुदयानन्तरममावास्या त्रिमुहूर्त्ता चेत् सा प्रतिपदं विध्यति
परेद्युरस्तमयात् प्राक् द्वितीया त्रिमुहूर्त्ता चेत् सापि पूर्वां प्रतिपदं

विष्यति। एवं सर्वत्र। तत्र चान्द्राणां तिथीनां अहोरात्रविभागं विना व्यवस्था कर्त्तुमशक्येति तद्विभागो गर्गेणोक्तः।

अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः।
द्वौ निमेषौ त्रुटि र्नाम द्वे त्रुटी तु लवो मतः॥
द्वौ लवौ चण इत्युक्तः काष्ठा प्रोक्ता दश क्षणाः।
त्रिंशत् काष्ठाः कला प्रोक्ता कलास्त्रिंशन्मुहूर्त्तकाः॥
ते च त्रिंशदहोरात्रमित्याह भगवान् हरः।

एतादृशाहोरात्रस्य श्रुति-स्मृति-पुराण-ज्योतिःशास्त्रेषु दिवसस्य पञ्चदशमुहूर्त्तानां पञ्चदशनामानि रात्रेरपि तथा नानाविधानि पठितानि। प्रकृते तु रात्रिनाम्नामनुपयोगात् दिवसस्य मुहूर्त्त-नामान्युच्यन्ते। तथा च शङ्खः,—

रौद्रश्चैत्रस्य मैत्रस्य तथा शालकटः स्मृतः।
सावित्रस्य जयन्तस्य गान्धर्वः कुतपस्तथा॥
रौहिणश्च विरञ्चिश्च विजयो नैर्ऋतस्तथा।
महेन्द्रो वरुणश्चैव भेदाः पञ्चदश स्मृताः॥

उत्तरायणे दिवसवृद्धौ मुहूर्त्तानां वृद्धिः। दक्षिणायने दिवसस्य हानौ तेषां हानिश्च। तथा च ज्योतिःशास्त्रे,— अङ्कः पञ्चदशांशो मुहूर्त्त इति। एवं अयनयोः रात्रावपि वैपरीत्येन ह्रासवृद्धी ज्ञातव्ये। एवं पञ्चधा विभागादिष्वपि बोध्यं। एवं पञ्चदशधा विभागः, पञ्चधा विभागोऽपि। तथा च व्यासः,—

मुहूर्त्तत्रितयं प्रातः तावानेव तु सङ्गवः।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्तु तादृशः॥

सायाह्नस्त्रिमुहूर्त्तस्तु सर्वकर्मबहिष्कृतः ।

चतुर्धा विभागोऽपि । तथाच गोभिलः,—

पूर्वाह्णः प्रहरस्त्वाद्यः मध्याह्नः प्रहरस्तथा ।

आतृतीयादपराह्णः सायह्नश्च ततः परम् ॥

त्रिधा विभागोऽपि स्कान्दे,—

ऊर्द्धं सूर्य्योदयात् प्रोक्तं मुहूर्त्तानां तु पञ्चकम् ।

पूर्वाह्णः पञ्चकं प्रोक्तो मध्याह्नस्तु ततः परम् ॥

अपराह्णस्ततः प्रोक्तो मुहूर्त्तानां तु पञ्चकम् ।

द्वेधा विभागोऽपि । स्कान्दे,—

आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः ।

तत्र पञ्चधा विभागस्य बहुप्रमाणसम्मतत्वात् प्रायेण तं समाश्रित्य विधिनिषेधौ निर्णीयेते । यत्र यत्र विशेषविधिस्तत्र तत्रान्ये पक्षा लेख्याः ॥

तत्रोपवासैकभक्ते नक्तं चायाचितं व्रतं ।

दानं चाध्ययनं सप्तविधं दैवकर्म ब्रूवे ॥

उपवासशब्दार्थो विष्णुधर्मे,—

उपावृत्तस्तु पापेभ्यो यस्तु वासो गुणैः सह।

उपवासः स विज्ञेयः सर्वत्र भोगवर्जितः ॥

तत्रोपवासः सर्वतिथिषु विहितः । नारदीये,—

शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतीन् तिथीन् ।

उपोष्यैव बलिं दत्वा विधिना ह्यपरेऽहनि ॥

ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते ।

इत्युपवासस्याहोरात्रसाध्यत्वात् सम्पूर्णव्यापिन्यां न सन्देहः। तद्-सम्भवे त्रिसन्ध्यव्यापिन्याम्। तदसम्भवे खण्डतिथौ। तत्र वाक्यान्युदाहृतानि। तत्र शुक्लपक्षे अमावास्याविद्धा प्रतिपदुपोष्या। तत्राप्यपराह्णव्यापिनी मुख्या। तदसम्भवे सायाह्नव्यापिनी ग्राह्या। न तु उदयत्रिमुहूर्त्तव्यापिनी। तथा च व्यासः,—

प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी।
दैवं कर्म्म तथा ज्ञेयं पित्र्यं वा मनुरब्रवीत्॥

पैठीनसिः,— पञ्चमी सप्तमी चैव दशमी च त्रयोदशी।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः॥

सम्मुखीलक्षणं स्कान्दे,—

सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदा।
प्रतिपत्सम्मुखी कार्य्या या भवेदापराह्णिकी॥

निगमोक्तिरपि,—

युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशी युक्ता चतुर्द्दश्या च पूर्णिमा॥
प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम्।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुरा कृतम्॥

युग्मं द्वितीया। अग्निस्तृतीया। युगं चतुर्थी। भूतं पञ्चमी। षट् षष्ठी। मुनिः सप्तमी। वसुः अष्टमी। रन्ध्रं नवमी। रुद्रः एकादशी। अत्र द्वितीयादिसप्तयुग्मेषु पूर्वतिथिः उत्तरविद्धा ग्राह्या। उत्तरा तु पूर्वविद्धेत्यर्थः। द्वितीयातृतीययोर्युग्मं मेलनं महाफलम्। तत्तत्तिथिनिमित्तके कर्म्मणीति शेषः। एतद्व्यस्तं

युग्मादिविपरीतम्। प्रतिपद्द्वितीययोरित्याद्योर्मेलनं महाघोरम्। एवं चतुर्थीपञ्चम्यादिषु बोध्यम्॥

अथ उपवासविचारः।

इदं युग्मशास्त्रमुपवासविषयमेव।

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्थिका।
चतुर्दश्यप्यमावास्या उपोष्याः स्युः परान्विताः॥

इति शङ्करगीतावचनादिषु उपवासस्यैवोक्तत्वात्॥

ननु व्यासोक्तौ दैवशब्देन व्रतादीनामपि विवक्षेति चेत्, न। तेषूदयतिथिप्राशस्त्यस्य वक्ष्यमाणत्वात्। तथा युग्मोक्तिः शुक्लपक्षविषया, प्रतिपद्यप्यमावस्येति ज्ञापनात्। अतएव,—

प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपद्युता।

इत्यापस्तम्बोक्तिः भविष्योत्तरोक्तिश्च कृष्णप्रतिपद्विषया। तथाच, कृष्णप्रतिपत् परेद्युरुदयादूर्द्धं त्रिमुहूर्त्ता ततोऽप्यधिका वा स्यात्तदा सैवोपोष्या नात्रापराह्णव्याप्तिः। कृष्णपक्षे द्वितीयायुतायाः प्रतिपदो विशेषमुख्यत्वेन पञ्चमी सप्तमीत्यादिवचनस्याप्रवृत्तेः॥

ननु,— यो यस्य विहितः कालः कर्म्मणस्तदुपक्रमे।
तिथिर्याभिमता सा तु कार्य्या नोपक्रमोज्झिता॥

अत्र बौधायनोक्त्या पूर्वविद्धायां शुक्लप्रतिपदि प्रतिपत्प्रवेश एव सङ्कल्पः प्रतीयते।

प्रातः सङ्कल्पयेत् विद्वानुपवासव्रतादिकम्।
प्रातरापूर्य्य मतिमान् कुर्य्यान्निक्तव्रतादिकम्॥
नापराह्णे न मध्याह्ने पित्र्यकार्य्ये हि तौ स्मृतौ।

इत्यादि स्मृतिषु प्रातरेव मङ्गलस्य कार्य्यत्वात्। तदुभय कथ मङ्गच्छत इति चेदुच्यते। तिथिव्याप्ति द्विविधा। ज्योति-शास्त्रप्रसिद्धस्वाभाविकी एका। स्मृत्युक्तसाकल्यापादकवचनोत्पादितान्या चेति। तथा च देवल,—

या तिथि समनुप्राप्य उदय याति भास्कर'।
सा तिथि सकला ज्ञेया स्नानदानजपादिषु॥

तथा,— या तिथि समनुप्राप्य उदय[१] याति भास्कर।
सा तिथि सकला ज्ञेया दानाध्ययनकर्मसु॥

कर्मस्विति बहुवचनात् निखिलदैवोपवाससङ्ग्रह[२]।

सौरपुराणे,—

या प्राप्यास्तमुपैत्यर्क सा चेत् स्यात्त्रिमुहूर्त्तगा।
धर्मकृत्येषु सर्वेषु सम्पूर्णा ता विदुर्बुधा॥

एव च विशेषवचनाभावे त्रिमुहूर्त्तव्याप्तिरेव साकल्यापादिका। तथा सति,

आदित्योदयवेलाया याल्पापि हि तिथिर्भवेत्।
सा पूर्णैव मन्तव्या प्रभूता नोदय विना॥

इति देवलोक्तौ।

उदये सा तिथिग्राह्या विपरीता तु पैत्रके।

इति स्कान्दोक्तौ च त्रिमुहूर्त्तव्याप्तिरेवेति बोध्यम्॥

एव च सति साकल्यापादकवचनादसत्यामपि शुक्लप्रतिपदि

---

(१) अस्त याति दिवाकर।

(२) निखिलदैवोपसङ्ग्रह।

अमावास्यायाः प्रातरेव सङ्कल्प इति सर्वं सङ्गतम्। एवमन्यत्र तिथिष्वपि ज्ञेयम् ॥

अभावेऽपि प्रतिपदः सङ्कल्पः प्रातरिष्यते।

इति माधवाचार्य्याः ॥ सधवास्त्रीणां तु,—

नास्ति स्त्रीणां पृथक् धर्मो न व्रतं नाप्युपोषणम्।

इति मनूक्तेरुपवासादिषु निषिद्धेष्वपि, भर्त्राद्यनुज्ञायां न दोषः।

भार्य्या भर्तृमतेनैव व्रतादीनाचरेत् सदा।

इति कात्यायनोक्तेः।

नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा।
निष्फलं तु भवेत्तस्याः यत् करोति व्रतादिकम् ॥

इति मार्कण्डेयोक्तेश्च। आदिशब्देनोपवासाद्युपसङ्ग्रहः ॥

इत्युपवासनिर्णयः।

असमाप्ते व्रतादौ दोषः। परिगृह्येत्यादिविष्णुरहस्याद्युक्तौ दोषश्रवणेऽपि प्रतिनिधिद्वारा तत्समापनेऽप्यदोषः। तथा च पैठीनसिः,—

भार्य्या पत्युर्व्रतं कुर्यात् भार्य्यायाश्च पतिर्व्रतम्।
असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न विद्यते ॥

स्कान्दे,— पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा।
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् ॥
भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिः।

स्मृत्यन्तरेऽपि,—

पितृमातृपतिभ्रातृश्वश्रूगुर्वादिभूभुजाम्।
अदृष्टार्थमुपोषित्वा स्वयं च फलभाग् भवेत् ॥

पितृमातृस्वसृभ्रातृगुर्वर्थं च विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥
दक्षिणा नात्र दातव्या शुश्रूषाविहिता च सा ।

ब्राह्मे,— शिष्यव्रतं प्रकुर्वन्ति गुरुसम्बन्धिबान्धवाः ।

पुनः स्कान्दे,—

आत्मा पुत्रः पुरोधाश्च भ्राता पत्नी सखापि वा ।
याचायां धर्मकार्य्येषु जायन्ते प्रतिहस्तकाः ॥
एभिः कृतं महादेवि स्वयमेव कृतं भवेत् ।

आत्मा आत्मीय इति कृतिवृहस्पतिः ॥ अत्यन्तासम्भवे तु,—

उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।
तावद्धनानि वा दद्यात् यद् भुक्ताद्द्विगुणं भवेत् ॥
सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमात् ।
कुर्य्यात् द्वादशसङ्ख्याकान् यथाशक्ति व्रते नरः ॥

देवीं गायत्रीम् ॥

अथ उपवासादिनियमाः ।

आदित्यपुराणे,—

अञ्जनं रोचनं वापि गन्धः सुमनसस्तथा ।
व्रतस्थे चोपवासे च नित्यमेव विवर्जयेत् ॥

रोचनं, हरिद्रादिना गात्रोज्ज्वलीकरणम् ॥

स्मृत्यन्तरे,— व्रते चैवोपवासे च वर्जयेद्दन्तधावनम् ।

गायत्र्याः शतशः पूता अपः प्राश्य विशुद्ध्यति ॥

इति प्रायश्चित्तं चोक्तम् ॥

मुखशुद्धिस्तु द्वादशगण्डूषैरासपचादिना वेति दन्तधावननिषेधकालप्रकरणे लेख्यम् ॥

सधवास्त्रीणां तु व्रतादिष्वपि हरिद्राग्रहणादिकं आवश्यकम् ।

वस्त्रालङ्कारपुष्पाणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥

इति मनूक्तेः । तैलस्य प्रतिप्रसवाभावात् तद्ग्रहणाभावः । आचारोऽप्येवमेव ॥

कौर्मे,— कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान् ।
शाकं मधु परान्नञ्च वर्जयेदुपवासवत् ॥

बृहस्पतिः,— दिवानिद्रां परान्नञ्च पुनर्भोजनमैथुनम् ।
चौरं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥

एतत् पारणमात्रोपलक्षणम् ॥

विष्णुधर्मे,— असम्भाष्यान् हि सम्भाष्य तुलस्यतसिकादलम् ।
आमलक्याः फलं वापि पारणे प्राश्य शुद्धति ॥
असकृत् जलपानञ्च दिवास्वापञ्च मैथुनम् ।
ताम्बूलचर्वणं मांसं वर्जयेद्व्रतवासरे ॥

हारीतः,— पतितपाषण्डनास्तिकसम्भाषणं अनृताश्लीलादिकमुपवासदिने वर्जयेत् । कौर्मे,—

बहिर्ग्राम्यान्त्यजान् सूतं पतितञ्च रजस्वलाम् ।
न स्पृशेन्नापि भाषेत नेक्षेत व्रतवासरे ॥
स्त्रीणान्तु प्रेक्षणात् सङ्गात् ताभिः संकथनादपि ।
निःस्यन्दते ब्रह्मचर्य्यं न दारेष्वृतुसङ्गमात् ॥

गरुडपुराणे,—

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च कार्य्यनिष्पत्तिरेव च॥
एतन् मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।

तत्र पारणमावश्यकम्।

पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनम्।
असमाप्ते व्रते पूर्वं नैव कुर्य्याद्व्रतान्तकम्॥

इत्यादित्यपुराणोक्तेः॥

ब्रह्मवैवर्त्ते,— सर्व्वेष्वेवोपवासेषु दिवा पारणमिष्यते।
अन्यथा पुण्यहानिः स्यादृते पारणधारणात्॥

तत्रापि पूर्वाह्ण एव,—

उपवासेषु सर्व्वेषु पूर्वाह्णे पारणं भवेत्।
अन्यथा तत्फलस्यार्द्धं धर्ममेवोपसर्पति॥

इति देवलोक्तेः। धर्मं यमम्॥ पूर्वाह्णे पारणासम्भवे,—

सन्ध्यादिकं भवेन्नित्यं पारणन्तु निमित्ततः।
अद्भिस्तु पारयित्वा तु नैत्यकान्ते भुजिक्रिया॥

इत्युक्तेर्जलपारणं कृत्वा नित्यकर्माणि समाप्य पुनःपारणे न दोषः॥ तत्र स्कान्दे स्पष्टम्,—

पारयित्वोदकेनापि भुञ्जानो नैव दुष्यति।
अशितानशिता यस्मादापो विद्वद्भिरीरिताः॥

ननु,— तिथीनामेव सर्वासामुपवासव्रतादिषु।
तिथ्यन्ते पारणं कुर्यात् विना शिवचतुर्द्दशीम्॥

इति स्कान्दोक्तेस्तिथ्यन्तप्रतीक्षायां कथं पूर्वाह्णे पारणमिति चेत् सत्यम्,—

तिथ्यन्ते चोत्सवान्ते च पारणं यत्र चोद्यते ।
यामत्रयोर्द्धवर्त्तिन्यां प्रातरेव हि पारणम् ॥

इति स्मृत्यन्तरात् प्रहरत्रयपर्य्यन्तं तिथ्यन्तापेक्षा। अन्यथा पूर्वाह्ण एव॥ व्रतादिष्वित्यत्र आदिशब्देन एकभक्तनक्तायाचितव्रतानि गृह्यन्ते, इति माधवाचार्य्याः॥ इति च साधारणपारणाविधिः। विशेषस्तु कृष्णजयन्त्यादिषु लेख्यः॥

यद्यपि पारणशब्दः पार तीरसमाप्ताविति धातोरुत्पन्नत्वेन समाप्तिमात्रवाचकस्तथापि लोकशास्त्रयोरुपवाससमाप्तावेव पङ्कजादिशब्दवत् योगरूढः॥

अथैकभक्तं निर्णीयते ब्राह्मे वैश्वानरव्रते,—

प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः ।

इति। तत्र एकभक्तं त्रिविधम्। स्वतन्त्रमन्याङ्गमुपवासप्रतिनिधिरूपञ्चेति। तत्र वैश्वानरव्रतादिषु स्वतन्त्रम्,—

पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ।

तथा “मध्याह्ने पूजयेत् नृप” इत्यादिविहितगणेशव्रतादावन्याङ्गम्।

तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तिथिः ।

इति सुमन्तुवाक्याद्विहितमुपवासप्रतिनिधिरूपम्। तत्रान्याङ्गे प्रधानानुसारेण गुणस्य नेतव्यत्वादङ्गिनः पूजाविधेर्मध्याह्ने विहितत्वेन अङ्गस्यैकभक्तस्यापराह्णादौ प्राप्यमाणत्वान्नैव मुख्यकालापेक्षा॥

किञ्च यदा स्वतन्त्रैकभक्तेऽपि केनचिन्निमित्तेन मुख्यकाला-सम्भवे गौणकालोऽभ्यनुज्ञायते। तदा किं वाच्यमन्याङ्गे। उपवास-प्रतिनिधिरूपस्य च उपवासतिथौ कार्य्यत्वं तस्य गौणोपवासत्वात्।

"तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तिथिः"

इति सुमन्तूक्तेश्च। तच्च मार्कण्डेयपुराणे। "एकभक्तेन नक्तेन" इति वक्ष्यमाणैकादशीव्रतादावुक्तम्॥ एवञ्च, पारिशेष्यात् स्वतन्त्रै-कभक्ते मुख्यकालापेक्षा॥

तत्कर्मकालस्तत्स्वरूपञ्च स्कान्दे,—

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्।
एकभक्तमिति प्रोक्तमतस्तस्मात् दिवैव हि॥

देवलोक्तौ तु न्यूनग्रासत्रयेण तु इति विशेषः। नियमेनेत्यनेन हविष्यभोजनप्राप्तिः। तन्मुख्यकालस्तु पञ्चधाविभक्ताहर्मध्याह्नापर-भागरूपो दिनार्द्धस्योपरि सार्द्धमुहूर्त्तपरिमितः कालः। दिनार्द्धे-ऽतीते सति समनन्तरभाविलादस्तमयात् प्राचीनोऽवशिष्टः कालो गौणः। दिवेत्यभ्यनुज्ञानात्॥

एवं व्यवस्थिते सति मध्याह्नव्यापिनी तिथिर्ग्राह्या,—

उदये तूपवासस्य नक्तस्यास्तमये तिथिः।
मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः॥

इति बौधायनोक्तेः। तत्र निर्णयस्य विषयस्य षोढाभेदा ऊह्याः। पूर्व्वेद्युरेव मध्याह्नव्याप्तिः। परेद्युरेव तद्व्याप्तिः। उभयत्र तद्व्याप्तिः। नोभयत्र तद्व्याप्तिः। उभयत्र साम्येन तदेकदेशव्याप्तिः। उभयत्र वैषम्येण तदेकदेशव्याप्तिश्चेति। तत्राद्यद्वितीययोर्न सन्देहः।

अन्यदिने मध्याह्नव्याप्तेरभावात्। तृतीये पूर्वविद्धा ग्राह्या। मुख्यकालव्याप्तेः समत्वेऽपि गौणकालव्याप्तेरधिकत्वात्। चतुर्थे पूर्वविद्धैव। दिनद्वये मुख्यकालव्याप्तेरभावेऽपि गौणकालव्याप्तिलाभात्। पञ्चमेऽपि पूर्वविद्धैव। मुख्यकालव्याप्तेरुभयत्र साम्येऽपि अधिकगौणकालव्याप्तिप्राप्तेः। षष्ठे तु यदा पूर्वेद्युर्मध्याह्नैकदेशेऽधिकव्याप्तिस्तदाधिक्यात् गौणकालव्याप्तेश्च पूर्वविद्धैव। तस्मिन्नेव षष्ठे यदा परेद्युर्मध्याह्नैकदेशेऽधिकव्याप्तिस्तदा परविद्धैव परेद्युर्गौणकालव्याप्त्यभावेऽपि मुख्याकालव्याप्त्याधिक्यात्। इत्येकभक्तनिर्णयः॥

---

## अथ नक्तनिर्णयः।

भविष्ये,— चतुर्दश्यामथाष्टम्यां पक्षयोः शुक्लकृष्णयोः।
योऽह्नि नित्यं न भुञ्जीत शिवार्चनरतो नरः॥
तथा,—नक्तं कृष्णचतुर्दश्यां तथा कृष्णाष्टमीषु च।
कृत्वा भोगानिहाप्नोति परत्र च शिवे रतिम्॥

एवमादौ नक्तं सिद्धम्। तच्च त्रिविधम्, अन्याङ्गं उपवासप्रतिनिधिरूपं स्वतन्त्रञ्चेति। तत्रान्याङ्गे नक्तव्रते दुर्गापूजादौ पूजाविधेरङ्गिनोऽनुसारेणाङ्गस्य नक्तभोजनस्य रात्रौ प्रहरोत्तरमपि प्राप्यमाणत्वान्न मुख्यकालापेक्षा। उपवासप्रतिनिधिरूपेऽपि तस्मिन्नेव मुख्यकालापेक्षा। तस्य उपवासदिन एवानुष्ठानात्। तथाच स्कान्दे,—
प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः।
उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः॥

इति ज्ञायते। पञ्चमषष्ठयोरपि परैव। सायंकालस्य गौणस्य तत्तिथिव्याप्तत्वात्। रात्रिनक्तभोजने नाड़ीत्रयमुत्तमः कालः,—

प्रदोषोऽस्तमयादूर्द्धं घटिकात्रयमिष्यते।

इति स्मृतेः। मुहूर्त्तत्रयं मध्यमः कालः,—

त्रिमुहूर्त्तः प्रदोषः स्याद्भानावस्तं गते सति।

इति व्यासोक्तेः। निशीथपर्य्यन्तो जघन्यः कालः, "नक्तं निशायां कुर्वीत" इति सामान्येनाभिधानात्॥

ननु,—सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः।

तथा,—चत्वारीमानि कर्म्माणि सन्ध्यायां परिवर्जयेत्।

आहारं मैथुनं निद्रां स्वाध्यायञ्च चतुर्थकम्॥

इति स्मृतेश्च सन्ध्याकाले कथं भोजनमिति चेत्, न। क्रत्वर्थेन व्रतार्थनक्तदर्शनभोजनविधिना पुरुषार्थस्य सन्ध्याकालनिषेधस्य बाधात्। यथा पुरुषार्थप्राणिहिंसाप्रतिषेधः क्रत्वर्थाग्निष्टोमीयहिंसाविधिना बाध्यते॥

यत्तु सप्तमीभानुवासरादौ सौरनक्तं विहितम्। तत्र पूर्वोक्तविपर्य्यासेन सायंकालव्याप्तिर्मुख्यः कल्पः। प्रदोषव्याप्तिरनुकल्पः। तत्र षोढ़ाभेदे पूर्वस्मिन्नेव परस्मिन्नेव वा सायंकालव्याप्तौ न सन्देहः। उभयत्र सायंकालव्याप्तौ पूर्वतिथिरेव। उभयत्रापि तत्तिथेर्विद्यमानत्वात्। नोभयत्र तद्व्याप्तौ पूर्वतिथिरेव। सायंकाले तदभावेऽपि प्रदोषकालेऽपि तत्तिथे. सत्त्वात्। उभयत्र साम्येन वैषम्येण वा तदेकदेशव्याप्तौ पूर्वैव। गौणस्य प्रदोषकालस्य तत्तिथिव्याप्तत्वात्। सौरनक्तभोजने दिवसस्यान्तिममुहूर्त्त उत्तमः।

प्रदोषव्यापिनी न स्यात् दिवानक्तं विधीयते ।
आत्मनो द्विगुणां छायामतिक्रामति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम् ॥
कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितम् ।

वत्सः,—प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।
एकादशीं विना सर्वाः शुक्ले कृष्णे तथा स्मृताः ॥

तथाच प्रदोषव्याप्तिर्मुख्यकल्पः । सायंकालव्याप्तिरनुकल्पः । तच्च नक्तं प्रदोषव्यापिन्यां तिथौ कार्य्यम् । तदेवं नक्तत्कालौ व्यवस्थितौ ॥ अत्रापि रात्रिनक्ते षोढाभेदाः । पूर्वेद्युरेव प्रदोषव्याप्तिः । परेद्युरेव प्रदोषव्याप्तिः । उभयत्र प्रदोषव्याप्तिः । नोभयत्र प्रदोषव्याप्तिः । उभयत्र साम्येन प्रदोषैकदेशव्याप्तिः । उभयत्र वैषम्येण प्रदोषैकदेशव्याप्तिश्चेति । तत्र नाद्यद्वितीययोः सन्देहः । तृतीये परतिथिरेव,—

यदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथि. ।
तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः ॥

इति जावालिवाक्यात् । उभयत्रापि दिवा रात्रावपि सा तिथिर्विद्यते यत इत्यर्थः । चतुर्थेऽपि परैव ।

"अतयात्वे परत्र स्याद्यतोऽर्वागस्ततो हि सा ।

इति जावालिवाक्यात्" । प्रदोषे तदभावेऽपि अस्तमयादर्वाक् यतः सा विद्यते ततो ग्राह्येत्यर्थः । "अर्वागस्तमयात्" इत्यनेन अस्य च दिवारात्रिव्रतत्वेन प्रदोषव्याप्तिवत् सायंकालव्याप्त्यापि निर्णय

एतदुपलक्षणम् । नक्ते हविष्यद्रव्यमेव भोज्यमित्यर्थः । स विचारो हविष्यप्रकरणे लेख्यः ॥ इति नक्तनिर्णयः ॥

---

अथ अयाचितं निर्णीयते ।

प्राजापत्यकृच्छ्रादौ सप्तमीव्रतादौ च तद्विहितम् । तस्य द्वावर्थौ । न याचितमयाचितमित्येकः प्रतिषेधरूपः । तथाच प्राजापत्यकृच्छ्रव्याख्याने गौतमः । अथापरं त्र्यहं कञ्चन न याचेतेति । अतः उपवासवदहोरात्रमेव विषयीकरोति । अत एव संकल्पोऽप्यस्मिन्नहोरात्रे याचितमन्नं न भोज्य इति वाच्यम् । तथा पर्युदासोऽपि । तथा च वृहस्पतिः,—

त्र्यहं प्रातः त्र्यहं सायं त्र्यहमद्यादयाचितम् ।

त्र्यहं परञ्च नाश्नीयात् प्राजापत्यञ्चरन् द्विजः ॥

स्मृत्यन्तरेऽपि,—

अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् ।

इति । इतग्रासभोजित्वं मितभोजित्वम् । "अयाचिते द्वौ चाष्टौ" इति चतुर्विंशतिमतोक्तेः । तथाच, याचितादन्यदयाचितमित्यस्याप्रयत्नलभ्यस्य परदत्तस्य भोजनं विवक्ष्यते । तदापि पराधीनत्वादेव कालविशेषविधानस्याशक्यत्वादहोरात्रमेव विषयीकरोति । स्वगृहस्थितवस्तुनः इदानीमयाचितत्वेऽपि पूर्वयत्नसञ्चितत्वाद्याचितमेव । तथाच पर्युदासः । यदा निषेधस्य प्रसक्तिपूर्वकत्वाद्याच्ञाप्रसक्तेश्च परद्रव्यविषयत्वादयाचितशब्दोऽपि परद्रव्यमेव विषयीकरोति । तच्च भोज्यद्रव्यं परकीयमयत्नोपनीतञ्च । तथाच याज्ञवल्क्यः,—

"मुहूर्त्तोनं दिनं नक्तम्" इत्युक्तेः। अन्तिमाधो मुहूर्त्तो मध्यमः,—

दिवाकरं यत्प्रोक्तमन्तिमे घटिकाद्वये।

इत्युक्तेः। ततः प्राचीनो जघन्यः,—

त्रिमुहूर्त्तं स्पृशेदह्नि निशि चैतावती तिथिः।
तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम् ॥

इति सुमन्तूक्तेः। "आत्मनो द्विगुणां छायां" इत्यादि अत्रैव पर्य्यवस्यति,—

ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः।
ते दिनान्तेऽपि भुञ्जीरन् निषेधाद्रात्रिभोजने ॥

इति भविष्ये रविवासरे रात्रिनक्तस्य निषेधात् गृहस्थस्यापि दिवैव भोजनम्। एवं रविसंक्रान्त्यादिष्वपि ज्ञेयम् ॥

माधवाचार्य्यैस्तु एकस्मिन्नेव दिने एकभक्तनक्तयोः प्रसक्तौ गौणकालस्याप्यसम्भवपक्षे भार्य्यापुत्रादिना कर्त्रन्तरेण नक्तं करणीयमिति लिखितमनुसन्धेयम् ॥

धवलसंग्रहे,— हविष्यभोजनं स्नानं सत्यमाहारलाघवम्।
ब्रह्मचर्य्यमधः शय्यां नक्तभोजी षडाचरेत् ॥

भविष्ये,—"अग्निकार्य्यमधःशय्याम्" इति पठित्वा अग्निकार्य्यं व्याहृतिभिराज्यहोम इति लक्ष्मीधरः।

स्कान्दे,— एतानि वर्जयेत् नक्ते अन्नानि सुरसुन्दरि।

निष्पावा आढ़की मुद्गा माषाश्चैव कुलुत्थकाः ॥
मसूरा राजमाषाश्च गोधूमा स्त्रिपुटास्तथा।
चणका वर्त्तुलाश्चापि सुमुक्ताश्चैवमादयः ॥

एवमन्यान्यपि ज्ञेयानि । तत्र,—

पौर्वाह्णिकास्तु तिथयो दैवकार्य्ये फलप्रदाः ।

इति वृद्धयाज्ञवल्क्यवाक्ये दैवे पूर्वाह्णव्याप्त्यभिधानात् पूर्वाह्णस्य पञ्चधा विभक्तस्य मुख्यत्वात् ।

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।

त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥

इति पैठीनसिवचनाच्चोदिते भानौ त्रिमुहूर्त्ता तिथिर्ग्राह्या । एकभक्तनक्तादौ प्रतिपदोक्तकालविशेषशास्त्राभावात् सामान्यशास्त्रस्य प्रवृत्तेः । अतएव माधवाचार्य्याः,—

सोदयत्रिमुहूर्त्तायां कुर्य्याद्दानं व्रतानि च । इति ।

ननु,— यां तिथिं समनुप्राप्य उदयं याति भास्करः ।

सा तिथिः सकला ज्ञेया स्नानदानजपादिषु ॥

इति देवलादिवाक्यस्य,

व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।

उदये सा तिथिर्ग्राह्या श्राद्धादौ चास्तगामिनी ॥

इति विष्णुधर्म्मोत्तरादिवचनस्य, "आदित्योदयवेलायाम्" इत्यादिबौधायनोक्तेश्च का गतिरिति चेत्, उच्यते । वैश्वानराधिकरणन्यायेन अवयुत्यानुवादरूपतया तेषां त्रिमुहूर्त्तव्याप्तिप्रशंसापरत्वम् । तत्र षोढा भेदः । उदयकाले पूर्वेद्युरेव त्रिमुहूर्त्तव्यापिनी । परेद्युरेव उदयकाले त्रिमुहूर्त्तव्यापिनी । उभयत्रापि त्रिमुहूर्त्तव्यापिनी । नोभयत्र त्रिमुहूर्त्तस्पर्शिनी । उभयत्रापि साम्येन वैषम्येण वा त्रिमुहूर्त्तैकदेशस्पर्शिनी चेति । तत्राद्ये खण्डतिथिला-

अयाचिताद्धृतं ग्राह्यमपि दुष्कृतकर्मणः।

यतिधर्मप्रश्नाः,—

भिक्षाशनसमुद्योगात् प्राक्केनापि निमन्त्रितम्।
अयाचितं हि तद्भक्ष्यं भोक्तव्यं मनुरब्रवीत्॥

यदि प्रतिषेधो यदि वा पर्य्युदास उभयथापि एकभक्तादिवन्न कालो विशेषणीयः। प्रतिषेधेऽनुष्ठेयाभावात् पर्य्युदासे पराधीनत्वाच्च। असति कालविशेषविधौ न कर्मकालव्याप्तिवचनमत्र प्रवर्त्तते। तथा सति कालविशेषविध्यभावात् शुक्लकृष्णप्रतिपदादौ उपवासवत् पूर्वोत्तरविद्धे ग्राह्ये। एवमयाचिते सर्वतिथिषु उपवासवत् निर्णयः इति सुस्थितम्॥ इत्ययाचितनिर्णयः॥

---

अथ दानव्रतकालौ निर्णीयेते।

भविष्योत्तरे,— प्रतिपत्सु द्विजान् पूज्य पूजयित्वा प्रजापतिम्।
सौवर्णमरविन्दञ्च कारयित्वाष्टपत्रकम्॥
कृत्वा त्वौदुम्बरे पात्रे सुगन्धिघृतपूरिते।
पुष्पैर्धूपैः पूजयित्वा विप्राय प्रतिपादयेत्॥

ब्राह्मे मण्डलव्रते,—

माघे भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ।
नैवेद्यन्तु पचेन्मौनी षोड़शत्रिगुणानि च॥
फलानि पिष्टपक्वानि दद्यात् विप्राय षोड़श।
देवाय षोड़शैतानि दातव्यानि प्रयत्नतः॥
भुञ्जन्ते षोड़श तथा व्रतस्य नियमास्तथः।

कार्त्तिकशुक्लप्रतिपदि बलिराजोत्सवः। तत्र ब्राह्मे,—

तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैरित्यादि।

स च पूर्वविद्धायां प्रतिपदि कार्य्यः।

पाद्मे,— श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या।

पूर्वविद्धैव कर्त्तव्या शिवरात्रि र्वलेर्दिनम् ॥ इति।

माधवाचार्य्यास्तु,— वत्सुत्सवस्य पूर्वेद्युरुपवासवदाचरेत्।

इति। उपवासवत् शुक्लप्रतिपदुपवासवदित्यर्थः। एवं च माधवीये व्याख्यातम्। कृष्णप्रतिपदि परविद्धायामुपवासस्य सिद्धान्तितत्वात्।

---

## अथ द्वितीयाविचारः।

अथ द्वितीया। सा च पूर्वविद्धा ग्राह्या,

प्रतिपत् सद्वितीया स्याद्द्वितीया प्रतिपद्युता।

इत्यापस्तम्बोक्तेः।

ननु,— एकादश्यष्टमी षष्ठी द्वितीया च चतुर्द्दशी।

त्रयोदश्यमावास्या उपोष्याः स्युः परान्विताः।

इति भृगुस्मृतिवचनस्य, युग्मवचनस्य च का गतिरिति चेदुच्यते। पूर्वदिने त्रिमुहूर्त्तसत्त्वे एव परदिने त्रिमुहूर्त्तसत्त्वे एतद्वचनात् परविद्धा ग्राह्या। अत्रानन्तभट्टीये यद्व्यवस्थापितं तन्न कस्यापि सम्मतम्। तथाच माधवाचार्य्याः,—

पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा।

सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽपरा ॥ इति।

यमद्वितीया। लैङ्गे। अन्नं दत्ता भगिन्या प्रार्थनीयम्,—

भावात् न सन्देहः। द्वितीये चयगामिले त्रिमुहूर्त्तामप्युत्तरविद्धां परित्यज्य पूर्व्वेद्युरेवानुष्ठेयम्। वृद्धिगामिले साम्ये च परेद्युरेव। तथाच उशनाः,—

खर्व्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्।
खर्व्वदर्पौ परौ कार्य्यौ हिंसा स्यात् पूर्व्वकालिकी॥

तृतीयादिषु चतुर्षु पक्षेषु अस्तमयव्याप्तेः कर्म्मकालबाऊल्यस्य च लाभात् पूर्व्वेद्युरेवानुष्ठेयम्॥

अस्तमयव्याप्तेर्निर्णायकत्वम्, पाद्मे,—

व्रते स्नाने तथा नक्ते पितृकार्य्ये विशेषतः।
यस्यामस्तंगतो भानुः सा तिथिः पुण्यभाग्भवेत्॥

तीर्थस्नानजपहोमादयस्तु व्रतशब्देन संगृहीता इति माधवाचार्य्याः।

इति दानव्रतकालौ।

---

अथ व्रतविशेषेषु काला निरूप्यन्ते। तत्र वत्सरादिः प्रतिपत्। ब्राह्मे,— या शुक्ला चैत्रमासस्य वत्सरादितिथिः स्मृता।
या शुक्ला प्रतिपच्चैत्रमासस्य वत्सरस्य सा॥
पूर्व्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता।
नन्दां संवत्सरादौ तु दर्शविद्धां न कारयेत्॥
परविद्धा प्रकर्त्तव्या द्विमुहूर्त्ता भवेद्यदि।
मुहूर्त्तमेव कर्त्तव्या प्रतिपद् द्वितीयान्विता॥
मुहूर्त्तद्वितयं चैव मुहूर्त्तं यदि चापरे।
वर्त्तते वासरे यस्मिन् प्रातः माब्दतिथि र्भवेत्॥

कार्त्तिकशुक्लप्रतिपदि बलिराजोत्सवः। तत्र ब्राह्मे,—

तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैरित्यादि।

स च पूर्वविद्धायां प्रतिपदि कार्य्यः।

पाद्मे,— श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या।

पूर्वविद्धैव कर्त्तव्या शिवरात्रि र्बलेर्दिनम्॥ इति।

माधवाचार्य्यास्तु,— वत्सोत्सवञ्च पूर्वेद्युरुपवासवदाचरेत्।

इति। उपवासवत् शुक्लप्रतिपदुपवासवदित्यर्थः। एवं च माधवीये व्याख्यातम्। कृष्णप्रतिपदि परविद्धायामुपवासस्य सिद्धान्तितत्वात्।

---

## अथ द्वितीयाविचारः।

अथ द्वितीया। सा च पूर्वविद्धा ग्राह्या,

प्रतिपत् सद्वितीया स्याद्द्वितीया प्रतिपद्युता।

इत्यापस्तम्बोक्तेः।

ननु,— एकादश्यष्टमी षष्ठी द्वितीया च चतुर्द्दशी।

त्रयोदश्यप्यमावास्या उपोष्याः स्युः परान्विताः।

इति भृगुस्मृतिवचनस्य, युग्मवचनस्य च का गतिरिति चेदुच्यते। पूर्वदिने त्रिमुहूर्त्तसत्त्वे एव परदिने त्रिमुहूर्त्तसत्त्वे एतद्वचनात् परविद्धा ग्राह्या। अत्रानन्तभट्टीये यद्व्यवस्थापितं तन्न कस्यापि सम्मतम्। तथाच माधवाचार्य्याः,—

पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा।

सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽपरा॥ इति।

यमद्वितीया। लैङ्गे। अन्नं दत्वा भगिन्या प्रार्थनीयम्,—

भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः ॥

ज्येष्ठा चेदग्रजाताहमित्यूह्यम् ।

कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् ।
या न कुर्य्यात् विनश्यन्ति भ्रातरः सप्तजन्मनि ॥

तस्या इति शेषः ।

भारते,—कार्त्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर ।
यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयम् ॥
तस्यां निजगृहे राजन् न भोक्तव्यमतो बुधैः ।
यत्नेन भगिनीहस्ताद् भोक्तव्यं पुष्टिवर्द्धनम् ॥
दानानि च प्रदेयानि भगिनीभ्यो विशेषतः ।

अत्राष्टधा विभक्तदिवसस्य पञ्चमभागो मुख्यः कर्मकालः । "भोक्तव्यं पुष्टिवर्द्धनम्" इति विधिसमभिव्याहृतफलश्रुत्या भोजननियमस्य प्राधान्यात् । पञ्चमभागस्य च भोजनकालत्वात् । तिथिद्वैधे "द्वितीया प्रतिपद्युता" इत्युक्तेः पूर्वविद्धा ग्राह्या, इति अनन्तभट्टीये यल्लिखितं तन्न । तस्या उक्तेः कृष्णपक्षविषयत्वेन निर्णयात् । तथाच युग्मोक्त्या परविद्धैव ग्राह्या । ज्योतिःशास्त्रे,—

तथा यमद्वितीयायां यात्रायां मरणं ध्रुवम् ।

इति द्वितीयाविचारः ।

---

अथ तृतीया ।

सा चतुर्थीयुता ग्राह्या । आपस्तम्बः,—

द्वितीयाशेषसंयुक्तां तृतीयां कारयेत्तु यः ।

स याति नरकं घोरं कालसूत्रं भयङ्करम् ॥
द्वितीयाशेषसंयुक्तां या करोति विमोहिता।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥

एवं स्कान्देऽपि बहूनि वाक्यानि सन्ति। अत्र त्रिमुहूर्त्तव्याप्त्यैव व्यवस्था। वेधशास्त्रे तथैव निर्णयात्।

कला काष्ठापि वा चैव द्वितीया संप्रदृश्यते।
सा तृतीया न कर्त्तव्या कर्त्तव्या गणसंयुता ॥

इति यत् स्कान्दवचनं, तत् कैमुतिकन्यायेन त्रिमुहूर्त्तं द्रढयतीति माधवाचार्य्याः। परदिने तृतीयाया अभावे एव पूर्वविद्धा ग्राह्या।

वशिष्ठः,—एकादशी तृतीया च षष्ठी चैव त्रयोदशी।
पूर्वविद्धा च कर्त्तव्या यदि न स्यात् परेऽहनि ॥
युग्मवाक्यं रम्भाव्रतविषयत्वेन निर्णयमिति न विरोधः।
रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम।
अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते ॥
इति ब्रह्मवैवर्त्तोक्तः ॥

---

अक्षयतृतीया।

भविष्ये,—वैशाखे मासि राजेन्द्र तृतीया चन्दनस्य च।
कलधौतं तथा धान्यं घृतं वापि विशेषतः ॥
तस्यां दत्तमक्षयं स्यात् तेनेयमक्षया स्मृता।

तृतीया चन्दनस्ने[१]त्युक्तेश्च चन्दनदानं शस्तम् ॥

दानात्तु चन्दनस्येह कञ्जजो नात्र संशयः ।

इति वचनाच्च । कञ्जजो ब्रह्मा ।

आग्नेयादिषु उपानच्छत्रजलपात्रदानान्युक्तानि,—

या शुक्ला कुरुशार्दूल वैशाखे मासि वै तिथिः ।
तृतीया साक्षया लोके गीर्वाणैरभिवन्दिता ॥
योऽस्यां ददाति करकान् वारिवाजसमन्वितान् ।
स याति पुरुषो वीर लोकान् वै हेममालिनः ॥

करकान् कुम्भान् । वाजमन्नम् । हेममालिनः सूर्य्यस्य ।

विष्णुधर्मोत्तरे नक्षत्रविशेषे गुणविशेषः,—

अक्षया सा तिथिर्ज्ञेया कृत्तिकाभिर्युता यदि ।
भविष्यति महाभागे विशेषेण फलप्रदा ॥
वैशाखे मासि राजेन्द्र शुक्लपक्षे च या तिथिः ।
तृतीया रोहिणीयुक्ता अक्षया सा प्रकीर्त्तिता ॥

तथा,— वैशाखे शुक्लपक्षे तु तृतीयायां द्विजोत्तम ।
यद्ददाति नरश्रेष्ठ तत्तदक्षयमश्नुते ॥
विशेषेण तथा दानमक्षतानां महाफलम् ।

ब्राह्मे,— वैशाखे मासि शुक्लायां तृतीयायां जनार्दन ।
यवानुत्पादयामास युगमारब्धवान् कृतम् ॥
ब्रह्मलोकात् त्रिपथगां पृथिव्यामवतारयत् ।
तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् ॥

---

(१) चन्दनस्य चेत्युक्तेः ।

यवान् दद्यात् द्विजातिभ्यः प्रयतः प्राशयेद्यवान् ।
पूजयेच्छङ्करं गङ्गां कैलासं तुहिनाचलम् ॥
भगीरथं च नृपतिं सागराणां सुखावहम् ।
स्नानं दानं तपः श्राद्धं जपहोमादि किञ्चन ॥
श्रद्धया क्रियते यत्तु तदानन्त्याय कल्पते ।
सिन्धोस्तीरे विशेषेण सर्वमक्षयमश्नुते ॥

श्राद्धन्तु श्राद्धप्रकरणे लेख्यम् । दानादौ पूर्ववत् परविद्धा ग्राह्या ॥

---

अथ रम्भातृतीया ।

भविष्योत्तरे,— भद्रे कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम् ।
ज्यैष्ठशुक्लतृतीयायां स्नाता नियमतत्परा ॥

तथापरं रम्भाव्रतं तत्रैव,—

रम्भातृतीयां वक्ष्यामि सर्वपापप्रणाशिनीम् ।
मार्गशीर्षे तथा मासि तृतीयायां नराधिप ॥
शुक्लायां प्रातरुत्थाय दन्तधावनपूर्वकम् । इत्यादि ।

उपसंहारे,— सौभाग्यार्थं पुरा चीर्णं रम्भया राजसत्तम ।
तेन रम्भातृतीयेयं सर्वसौभाग्यदायिनी ॥

सा च पूर्वविद्धा ग्राह्या ।

स्कान्दे,— बृहत्तपा तथा रम्भा सावित्री वटपैतृकी ।
कृष्णाष्टमी च भूता च कर्त्तव्या सम्मुखी तिथिः ॥

ब्रह्मवैवर्त्ते,— रम्भाख्यामित्यादि ।

---

## गौरीव्रतम् ।

शतानन्दसंग्रहे,— गुडपूपाः प्रदातव्या मासि भाद्रपदे सिते ।
तृतीयायां सर्वदानं वासुदेवस्य प्रीतये ॥
उमां शिवं गणेशञ्च विधिवत् पूजयन्ति याः ।
गौरीवरप्रसादेन परं सौभाग्यमाप्नुयुः ॥

तिथिद्वैधे परदिने व्रतम् । नात्र त्रिमुहूर्त्तवेधोऽपि अपेच्यते ।
तथा च माधवाचार्य्याः,—
मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।
शुद्धाधिकायामप्येवं गणयोगः प्रशस्यते ॥

---

## अथ चतुर्थी ।

साच परविद्धा ग्राह्या,—
एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥
इति वृहद्वशिष्ठोक्तेः, युग्मवचनाच्च ।
द्वितीया पञ्चमी चैव दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥
इति वृहद्वशिष्ठवचनान्तरं व्रतान्तरविषयमित्यवधेयम् ।
मङ्गलवारचतुर्थीयोगे फलाधिक्यम्,—
अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण अचयादपि चाचया ।
इति भविष्योक्तेः ॥

---

शिवचतुर्थी ।

शतानन्दसंग्रहे,— मासि भाद्रपदे शुक्ला चतुर्थी शिवपूजिता ।
तस्यां स्नानं तथा दान मुपवासो जपस्तथा ॥
तावत्सहस्रगुणितं प्रसादाद्यतिनो नृप ।
यतिनो योगिनः शिवस्येति यावत् ।

रौद्रत्वादपराह्णोऽत्र पूजाकाल इति निबन्धनकृतः । तिथिद्वैधे परेऽह्नि व्रतम् ॥

---

गौरीगणेशचतुर्थी ।

लिङ्गपुराणे,— चतुर्थ्यां तु गणेशस्य गौर्य्याश्चैव विधानतः ।
पूजां कृत्वा लभेत् सिद्धिं सौभाग्यञ्च नरः क्रमात् ॥

इति । सिद्धिसौभाग्यरूपफलविशिष्टकामो यस्यां कस्याञ्चित् चतुर्थ्यां गौरीगणेशौ पूजयेत् । पूजाकालव्यवस्था वक्ष्यमाणगणेशव्रतवत् द्रष्टव्या ॥

---

विनायकव्रतम् ।

भविष्ये,— विनायकं समभ्यर्च्य चतुर्थ्यां यदुनन्दन ।
सर्वविघ्नविनिर्मुक्तः कार्य्यसिद्धिमवाप्नुयात् ॥
स्कान्दे,— विनायकव्रते कार्य्या सर्वमासेषु षण्मुख ।
चतुर्थी च जयायुक्ता गणनाथस्तुतोषिणी ॥
प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ।
इति कश्यपवचनात् ।
चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।

मध्याह्नव्यापिनी चेत् स्यात् परतस्तु परेऽहनि ॥

इति वृहस्पतिवचनाच्च, परदिन एव मध्याह्नव्याप्तौ परदिने व्रतमन्येषु पक्षेषु पूर्वदिन एव। नात्र सोदयत्रिमुहूर्त्तवेधः, मध्याह्नस्य कर्मकालत्वात्। जयायुक्ता तृतीयायुक्ता। मातृविद्धा तृतीयाविद्धा। शुक्लतिलैः स्नानं, शुक्लतिलान् शिरसि निक्षिप्येति कालादर्शकारः। स्कान्दे,—गजवक्त्रं तु शुक्लायां चतुर्थ्यां पूजयेन्नृप।

मासि भाद्रपदे प्राप्ते शुक्लपक्षे विशेषतः ॥

यदा चोत्पद्यते भक्तिर्मासि पूज्यो गणाधिपः।

एकमासं द्विमासं वा षण्मासं वत्सरं तथा ॥

अथवा गणनाथस्य व्रतं द्वादशवार्षिकम्।

एवं सति यदा आत्यायिककार्य्यसिद्धिकामो भवेत्, तदैव यस्मिन् कस्मिंश्चन मासे शुक्लचतुर्थ्यां गणेशव्रतं कुर्य्यात्। "यदा चोत्पद्यते" इति वचनात्। भाद्रमासे यद्व्रतारम्भं कुर्वन्ति तत्र विशेषत इति फलाधिक्यात् प्रतीचासह-कार्य्येष्वेवेति ज्ञेयम्। अन्यथा सीतान्वेषणार्थं हनूमता आचरितस्य व्रतस्य शरत्काले कार्य्यत्वं न स्यात्। एवं अमृताहरणादावपि ज्ञेयम्। एतदपि एकमास-पक्षे प्रमाणम्। तथा कार्य्यगौरवमपेक्ष्य द्विमासं व्याप्य व्रतं दिवार-मित्यर्थः। तथा अधिकविघ्नाशङ्कायां षण्मासं व्याप्य व्रतम्। षण्मा-सैरेव व्रतस्य समाप्तिः। वत्सरपक्षेऽपि द्वादशभिर्मासैर्मलमासपाते तु त्रयोदशमासैरिति कालशुद्धिप्रकरणे लेख्यम्। अत्यधिक-कार्य्यगौरवे द्वादशवर्षपक्षे प्रतिशुक्लचतुर्थि द्वादशवर्षपर्य्यन्तं व्रतं कार्य्यमिति साधीयः। अस्मिन् द्वादशवर्षपक्षे यत् प्रतिवत्सरं

भाद्रशुक्लचतुर्थ्यामेकवारमनुतिष्ठन्ति, तदपि अज्ञानविलसितमिति ज्ञेयम् ॥

अत्र वर्षासु भवं वार्षिकं व्रतं द्वादशेति केचिद्व्याख्यापयन्ति, तन्मन्दमेव। एकवचनान्तव्रतशब्दस्य द्वादशेत्यनेनान्वयाभावात्। एकमासमित्यस्य एकैकमासमित्यर्थः कुतो भवेत्। एवं द्विमासादिषु ज्ञेयम्। "संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वमिष्यते" इति भाष्यकारोक्त्या यथाकथञ्चित् समाधेयमिति चेत्, वत्सरं तथेत्यावृत्तौ न काचित् गतिरस्तीति सोऽर्थो हेय एव। किञ्च हनुमत्गरुडादीनामेकवारानुष्ठाने फलप्राप्तिरपि विरुद्धा स्यादिति दिक् ॥

व्रतेऽस्मिन् विशेषो, वाराहे,—

शुक्ला चतुर्थी कन्यार्कभौमवारेण संयुता।

महती तत्र विघ्नेशमर्चित्वेष्टं लभेन्नरः ॥

अर्कवारेण भौमवारेणेति वा कालादर्शवचनात् बोध्यम् ॥

इति विनायकव्रतम्।

---

अथ तद्दिनकर्त्तव्यानि।

विनायकं समभ्यर्च्येत्यनन्तरं भविष्ये, "तद्दिने निद्रां मतिं श्रियाम्" इत्याद्युक्त्वा,

विद्याकामो विशेषेण पूजयेच्च सरस्वतीम्।

इति विहितस्य सरस्वतीपूजनस्य तु यस्यां रात्रौ चतुर्थी भवति तस्यामेव करणं समाचारमूलम्। अस्यां भाद्रशुक्लचतुर्थ्यां रात्रौ चन्द्रदर्शनं निषिद्धम्।

तथाच पाद्मे,—शुक्लपक्षे चतुर्थ्यां तु सिंहे चन्द्रस्य दर्शनम् ।

मिथ्याभिशंसनं कुर्य्यात् तस्मात् पश्येन्न तं सदा ।

सिंहे भाद्रे मासि ।

ब्राह्मे,—वासुदेवोऽभिशस्तस्तु निशाकरमरीचिषु ।

स्थितश्चतुर्थ्यामद्यापि मनुष्यायापतेच सः ॥

अतश्चतुर्थ्यां चन्द्रन्तु प्रमादादीक्ष्य मानवः ।

पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः ॥

धात्रीवाक्यं तत्रैव,—

सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।

सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥

कृष्णोऽपि तद्रात्रौ चन्द्रकिरणेषु स्थित इति ।

अभिशापमाप, अद्यापि सोऽभिशापोऽपवाद इति यावत् मनुष्याय आपतेदित्यर्थः । अतएवेयं चतुर्थी हरितालिकेति प्रसिद्धा । हरेः श्रीकृष्णस्य, तालिका अपवाददायिका इति यावत् । डलयोरैक्यात् । तस्मात् चन्द्रेक्षणं निषिद्धम् । प्रमादात् तद्वीक्षणे सिंहप्रसेनमित्यादिमन्त्रं पठेदित्यर्थः । चतुर्थ्यां चन्द्रदर्शनस्य निषेधात् । "निषेधः कालमात्रके" इत्युक्तेस्तद्रात्रौ तृतीयया पञ्चम्या वा विद्धायां तद्रात्रिगततृतीयापञ्चम्योश्चन्द्रदर्शनसमाचारः ।

पञ्चाननगते भानौ पक्षयोरुभयोरपि ।

चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥

इत्यत्र शुद्धमासमलमासाभिप्रायेण पक्षयोरित्युक्तेर्मलमासेऽपि चन्द्रदर्शनं निषिद्धम् । अतएव पञ्चाननगते इति सौरमासोक्तिः ।

अतएव,— सीमन्तं प्रेतकृत्यं च नवशय्या नवः शशी ।

मलमासेऽपि कर्त्तव्यं निमित्तविहितञ्च यत् ॥

इति स्मृत्यन्तरान्मलमासेऽपि नैमित्तिकचन्द्रदर्शननिषेधस्य परि-पालनसमाचारः। उदितशब्दोऽचाद्वौदितव्यावृत्तिपरः, स्वरूपव्या-ख्यानपरो वेति तिथितत्वकाराः। यत्तु तु पञ्चाननगते भानाविति वाक्यमवलम्ब्य शुद्धकृष्णपक्षेऽपि चन्द्रदर्शनं निषिद्धमित्यलिखन्, तत् शुक्लपक्ष इत्यादिपाद्यादिवाक्यविरोधान्नाद्रियत एवास्मद्देशे। नाग-चतुर्थीव्यवस्था नागपञ्चम्यङ्गत्वात् तत्र लेख्या ॥

---

वरदाचतुर्थी ।

नारदीये,— माघशुक्लचतुर्थ्यां तु गौरीमाराधयेद्बुधः ।

चतुर्थी वरदा नाम गौरी तत्र सुपूजिता ।

अत्र व्रतसामान्यात् सोदयत्रिमुहूर्त्तव्यापिनी ग्राह्या। तिथिद्वैधे तृतीयाविद्धैव। नात्र युग्मोक्तेः प्रसरः।

जया च यदि सम्पूर्णा चतुर्थी दृश्यते यदि ।

जया सैव हि कर्त्तव्या नागविद्धां न कारयेत् ॥

इति विशेषस्मृतेः। तथा च माधवाचार्य्याः,—

गौर्याः शुद्धजयायस्तु नागविद्धा निषिध्यते ।

---

अथ पञ्चमी ।

सा चोपवासे चतुर्थीयुता ग्राह्या। व्रतेऽपि तथा।

चतुर्थीसंयुता कार्य्या पञ्चमी परया नतु ।

-पञ्चमी तु सदा ग्राह्या चतुर्थीसहिता विभो ।

यत्तु ब्रह्मवैवर्त्ते,—

पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद । इति ।

तत् स्कन्दषष्ठ्यां स्कन्दोपासनाय विहितं पञ्चम्युपवासं विषयीकरोति

"स्कन्दोपवासे स्त्रीकार्य्या पञ्चमी परसंयुता" ।

इति वाक्यशेषात् । तथा च, स्कन्दोपवासपञ्चमीव्यतिरिक्त-पञ्चमीषु पूर्वविद्धैव ॥

श्रावणशुक्लपक्षे जायद्गौरीपञ्चमी ।

पुराणे,—पद्मनाभे गते शय्यां सर्वै र्देवै रनन्तरम् ।

पञ्चम्यामसिते पक्षे समुत्तिष्ठन्ति पन्नगाः ॥

सुप्ते तु देवदेवेशे पञ्चमी व्यालपञ्चमी ।

कुर्य्युस्तत्र यथाशक्त्या जायद्गौरीमहोत्सवम् ॥

देवैरिति सहार्थे तृतीया । असिते शुक्लपक्षे । सितिर्धवलमे-चकाविति कोषात्, शुक्लपक्षे समाषाढ़ हरिशयनानन्तरं श्रावणमास इत्यर्थः । आषाढ़े शयनविधा आव जायद्गौरी इत्याख्या । इयं पूजा र ०, स्वप्रवणात

पूजयेद्गन्धपुष्पैश्च सर्पिःपायसगुग्गुलैः।
तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः॥
आसप्तमात् कुलात्तस्य न भयं नागतो भवेत्।
तस्मात् सर्वप्रयत्नेन नागान् संपूजयेद् बुधः॥

इयं नागपूजा दिवैव। नागानां नामानि पञ्चम्यां लेख्यानि। रक्षाविधानं तु रात्रौ क्रियते। रात्रिपदेन प्रदोष एवात्र ज्ञेयः। भविष्ये,—यः श्रावणे स्रवति शीतजले सुरेन्द्र

रक्षाविधानमिदमाचरते मनुष्यः।
आस्ते सुखेन परमेण स वर्षमेकं
पुत्रप्रियादिसहितः ससुहृज्जनश्च॥

श्रावण इति चैत्रशुक्लादिमासाभिप्रायेण।

रक्षाकरणमन्त्रो यथा,—

घण्टाकर्ण महावीर सर्वव्याधिनिवारण।
सर्वोपद्रवसंघातविद्रावण हरप्रिय॥
कण्ठे यस्य महानीलं भूषणं यस्य पन्नगाः।
तेजांसि तस्य देवस्य रक्षन्तु मम मन्दिरम्॥

रज्जुधारणमन्त्रो यथा,—

येन बद्धो बली राजा दानवेन्द्रो महासुरः।
तेन त्वामपि बध्नामि रक्षामाचर मा चल॥

यद्युभयदिने पञ्चमी रात्रिं स्पृशति। तदा पूर्वदिने रक्षाविधानमिति निबन्धनकृतः॥

---

ऋषिपञ्चमी ।

स्मृतिसमुच्चये,—भाद्रे सितेऽपराह्णे तु पञ्चमी यत्र तिष्ठति ।

विश्वामित्र ऋषिः स्मार्त्तः पूज्यः सन्तानवृद्धये ॥

अपराह्णः कर्मकालः । तत्र तिथिद्वैधे पूर्वविद्धैव ग्राह्या ।

षष्ठीयुक्ता पञ्चमी या महर्षेस्तत्र पूजने ।

पतिपुत्रहता नारी सा नारी नरकं व्रजेत् ॥

इति शतानन्दसंग्रहोक्तेः ॥

---

घोटकपञ्चमी ।

देवीपुराणे,—आश्विनस्यासिते पक्षे पञ्चमी या तिथिर्भवेत् ।

तस्यां शान्तिं प्रकुर्वीत अश्वानां वृद्धये सदा ॥

इत्यादिना रेवन्तादिपूजाविधिमुक्त्वा[१],

एवं नमस्कृत्य मुक्तं यः शान्तिं कारयेन्नृपः ।

तस्याश्वाः प्रविवर्द्धन्ते अश्वपूर्णं च मन्दिरम् ॥

इत्युक्तत्वात् नृपस्यावश्यकी पूजा । "पञ्चमी सप्तमी चैव" इति वाक्यात् सायाह्नव्याप्ता व्यवस्थेत्यमृतपितामहकृतनीतिरत्नाकरे लिखितम् ॥

---

नागपञ्चमी ।

भविष्ये,—श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।

द्वारस्योभयतो लेख्या गोमयेन विषोल्वणाः ॥

अनन्तो वासुकिश्चैव राजीवो मणिभद्रकः ।

(१) इत्यादिपूजामुक्त्वा ।

ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ ॥
पूजयेद्विधिवद्वीर दधिदुर्वाङ्कुरैः कुशैः ।
गन्धपुष्पोपचारैश्च ब्राह्मणानां च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान् भक्तिपुरःसराः ।
न तेषां सर्पतो वीर भयं भवति कुत्रचित् ॥

इति। श्रावणमासे विहितमपीदं व्रतं कार्त्तिकमासे कुर्वन्ति ॥

एवं चतुर्षु मासेषु पञ्चम्यां यः प्रपूजयेत् ।
आसप्तमात् कुलात्तस्य न भयं सर्पतो भवेत् ॥

इति वाक्यान्तरे चातुर्मास्यमध्ये यस्मिन् कस्मिन्नपि मासे शुक्लपक्षे तद्व्रतोक्तेः।

पुराणान्तरे,—तिथौ युगाह्वयायां च समुपोष्य यथाविधि ।

शङ्खपालादिनागानां शेषस्य च महात्मनः ॥
पूजा कार्य्या गन्धपुष्पक्षीराप्यायनपूर्वकम् ।

* इति। अन्यनागानां पूजोक्तेति तेषां नागानां विकल्पः। युगाह्वया युगसंज्ञका चतुर्थीत्यर्थः। तत्र तिथिद्वैधे विचारः। तत्रादौ तदङ्गभूता नागचतुर्थी विचार्य्यते। तत्र मध्याह्नः कर्मकालः।

युगं मध्यन्दिने यत्र तत्रोपोष्य फणीश्वरान् ।
क्षीरेणाप्याय्य पञ्चम्यां पूजयेत् प्रयतो नरः ॥
विषाणि तेषां नश्यन्ति न च हिंसन्ति पन्नगाः ।

इति देवलोक्तेः। "पञ्चम्यां पूजयेत्" इत्येतद्वचनात् पञ्चमीयोगस्य प्राशस्त्यमवगम्यत इति। तदङ्गभूता नागचतुर्थी पूर्वेद्युरेव मध्याह्नव्याप्तौ पूर्वेद्युः। अन्येषु पञ्चसु भेदेषु उत्तरविद्धैव। नागपञ्चम्यां

सोदयत्रिमुहूर्त्तव्याप्तिरेव ग्राह्या। केचित्तु "युगं मध्यन्दिने" इत्युक्ते नागपञ्चम्यां मध्याह्नः कर्मकाल इति लिखितम्। तत् प्रमादविलसितमेव। चतुर्थीवचनस्य पञ्चम्यामप्रवृत्तेः। नागपञ्चम्यास्तु नागचतुर्थ्यधीनत्वेन मध्याह्नव्याप्तेरनियतत्वाच्च ॥

---

श्रीपञ्चमी।

धवलसंग्रहे,—पञ्चम्यां कुन्दकुसुमैः कौन्दी पूज्या समृद्धये।

कौन्दी सरस्वती। तथा,—

सौभाग्यमुत्तमं कुर्य्यात् पञ्चम्यां श्रीरपि श्रियम्।

श्रीरत्र सरस्वती। वरदाचतुर्थ्यनन्तरं एतद्वचनस्योक्तत्वादियं माघशुक्लपञ्चमीति ज्ञायते।

यद्यपि गौड़संवत्सरप्रदीपे,—

माघे मासि सिते पक्षे पञ्चमी या श्रियः प्रिया।
तस्याः पूर्वाह्ण एवेह कार्य्यः सारस्वतोत्सवः ॥

तथाप्यस्मद्देशशिष्टैः रात्रावेव सरस्वतीपूजा क्रियते ॥

---

अथ षष्ठी।

सा च सप्तमीयुता ग्राह्या।

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्द्दशी।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

इति विष्णुधर्मोक्तेर्युग्मवचनाच्च।

न हि षष्ठी नागविद्धा कर्त्तव्या तु कदाचन।

नागविद्धा तु या षष्ठी छतपुण्यचया भवेत् ॥

सप्तम्या सह कर्त्तव्या महापुण्यफलप्रदा ।

इति ब्रह्मवैवर्त्तोक्ते मतेऽपि सप्तमीयुतैव ग्राह्या । नागः पञ्चमी। पुण्यस्य चयो यस्यां सा तथोक्ता। यदि कदाचित्तिथिचयवशादुत्तरविद्धा न लभ्यते। तदाऽगत्या पूर्वविद्धा ग्राह्या। तदाह वशिष्ठः,—

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।

पूर्वविद्धा तु कर्त्तव्या यदि न स्यात् परेऽहनि ॥

---

आरण्यकषष्ठी ।

सत्यः,— ज्यैष्ठे मासि सिते पक्षे षष्ठ्यामारण्यकव्रते ।

या विन्ध्यवासिनीं देवीं पूजयेयु र्वनेगताः ॥

कन्दमूलफलाहारा लभन्ते सन्ततिं हि ताः ।

राजमार्त्तण्डे,— ज्यैष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञका ।

व्यजनैककरास्तस्यामटन्ति विपिने स्त्रियः ॥

तां विन्ध्यवासिनीं स्कन्दषष्ठीमाराधयन्ति च ।

कन्दमूलफलाहारा लभन्ते सन्ततिं हि ताः ॥

स्कन्दषष्ठीमित्यत्यन्तसंयोगे द्वितीया । तथाचास्याः आरण्यकषष्ठी स्कन्दषष्ठी चेति नामद्वयम् । चैत्रकृष्णपक्षे वक्ष्यमाणा तु स्कन्दषष्ठ्येव । तिथिद्वैधे पूर्वविद्धा ग्राह्या ।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।

एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥

इति वशिष्ठोक्तेः ॥

---

षष्ठीदेवीषष्ठी ।

यया भाद्रस्य शुक्लायां षष्ठ्यां षष्ठी सपूजिता ।
जीवत्पुत्रा च सौभाग्यधनधान्यसमन्विता ॥
तस्माद् यत्नेन नार्य्यस्तां पूजयन्ति सदैव तु ।,

अत्र षष्ठीसाधारणेन व्यवस्था, विशेषाभावात् ।

---

प्रावरणषष्ठी ।

कौर्म्मे,—या तु मार्गशिरे शुक्ला महाषष्ठी नराधिप ।
देवद्विजसुहृद्भ्यश्च शीतघ्नं तत्र दापयेत् ॥

शीतघ्नशब्देन वस्त्रकम्बलपटीप्रभृतयः । अत्र दानोक्त्या सोदयत्रिमुहूर्त्तः कर्मकालः ॥

---

चैत्रकृष्णस्कन्दषष्ठी ।

चैत्रमधिकृत्य देवीपुराणे,—
षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्वोपकारिका ।
इहैव सुखसौभाग्यमन्ते विष्णुपुरं व्रजेत् ॥

लैङ्गेऽपि,—प्रत्यब्दमपि पूजा च षष्ठ्यां कार्य्या गुहस्य च।
व्यवस्थोक्ता ॥

---

अथ सप्तमी ।

सा च पूर्वविद्धा ग्राह्या । युग्मोक्तेः, सम्मुखीतिथित्वाच्च ।
षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी ।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् ॥
इति स्कान्दे उत्तरविद्धाया निषेधाच्च । अतोऽपि षष्ठीविद्धैव ।

षष्ठी तु सप्तमी यत्र अन्योन्यं तु समाश्रिते ।
पूर्वविद्धा द्विजश्रेष्ठ कर्त्तव्या सप्तमी तथा[१] ॥

इति विष्णुपुराणोक्तेः । यदा पूर्वेद्युरस्तमयपर्य्यन्ता षष्ठी, परेद्युः तिथिक्षयवशादस्तमयादर्वाक् अष्टमी त्रिमुहूर्त्ता, तदा पूर्वविद्धाया अलाभादुत्तरविद्धायाश्च प्रतिषिद्धत्वात् कुत्रानुष्ठानमिति चेन्निषेधमुल्लङ्घ्यापि उत्तरविद्धायामनुष्ठानम् । "शेषिलोपस्यान्याय्यत्वादुत्तरविद्धा गौणकालत्वेन स्वीकार्य्या" इति माधवाचार्य्याः । तथाच सर्वेषु सप्तमीव्रतेषु "पञ्चमी सप्तमी चैव" इति पैठीनसुक्तेः,

सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदा ।

इति स्कान्दोक्तेः सायाह्नव्याप्तौ व्यवस्था ॥

---

कुक्कुटीव्रतम् ।

भविष्ये,—भाद्रे मासि सिते पक्षे सप्तम्यां ललितालये ।
स्नात्वा शिवं मण्डलके लेखयित्वा च साम्बकम् ॥
भक्त्या संपूज्य विधिवत् करे बद्धा सुडोरकं । इत्यादि ।

अत्र सप्तमीसाधारणी व्यवस्था ॥

---

माघसप्तमी ।

स्मृतिसमुच्चये,—सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां स्नानं तत्र महाफलम् ॥

तत्रैव,— सूर्य्याय फलगन्धार्कपत्ररक्तप्रसूनवत् ।
दद्यादुत्थाय तत्रार्घं सप्तधा यदि वा त्रिधा ॥

---

(१) सन्मुखी

षष्ठीदेवीषष्ठी ।

यथा भाद्रस्य शुक्लायां षष्ठ्यां षष्ठी प्रपूजिता ।
जीवत्पुत्रा च सौभाग्यधनधान्यसमन्विता ॥
तस्माद् यत्नेन नार्य्यस्तां पूजयन्ति सदैव तु ।
अत्र षष्ठीसाधारण्येन व्यवस्था, विशेषाभावात् ।

---

प्रावरणषष्ठी ।

कौर्मे,— या तु मार्गशिरे शुक्ला महाषष्ठी नराधिप ।
देवद्विजसुदद्भ्यश्च शीतघ्नं तत्र दापयेत् ॥
शीतघ्नशब्देन वस्त्रकम्बलपटीप्रभृतयः । अत्र दानोक्त्या सोदय-
त्रिमुहूर्त्तः कर्मकालः ॥

---

चैत्रकृष्णस्कन्दषष्ठी ।

चैत्रमधिकृत्य देवीपुराणे,—
षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्व्वोपकारिका ।
इहैव सुखसौभाग्यमन्ते विष्णुपुरं व्रजेत् ॥
लैङ्गेऽपि,—प्रत्यब्दमपि पूजा च षष्ठ्यां कार्य्या गुहस्य च ।
व्यवस्थाद्युक्ता ॥

---

अथ सप्तमी ।

सा च पूर्व्वविद्धा ग्राह्या । युग्मोक्तेः, सम्मुखीतिथिलाभाच्च ।
षष्ठ्येकादश्यमावास्या पूर्व्वविद्धा तथाष्टमी ।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् ॥
इति स्कान्दे उत्तरविद्धाया निषेधाच्च । व्रतेऽपि षष्ठीविद्धैव ।

षष्ठी तु सप्तमी यत्र अन्योन्यं तु समाश्रिते ।
पूर्वविद्धा द्विजश्रेष्ठ कर्त्तव्या सप्तमी तथा[१] ॥

इति विष्णुपुराणोक्तेः । यदा पूर्वेद्युरस्तमयपर्य्यन्ता षष्ठी, परेद्युः तिथित्रयवशादस्तमयादर्वाक् अष्टमी त्रिमुहूर्त्ता, तदा पूर्वविद्धाया अलाभादुत्तरविद्धायाश्च प्रतिषिद्धत्वात् कुत्रानुष्ठानमिति चेन्निषेधमुल्लङ्घ्यापि उत्तरविद्धायामनुष्ठानम् । "शेषिलोपस्यान्याय्यत्वादुत्तरविद्धा गौणकालत्वेन स्वीकार्य्या" इति माधवाचार्य्याः । तथाच सर्वेषु सप्तमीव्रतेषु "पञ्चमी सप्तमी चैव" इति पैठीनस्युक्तेः,

सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदा ।

इति स्कान्दोक्तेः सायाह्नव्याप्तौ व्यवस्था ॥

---

कुक्कुटीव्रतम् ।

भविष्ये,—भाद्रे मासि सिते पक्षे सप्तम्यां ललितालये ।
स्नात्वा शिवं मण्डलके लेखयित्वा च साम्बकम् ॥
भक्त्या संपूज्य विधिवत् करे बद्धा सुडोरकं । इत्यादि ।

अत्र सप्तमीसाधारणी व्यवस्था ॥

---

माघसप्तमी ।

स्मृतिसमुच्चये,—सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां स्नानं तत्र महाफलम् ॥

तत्रैव,— सूर्य्याय फलगन्धार्कपत्ररक्तप्रसूनवत् ।
दद्यादुत्थाय तत्रार्घं सप्तधा यदि वा त्रिधा ॥

---

(१) सम्मुखी

मात्स्ये,— माघमासस्य सप्तम्यामुदयत्येव भास्करे ।
विधिवत्तु तिलस्नानं महापातकनाशनम् ॥
भविष्ये,— माघे मासि सिते पक्षे सप्तमी कोटिभास्करा ।
दद्यात्स्नानार्घदानाभ्यामायुरारोग्यसम्पदः ॥
अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥

कोटिभास्करा सप्तम्याः भास्करदेवताकत्वेन कोटिसप्तमीतुल्येत्यर्थः । स्नानमन्त्रो यथा,—

यद्यद् जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी ॥
अर्घमन्त्रस्तु,— जननी सर्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिके देवि नमस्ते रविमण्डले ॥
सप्तसप्तिवह प्रीत सप्तदीपप्रदीपक ।
नमस्कारमन्त्रस्तु,—सप्तम्याञ्च नमस्तुभ्यं नमोऽनन्ताय वेधसे ॥

अक्षारभोजनं कुर्वन्तीति कृत्यकौमुदीकाराः ।
तद्द्रव्याणि यथा,—

गव्यमक्षिसमसञ्च तिलमुद्गौ च मागधी ।
तथा,— आमतण्डुलमुद्गाश्च सद्योदधिघृतं[1] पयः ।
अक्षाराः कथिता ह्येते अन्ये क्षाराः प्रकीर्त्तिताः ॥
दन्तकाष्ठं तथैवापक्षिकटु त्रिफला तथा ॥
भोज्यपात्रं तथैवैतदक्षारं परिचक्षते ।

---

(१) दधिसद्योघृतं ।

सुण्ठीपिप्पलीमरीचानि त्रिकटु ।

हरीतकीविभीतक्यामलक्यस्त्रिफला तथा ।

उभयत्रारुणोदयकालव्याप्तौ पूर्व्वत्र स्नानम् ।

चतस्रो घटिकाः प्रातररुणोदय उच्यते ।

यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥

त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।

नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञके ॥

इति ब्रह्मवैवर्त्तवाक्येन पूर्व्वस्यारुणोदयकालस्य परदिनाङ्गत्वोक्तेः। एतच्च सप्तमीस्नानं नित्यप्रातःस्नानं कृत्वा सन्ध्यातः पूर्व्वं पुनर्माघस्नानं कृत्वा सन्ध्यातः पूर्व्वमेव पुनः कार्य्यम् । एतद्विचारो वैशाखमासेऽनुसन्धेयः ।

अथ कोणार्कचैत्रे विशेषफलम् । ब्राह्मे,—

माघे मासि सिते पक्षे सप्तम्यां संयतेन्द्रियः ।

कृतोपवासो यस्तत्र गत्वा तु मकरालये ॥

कृतशौचो विशुद्धात्मा स्मरेद्देवं दिवाकरम् ।

सागरे विधिवत् स्नात्वा शर्वर्य्यन्ते समाहितः ॥

देवानृषीन्मनुष्यांश्च पितॄन् सन्तर्प्य च द्विजान् ।

उत्तीर्य्य वाससी धौते निर्म्मले परिधाय च ॥

आचम्य प्रयतो भूत्वा तीरे तस्य महोदधेः ।

इत्यादि बहुग्रन्थेषु सूर्य्यपूजार्घादिकमुक्त्वा,

सूर्य्यगङ्गाम्भसि स्नात्वा कुशैरासिच्य मूर्द्धनि ।

सर्व्वपापविनिर्मुक्तो नरो याति त्रिपिष्टपम् ॥

तथा,—योगं विवस्वतः प्राप्य ततो मोक्षमवाप्नुयात् ।
अत्र विधिवाक्यानि ब्राह्मे द्रष्टव्यानि ॥

---

अथ अष्टमी ।

तत्र कृष्णाष्टमी सप्तमीविद्धा ग्राह्या । तथाच निगमे,—
कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धैव कर्त्तव्या परविद्धा न कस्यचित् ॥
उपवासादिकार्येषु ह्येष धर्मः सनातनः ।
शुक्लाष्टमी तु नवमीयुता ग्राह्या ।
शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥
उपवासादिकार्येषु ह्येष धर्मः सनातनः ।
इति निगमोक्तेः । युग्मवाक्यमपि शुक्लपक्षपरम् । एवं,
नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता ।
नवम्या सह कार्य्या स्यादष्टमी नात्र संशयः ॥
इति ब्रह्मवैवर्त्तवाक्यान्यपि शुक्लाष्टमीपराण्येव ।
तत्र काम्योऽष्टम्युपवासो देवीपुराणे,—
एकादशी कोटिसहस्रतुल्याऽमिताष्टमी पर्वतराजपुत्र्याः ।
ततोऽपि शुक्ला गुणिता शतेन पराशरव्यासवशिष्ठमुख्यैः ॥
भविष्ये,—शुक्लपक्षे तथाष्टम्यामुपवासपरायणः ।
मालतीकरवीरेण बिल्वपत्रैश्च पूजयेत् ॥
दुर्गेति नाम जप्तव्यं पुरतोऽष्टशतं नृप ।

सर्वमङ्गलनाशेति जप्तव्यं किल भारत ॥

तथा,— चतुर्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः।

योऽब्दमेकं न भुञ्जीत शिवार्चनपरो नरः ॥

यत् पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनाम्।

तत् फलं सकलं तस्य शिवलोकं स गच्छति ॥

सततसत्रयजनाक्षयपुण्यप्राप्तिः, शिवलोकप्राप्तिश्च फलम्। फाल्गुनशुक्लाष्टमीचतुर्दश्योरारभ्य वर्षं यावत् प्रत्यष्टमीचतुर्दश्युपवासव्रतम् ॥

---

## अशोकाष्टमी।

लैङ्गगारुडयोः,— अशोकस्याष्टकलिका ये पिबन्ति पुनर्वसौ।

चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥

बुधवारयोगे विशेषः,—

चैत्रे मासि सिते पक्षे वृषलग्ने पुनर्वसौ।

स्रोतः स्नात्वा बुधाष्टम्यां वाजपेयफलं लभेत् ॥

अशोकैरर्चयेद्रुद्रमशोककलिकाः पिबेत्।

उग्रं शिवम्। इति नक्षत्रवारयोर्योगे फलाधिक्यम्। तयोरभावेऽपि तिथिमात्रे तत्पानम्।

मीने मधौ शुक्लपक्षे अशोकाख्या तथाष्टमी।

पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि ॥

इति स्कान्दोक्तेः। लौहित्यवारिणि ब्रह्मपुत्राख्यनदजले।

काम्यं स्नानमाह विष्णुः,— तदभावे स्रोतोमात्रेऽपि,—

पुनर्वसुबुधोपेतां चैत्रे मासि सिताष्टमीम् ।
स्रोतःसु विधिवत् स्नात्वा वाजपेयफलं लभेत् ॥

इति। जलगण्डूषेऽष्टाशोककलिकाः स्थापयित्वाभिमन्त्रणम् ।
मन्त्रस्तु,—त्वामशोक हराभीष्ट मधुमाससमुद्भव ।
पिवामि शोकसन्तप्तो मामशोकं सदा कुरु ॥

इमं मन्त्रं पौराणिकत्वात् स्त्रिय शूद्रा अपि पठेयुः। स्त्रीभिश्च नोहः कर्त्तव्यः प्रकृतावपूर्वत्वादिति । जैमिनिन्यायेन प्रकृतावूहाभावात् । एतत्पानस्य भोजनरूपत्वादष्टधाविभक्तस्याह्नः पञ्चमभागः कर्मकालः । तत्र तिथिद्वैधे परविद्धैव ग्राह्या । सामान्यशुक्लाष्टमीत्वात् । फलं तत्र मन्त्रलिङ्गात् शोकाभावः । ज्येष्ठाव्रतादीनामस्मद्देशे समाचाराभावात् न तद्व्यवस्थोक्ता ॥

---

कृष्णजयन्त्यष्टमीव्रतम् ।

तत्स्वरूपं स्कान्दे,—जयं पुण्यञ्च कुरुते जयन्तीमिति तां विदुः ।
रोहिणीसहिता कृष्णाष्टमी या श्रावणाष्टमी ।'
विष्णुधर्मोत्तरे,—रोहिणी च यदा कृष्णपक्षेऽष्टम्यां युधिष्ठिर ।
जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः ॥
तदकरणे स्कान्दे,—शूद्रान्नेन तु यत्पापं शवहस्तस्य भोजने ।
तत्पापं लभते कुन्ति जयन्त्यां भोजने कृते ॥
ब्रह्मघ्नस्य सुरापस्य गोवधे स्त्रीवधेऽपि वा ।
न लोको यदुशार्दूल जयन्तीविमुखस्य च ।
तथा,—न करोति यदा विष्णोर्जयन्तीसम्भवं व्रतम् ।

यमस्य वशमापन्नः सहते नारकीं व्यथाम् ॥

विष्णुरहस्यविष्णुपुराणयोस्तत्करणे फलम्,—

रोहिण्यामर्द्धरात्रे तु यदा कृष्णाष्टमी भवेत् ।

तस्यामभ्यर्च्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥

भविष्योत्तरे,—जयन्त्यामुपवासश्च कृत्वा योऽभ्यर्च्चयेद्धरिम् ।

तस्य जन्मशतोद्भूतं पापं नाशयतेऽच्युतः ॥

कौमारे यौवने बाल्ये वार्द्धके यदुपार्जितम् ।

तत्पापं नाशयेत् कृष्ण स्तथा तस्यां सुपूजितः ॥

एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम् ।

वर्षे वर्षे भागवतो मद्भक्तो धर्मनन्दन ॥

नरो वा यदि वा नारी यथोक्तं फलमश्नुते ।

पुत्रसन्तानमारोग्यं धनधान्यर्द्धिमद् गृहम् ॥

शालीक्षुयवसम्पूर्णं मण्डलं सुमनोहरम् ।

तस्मिन् राष्ट्रे प्रभुर्भुङ्क्ते दीर्घायुर्मनसेप्सितान् ॥

परचक्रभयं नास्ति तस्मिन् राष्ट्रेऽपि पाण्डव ।

पर्जन्य. कामवर्षी स्यादीतिभ्यो न भयं भवेत् ॥

यस्मिन् गृहे पाण्डुपुत्र लिख्यते देवकीव्रतम् ।

न तत्र मृतनिष्क्रान्ति र्न गर्भपतनं भवेत् ॥

न च व्याधिभयं तत्र भवेदिति मतिर्मम ।

न वैधव्यं न दौर्भाग्यं न तत्र कलहो गृहे ॥

सम्पर्केणापि यः कुर्य्यात् कश्चिज्जन्माष्टमीव्रतम् ।

विष्णुलोकमवाप्नोति सोऽपि पार्थ न संशयः ॥

इति प्रत्यवायवीप्सयोः श्रवणात् फलश्रवणाच्च एतद्व्रतं नित्य-काम्यम् ।

नित्य सदा यावदायुर्वीप्साप्रयोगः फलाश्रुतिः ।
प्रत्यवायोऽनुकल्पश्चेत्यष्टौ नित्यत्वबोधिकाः ॥

इति संग्रहोक्तयादिषु एषां नित्यादिशब्दानामष्टानां मध्ये एक-स्याप्युक्तौ नित्यत्वसिद्धेः । काम्यतया करणे नित्यत्वस्यापि सिद्धिः ।

काम्येन नित्यसिद्धिः स्यात् प्रयोगो नोभयात्मकः ।

इति स्मृतेः । एकस्य तूभयत्वे, संयोगपृथक्त्वमिति जैमिनि न्यायेन, "अग्निहोत्रं जुहुयात्" "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यादिवदेकप्रयोगादुभयसिद्धिः । किन्तु काम्ये सर्वाङ्गोपसंहारे, नित्ये तु अङ्गवैगुण्येऽपि फलमिति । अत्र शूद्रादेरप्यधिकारः, नरो वेति मनुष्यमात्राधिकारोक्तेः । स्त्रीणां स्फुटोऽधिकारः ।

जयन्त्यामुपवासश्च महापातकनाशनः ।
सर्वैः कार्यो महाभक्त्या पूजनीयश्च केशवः ॥

इति भविष्योक्तेः, सर्वैः शैवादिभिः सर्ववर्णैश्च कार्यमिदं व्रतम् । भविष्योत्तरे तु,—

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति ब्रह्मराक्षसः ॥ इत्यादि ।

तथा,— वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम् ।
न करोति महाप्राज्ञा व्याली भवति कानने ॥

स्कान्देऽपि,— ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम् ।
ते भवन्ति नराः प्राज्ञा व्याला व्याघ्राश्च कानने ॥

अतीतानागतं तेन कुलमेकोत्तरं शतम् ।
पातनं[१] नरके घोरे भुञ्जता कृष्णवासरे ॥

अन्यत्रापि,— नभःकृष्णाष्टमीप्राप्तौ भुञ्जते ये द्विजाधमाः ।
त्रैलोक्यसम्भव पापं भुञ्जन्त्येव न संशयः ॥

इत्यादिषु यः केवलाष्टम्युपवासोऽभिहितः। स जयन्त्युपक्रमोपसंहारमध्यपठितलाङ्गिश्वानरद्वादशकपालान्तर्गताष्टादशकपालादिवद्वयुत्यानुवादेन जयन्तीव्रतप्ररोचनापर एव। तत्र स्पष्टं ब्राह्मे,—

तथा भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतमे जातः कृष्णोऽसौ देवकीसुतः ॥

इत्याद्युक्ता,— अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्वरी ।
मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः ॥
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति ।

इति तदन्त एवोपसंहृतम् । एवमाग्नेयपुराणेऽपि,—
कृष्णपक्षे भाद्रपदे अष्टम्यां रोहिणी शुभे ।
उपोषितोऽर्चयेत् कृष्णं भुक्तिमुक्तिप्रदायकम् ॥

इति जयन्तीमुपक्रम्य,—
जन्माष्टमीव्रतकरः पुत्रवान् विष्णुलोकभाक् ।
वर्षे वर्षे तु यः कुर्यात् पुत्रार्थी वेत्ति नो भयम् ।

इत्युपसंहृतम्। न भयं जानातीत्यर्थः। एवं सत्यपि यस्मिन्नब्दे रोहिणीयोगाभावस्तत्रापि व्रतमाचरणीयमेव। तिथिनक्षत्रयोगस्य

---

(१) पातितं नरके घोरे यो भुङ्क्ते ।

प्राशस्त्यावगमात्तल्लाभेऽष्टमीमात्रमप्रशस्तं न ग्राह्यम् । नक्षत्रयोगाभावे तु प्रतिनिधिवत्तिथिमात्रमाश्रयणीयमेव ।

दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥

इति पुराणोक्तेः समाचाराच्च ।

कृष्णाष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम ।
त्रैलोक्यसम्भवं पापं तेन भुक्तं द्विजोत्तम ॥

इति स्मृत्युक्तेस्तिथिमात्रेऽप्यकरणे प्रत्यवायश्रवणात् प्रतिवर्षविधानाच्च । तथाच, जन्माष्टमीति व्यवहारोऽपि संगच्छते ॥

अथ व्रतस्वरूपं, उपवासजागरणकृष्णपूजाचन्द्रार्घादि । तथाच, तत्प्रकरणे नारदीये,—

उपोष्य जन्मचिह्नानि कुर्याज्जागरणं निशि ।
अर्द्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेत् ॥

भविष्योत्तरे,— तस्मान्मां पूजयेद्भक्त्या शुद्धः सम्यगुपोषितः ।
ब्राह्मणान् भोजयेद्भक्त्या ततो दद्याच्च दक्षिणाम् ॥
हिरण्यं रजतं गावो वासांसि विविधानि च ।
यद्यदिष्टतमं लोके कृष्णो मे प्रीयतामिति ॥

तत्रैव,— चन्द्रोदये शशाङ्काय अर्घं दद्यात् हरिं स्मरन् । इति ।

इदं काम्यले, काम्ये सर्वाङ्गोपसंहारेण फलसिद्धेः । निष्कामस्यापि सामर्थ्ये । असामर्थ्ये तु,—

केवलेनोपवासेन तस्मिन् जन्मदिने मम ।
शतजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥

इत्येव जयन्तीं प्रकृत्य, भविष्ये,—

एकेनैवोपवासेन कृतेन कुरुनन्दन ।

सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥

तत्र कर्मकालः, भविष्ये,—

रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ।

अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत् ॥

महापुण्यतमः कालो जयन्त्याख्यः प्रकीर्त्तितः ।

योगीश्वरः,—अर्द्धरात्रादधश्चोर्द्ध्वमेकार्द्धघटिकान्विता ।

रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिषु ॥ इति ।

एका च अर्द्धघटिका च एकार्द्धघटिके, ताभ्यां अन्वितेत्यर्थः।
एतेन घटिका ग्राह्या, तदसंभवेऽर्द्धघटिकापि ।

ब्राह्मे,— मुहूर्त्तो विजयो नाम यत्र जातो जनार्दनः। इति ।

एवं मुख्यकालस्य त्रैविध्येऽपि घटिकासम्बन्धशीत्यधिकशतत-मभागरूपायाः कलाया अतिसूक्ष्मत्वेन दुर्लक्ष्यत्वान्न व्यवस्थापकत्वम्। नाप्यर्द्धघटिकायाः, तत्रापि सन्देहात्[१] । तथाच पूर्वापरदण्डद्वयो-पेतमर्द्धरात्रमत्र मुख्यः कर्मकालः । विष्णुधर्मोत्तरेऽपि,—

अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा ।

नियतात्मा शुचिः स्नात पूजां तत्र प्रवर्त्तयेत् ॥

अथ ग्राह्यतिथिनिर्णयः ।

तत्रादौ जयन्तीसञ्ज्ञका रोहिणीयुताष्टमी शुद्धा विद्धा शुद्धा-धिका विद्धाधिका चेति चतुर्विधा । तत्र षष्टिदण्डात्मिकायां

(१ सन्देहसत्त्वात् ।

शुद्धायामष्टम्यां सम्पूर्णयोगार्द्धरात्रयोगाहोरात्रान्तर्यत्किञ्चिन्मुहूर्त्त-योगेषु न संदेहः। एवं सप्तमीविद्धायामष्टम्यां संपूर्णरोहिणी-योगार्द्धरात्रतद्योगाहोरात्रान्तर्यत्किञ्चिन्मुहूर्त्ततद्योगेष्वपि पूर्ववन्मतम्। एतेषु षट्सु भेदेषु दिनान्तरे योगाभावात्। किन्तु योगतारतम्यात् प्राशस्त्यतारतम्यम्। यत्किञ्चिन्मुहूर्त्तयोगः प्रशस्तः। अर्द्धरात्रयोगः प्रशस्ततरः। संपूर्णयोगः प्रशस्ततमः।

मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते।
अष्टम्यां रोहिणी ऋक्षं तां पुण्यां समुपावसेत्॥

इति विष्णुरहस्योक्तेः, पूर्वेद्युः सम्पूर्णाष्टमी परेद्युरपि वर्द्धते चेत् शुद्धाधिका भवति। सापि पूर्वेद्युरेव रोहिणीयुता। परेद्युरेव तद्युता। उभयत्र तद्युता चेति। तत्राद्यद्वितीययोर्न सन्देहः। तृतीये पूर्वेद्युरेव, परदिनार्द्धरात्रेऽष्टम्यभावात्। निशीथे तिथिनक्षत्रयोगस्य प्रशस्ततरत्वात्।

ननु,— उदये चाष्टमी किञ्चिन्नवमी सकला यदि।
सा भवेत् बुधसंयुक्ता प्राजापत्यर्क्षसंयुता॥
अपि वर्षशतेनापि लभ्यते वा नवा विभो।

इति स्कान्दोक्त्या परेद्युः किं न स्यादिति चेन्न। तस्याः पूर्वेद्युः नक्षत्रयोगाभावपरत्वेऽप्युपपत्तेः। पूर्वेद्युः निशीथात्प्राक् सप्तम्या युता परेद्युः निशीथोर्द्ध्वं तत्पर्य्यन्तं वा विद्यमाना विद्धाधिका। सापि त्रिविधा। पूर्वेद्युरेव रोहिणीयुता। परेद्युरेव तद्युता। उभयत्र तद्युता चेति। आद्ये पूर्वेद्युरेव,

विना ऋक्षं न कर्त्तव्या नवमीसंयुताष्टमी।

| | | | |
|---|---|---|---|
| Nyayabindutika (Text) | Rs | 0 | 10 |
| Nyaya Kusumanjali Prakarana (Text) Vol I, Fasc 1-6, Vol II, Fasc 1-3 @ /6/ each | | 3 | [illegible] |
| Padumawati Fasc 1-3 @ 2/ | | 6 | 0 |
| Pariçista Parvan (Text) Fasc 1-5 @ /6/ each | | 1 | 14 |
| Prithviraj Rasa (Text) Part II Fasc 1-5 @ /6/ each | | 1 | 14 |
| Ditto (English) Part II Fasc 1 | | 0 | 12 |
| Prakrta Laksanam (Text) Fasc 1 | | 1 | [illegible] |
| Parasara Smrti (Text Vol I Fasc 1-8 Vol II Fasc 1-6 Vol III Fasc 1-5 @ /6/ each | | 7 | 2 |
| Paraçara Institutes of (English) | | 0 | 12 |
| Prabandhacintamani (English) Fasc 1-3 @ /12/ each | | 2 | 4 |
| *Sama Veda Samhita (Text) Vols I, Fasc 5-10; II, 1-6; III, 1-7 IV 1-6 V 1-8 @ /6/ each Fasc | | 12 | 6 |
| Sankhya Sutra Vrtti (Text) Fasc 1-4 @ /6/ each | | 1 | 8 |
| Ditto (English) Fasc 1-3 @ /12/ each | | 2 | 4 |
| Susruta Samhita (Eng Fasc 1 @ /12/ | | 0 | 12 |
| *Taittereya Samhita (Text) Fasc 12-45 @ /6/ each | | 12 | 12 |
| Tandya Brahmana, (Text) Fasc 1-19 @ /6/ each | | [illegible] | 2 |
| Tattva Cintamani, (Text) Vol I, Fasc 1-9 Vol II Fasc 1-10 Vol III Fasc 1-2 Vol IV, Fasc 1, Vol V, Fasc 1-5 Part IV, Vol II Fasc 1-9 @ /6/ each | | 13 | [illegible] |
| Trikanda Mandanam, (Text) Fasc 1 2 @ /6/ | | 0 | 12 |
| Tul'si Sat sai (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| Upamit bhava prapañca katha (Text) Fasc 1 2 @ /6/ each | | 0 | 12 |
| Uvasagadasao (Text and English) Fasc 1-6 @ /12/ | | 4 | [illegible] |
| Varaha Purana, (Text) Fasc 1-14 @ /6/ each | | [illegible] | 4 |
| *Vayu Purana (Text) Vol I, Fasc 2 6 Vol II, Fasc 1-7, @ /6/ each | | 4 | |
| Visnu Smrti (Text) Fasc 1-2 @ /6/ each | | 0 | 12 |
| Vivadaratnakara (Text) Fasc 1-7 @ /6/ each | | 2 | 10 |
| Vrhannaradiya Purana (Text) Fasc 1-6 @ /6/ | | 2 | 4 |
| Vrhat Svayambhu Purana Fasc 1-6 | | 1 | 14 |

*Tibetan Series*

| | | | |
|---|---|---|---|
| Pag Sam Thi Sin Fasc 1-4 @ 1/ each | | 4 | 0 |
| Sher Phyin Vol I, Fasc 1-5, Vol II, Fasc 1-3, Vol III, Fasc 1-5 @ 1/ each | | 13 | 0 |
| Rtogs brjod dpag hkhri Sin (Tib & Sans) Vol I, Fasc 1-5, Vol II Fasc 1-5 @ 1/ each | | 10 | 0 |

*Arabic and Persian Series*

| | | | |
|---|---|---|---|
| Alamgirnamah with Index (Text) Fasc 1-13 @ /6/ each | | 4 | 14 |
| Al Muqaddasi (English) Vol I Fasc 1-2 @ /12/ | | 1 | 8 |
| Ain i Akbari (Text) Fasc 1-22 @ 1/ each | | 22 | 0 |
| Ditto (English) Vol I, Fasc 1-7 Vol II, Fasc 1-5 Vol III, Fasc 1-5, @ 1/12/ each | | 29 | 12 |
| [illegible] | | 37 | 0 |
| [illegible] | | 5 | 0 |
| [illegible] | | 0 | 6 |
| [illegible] | | 7 | 2 |
| [illegible] of the | | 3 | 0 |
| [illegible] 1-21 @ 1/ each | | 21 | 0 |
| Farhang i Rashidi (Text) Fasc 1-14 @ 1/ each | | 14 | 0 |
| Fihrist i Tusi or, Tusy's list of Shy'ah Books (Text) Fasc 1-4 @ /12/ each | | 3 | 0 |
| Futuh ush Sham of Waqidi (Text) Fasc 1-9 @ /6/ each | | 3 | 6 |
| Ditto of Azadi, (Text) Fasc 1 4 @ /6/ each | | 1 | 8 |
| [illegible] (Text) Fasc 1 | | 0 | 12 |
| [illegible] /12/ each | | 4 | 8 |
| [illegible] each | | 1 | 2 |
| [illegible] /12/ each | | 38 | 4 |
| [illegible] Fasc 1-9; Vol III, 1 10, Index to Vol I [illegible] Index to Vol III, Fasc 11 12, Index to Vol II, Fasc 10-12 @ /6/ each | | 12 | 2 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied

| | | |
|---|---|---|
| Maghazi of Waqid (Text) Fasc 1-5 @ /6/ each | Rs 1 | 14 |
| Muntakhabu t Tawarikh (Text) Fasc 1-15 @ /6/ each | 5 | 10 |
| Muntakhabu t Tawarikh (English) Vol I Fasc 1-7, and 2 Indexes Vol II Fasc 1-5 and Index; Vol III, Fasc 1 @ /12 each | 12 | 0 |
| Muntakhabu l Lubab (Text) Fasc 1-19 @ /6/ each | 7 | - |
| Ma as r i Alamgiri (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Nukhbatu l Fikr (Text) Fasc 1 | 0 | 6 |
| Nizami s Khiradnamah i Iskandari (Text) Fasc 1 2 @ /12/ each | 1 | 8 |
| Riyazu s Salatin (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| *Suyuty s Itqan on the Exegetic Sciences of the Koran with Supplement (Text) Fasc 7-10 @ 1/ each | 4 | 0 |
| Tabaqat i Nasiri (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Ditto (English) Fasc 1-14 @ /12/ each | 10 | 8 |
| Ditto Index | 1 | 0 |
| Tarikh i Firuz Shahi of Ziyau d din Barni (Text) Fasc 1-7 @ /6/ each | 2 | 10 |
| Tarikh i Firuzshahi of Shams i Siraj Aif (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Ten Ancient Arabic Poems Fasc 1 2 @ 1/8/ each | 3 | 0 |
| Wis o Ramin (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Zafarnamah Vol I Fasc 1-9 Vol II Fasc 1-8 @ /6/ each | 6 | 6 |
| Tuzuk i Jahangiri (Eng) Fasc 1 | 0 | 12 |

## ASIATIC SOCIETY S PUBLICATIONS

| | | | |
|---|---|---|---|
| 1 | ASIATIC RESEARCHES Vol VII Vols XI and XVII and Vols XIX and XX @ 10/ each | 60 | 0 |
| 2 | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl ) @ /6/ per No and from 1870 to date @ /8/ per No | | |
| 3 | JOURNAL of the Asiatic Society for 1843 (12) 1844 (12) 1845 (12) 1846 (5) 1847 (12) 1848 (12) 1866 (7) 1867 (6) 1868 (6) 1869 (8) 1870 (8) 1871 (7 1872 (8) 1873 (8) 1874 (8) 1875 (7) 1876 (7) 1877 (8) 1878 8) 1879 (7) 1880 (8) 1881 (7) 1882 (6) 1883 (5) 1884 (6) 1885 (6) 1886 (8) 1887 (7) 1888 (7) 1889 (10) 1890 (11) 1891 (7) 1892 (8) 1893 (11) 1894 (8) 1895 (7) 1896 (8) 1897 (8) 1898 (8) @ 1/8 per No to Members and @ 2/ per No to Non Members | | |
| | *N B — The figures enclosed in brackets give the number of Nos in each Volume* | | |
| 4 | Centenary Review of the Researches of the Society from 1784-1883 | 3 | 0 |
| | A sketch of the Turki Language as spoken in Eastern Turkistan by R. B Shaw (Extra No *J A S.B* 1878) | 4 | 0 |
| | Theobald s Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No *J A S.B* 1868) | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah by E Blyth (Extra No *J A S B* 1875) | 4 | 0 |
| | Introduction to the Maithili Language of North Bihar by G A Grierson Part II Chrestomathy and Vocabulary (Extra No *J A S B.*, 1882) | 4 | 0 |
| 5 | Anisu l Musharrahin | 3 | 0 |
| 6 | Catalogue of Fossil Vertebrata | 3 | 0 |
| 7 | Catalogue of the Library of the Asiatic Society Bengal by W A Bion | 3 | 8 |
| 8 | Istilahat us Sufiyah edited by Dr A. Sprenger 8vo | 1 | 0 |
| 9 | Inayah a Commentary on the Hidayah Vols II and IV @ 16/ each | 32 | 0 |
| 10 | Jawamiu l ilm ir riyazi 168 pages with 17 plates 4to Part I | 2 | 6 |
| 11 | Khizanatu l ilm | 4 | 0 |
| 12 | Mahabharata Vols III and IV @ 20/ each | 40 | 0 |
| 13 | Moore and Hewitson s Descriptions of New Indian Lepidoptera Parts I-III with 8 coloured Plates 4to @ 6/ each | 18 | 0 |
| 14 | Sharaya ool Islam | 4 | 0 |
| 15 | Tibetan Dictionary by Csoma de Körös | 10 | 0 |
| 16 | Ditto Grammar | 8 | 0 |
| 17 | Kaçmiraçabdamṛta Parts I & II @ 1/8/ | 3 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts Fasc 1-29 @ 1/ each | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature by Dr R L Mitra | 5 | 0 |

*N B* — All Cheques Money Orders &c must be made payable to the Treasurer, Asiatic Society only

Books are supplied by V-P P. 7-7-1900

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

New Series, No 981.

# GADĀDHARA PADDHATAU KĀLASĀRA

BY

GADADHARA RAJAGURU

EDITED BY

SADAÇIVA MIÇRA

OF PURĪ

VOL. I FASCICULUS II

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET

1901.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS MESSRS LUZAC & CO

46 GREAT RUSSELL STREET LONDON W C AND MR OTTO

HARRASSOWITZ BOOKSELLER LEIPZIG, GERMANY

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fascs being out of stock.*

## BIBLIOTHECA INDICA

### *Sanskrit Series*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi (Text) Fasc 1–4 @ /6/ each .. | Rs | 1 | 8 |
| *Agni Purana (Text) Fasc 4–14 @ /6/ each | | 4 | 2 |
| Aitareya Brahmana, Vol I Fasc 1 5 and Vol II Fasc 1 5 Vol III Fasc 1 5 Vol IV Fasc 1 5 @ /6 | | 7 | 8 |
| Anu Bhasyam (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| Aphorisms of Sandilya (English) Fasc 1 | | 0 | 12 |
| Astasahasrika Prajnaparamita (Text) Fasc 1 6 @ /6/ each | | 2 | 4 |
| Açvavaidyaka (Text Fasc 1 5 @ /6/ each | | 1 | 14 |
| Avadana Kalpalata (Sans and Tibetan) Vol I Fasc 1 5 Vol II Fasc. 1 5 @ 1/ each | | 10 | 0 |
| *Bhamati (Text) Fasc 4–8 @ /6/ each | | 1 | 14 |
| Bhatta Dipika Vol I Fasc 1 2 | | 0 | 12 |
| Bṛhaddevata (Text) Fasc 1 4 @ /6/ each | | 1 | 8 |
| Bṛhaddharma Purana (Text) Fasc 1–6 @ /6/ each | | 2 | 4 |
| Catalogue of Sanskrit Books and MSS Fasc 1 2 @ 2/ each | | 4 | 0 |
| Çatapatha Brahmaṇa Fasc 1 2 | | 0 | 12 |
| *Caturvarga Chintamani (Text) Vols II 1 25 III Part I Fasc 1 18 Part II Fasc 1–10 @ /6/ each | | 19 | 14 |
| Çlokavartika (English) Fasc 1 | | 0 | 1 |
| *Çrauta Sutra of Apastamba (Text) Fasc 4 15 @ /6/ each | | 4 | 8 |
| Ditto Çankhayana (Text) Vol I Fasc 1 7 Vol II Fasc 1 4 Vol *III* Fasc 1–4 @ /6 each | | 5 | 10 |
| Çri Bhashyam (Text) Fasc 1 3 @ /6/ each | | 1 | 2 |
| Gadadhara Paddhati Kalasara Vol I Fasc 1 2 | | 0 | 12 |
| Kala Madhava, (Text) Fasc 1–4 @ /6/ each | | 1 | |
| Kala Viveka Fasc 1–4 | | 1 | 8 |
| Kātantra (Text) Fasc 1–6 @ /12/ each | | 4 | 8 |
| Katha Sarit Sagara (English) Fasc 1–14 @ /12/ each | | 10 | |
| Kurma Puraṇa (Text) Fasc 1 9 @ /6/ each | | 3 | 6 |
| Lalita Vistara (English) Fasc 1–3 @ /12/ each | | 2 | 4 |
| Madana Parijata, (Text) Fasc. 1–11 @ /6/ each | | 4 | |
| Maha bhaṣya prad pōdyōta, (Text) Fasc 1 8 @ /6/ each | | 3 | 0 |
| Manutika Sangraha (Text) Fasc 1 3 @ /6/ each | | 1 | 2 |
| Markandēya Purana (English) Fasc 1 6 @ /12 each | | 4 | 8 |
| *Mimamsa Darçana (Text) Fasc 7 19 @ /6/ each | | 4 | 14 |
| Narada Smṛti (Text Fasc 1 3 @ /6 | | 1 | |
| Nyayavartika, (Text Fasc. 1–4 @ /6 | | 1 | 8 |
| *Nirukta (Text) Vol. III Fasc 1–6 Vol IV Fasc 1 8 @ /6 each | | 5 | 4 |
| Nyayabindutika (Text | | 0 | 10 |
| Nyaya Kusumañjali Prakarana (Text) Vol I Fasc 1–6; Vol II, Fasc 1–3 @ /6 each | | 3 | 6 |
| Padumawati Fasc 1 3 @ 2 | | 6 | 0 |

कार्य्या विद्धापि सप्तम्या रोहिणीसंयुताष्टमी॥ इति आदित्यपुराणोक्तेः,

जयन्ती शिवरात्रिश्च कार्य्ये भद्राजयान्विते।
कृत्वोपवासं तिथ्यन्ते तथा कुर्य्यात्तु पारणम्॥

इति विष्णुधर्मोक्तेश्च। द्वितीये परेद्यु, "मुहूर्त्तमप्यहोरात्र इत्युक्तेः"। उभयत्र रोहिणीयुतायां विद्धाधिकायां चातुर्विध्यम्"। पूर्व्वेद्युरेव निशीथे उभयोर्योगः। परेद्युरेव निशीथे तद्युता। उभयत्रापि निशीथे तद्युता। उभयत्रापि निशीथे योगाभावश्चेति। आद्ये पूर्व्वैव,

कार्य्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी।
तत्रोपवासं कुर्व्वीत तिथिभान्ते च पारणम्॥

इति पाद्मोक्तेः। अन्येषु पक्षेषु परेद्युरेव। तथाच,—पूर्व्वेद्युरेव निशीथे नक्षत्रयोगाभावात्परा। तृतीये पूर्व्वेद्युर्निशीथे रोहिणीयोगेऽपि परेद्यु सङ्कल्पकालावधिसर्व्वकाले तिथिनक्षत्रयोगसत्त्वात्।

सा सर्व्वाऽपि न कर्त्तव्या सप्तमीसंयुताष्टमी।

इति ब्रह्मवैवर्त्तोक्ते'।

चतुर्थपक्षस्तु त्रिविधः। पूर्व्वेद्युर्निशीथादूर्द्ध्वं तिथिनक्षत्रद्वयं प्रवृत्त, परेद्युर्निशीथात् प्राक् समाप्तमित्याद्यः प्रकारः। पूर्व्वेद्युर्नक्षत्रं महत् परेद्युः स्वल्प अष्टमी निशीथादूर्द्ध्वं प्रवृत्तत्वात् पूर्व्वेद्युः स्वल्पा, परेद्युर्महतीति दिनद्वयेऽपि निशीथे योगो नास्तीति द्वितीयः प्रकारः। पूर्व्वेद्युरष्टमी महती, परेद्यु स्वल्पा, रोहिणी तु निशीथादूर्द्ध्वं प्रवृत्तत्वादल्पा परेद्युर्महती इति तृतीयः प्रकारः। तत्राद्ये

परैव निशीथयोगाभावेऽपि मङ्गल्यकालमारभ्य योगस्य सत्त्वात् ।
द्वितीये परैव ।

सप्तमीसहिताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम ।
प्राजापत्ये द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि ॥
तदाष्टयामिकं पुण्यं प्रोक्तं व्यासादिभि: परा ।

इति स्कान्दोक्तेः । तृतीयेऽपि परैव ।

पूर्वविद्धाष्टमी या तु उदये नवमीदिने ।
मुहूर्त्तमपि संयुक्ता संपूर्णा चाष्टमी भवेत् ॥

इति पाद्मोक्तेः । एतेषु जयन्तीभेदेषु यदा कदाचित् बुधवारयोगो यदा सोमवारयोगो भवति, तदा चतुर्थ्यां मङ्गलवारवत्, अमावास्यायां सोमवारवत्, सूर्य्यग्रहणे रविवारवच्च फलाधिक्यम् । तथाच पाद्मे,— प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः ।

यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः ।

विष्णुधर्मोत्तरेऽपि,—

अष्टमी बुधवारेण रोहिणीसहिता यदा ।
भवेत्तु मुनिशार्दूल किं कृतैर्व्रतकोटिभिः ॥

तथाच,— "उदये चाष्टमी किञ्चित्" इति स्कान्दोक्तिरपि एतत्समानार्थैव । तस्मात् वारयोगे फलश्रुतेर्गुणफलबोधकत्वमिति, न वारविशेषानुसारेण व्यवस्थेति, माधवाचार्यतिथितत्त्वकृतप्रभृतयोऽस्मद्देशवद्धनिबन्धकृतश्च ॥

ननु अनयैव रीत्या रोहिणीगुणफलमस्तु इति चेत्, न ।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
मुहूर्त्तमपि लभ्येत सैवोपोष्या महाफला॥ इति स्मृतौ,
वासरे वा निशायां वा यत्र युक्ता तु रोहिणी।
विशेषेण नभोमासि सैवोपोष्या सदा तिथिः॥

इति वशिष्ठोक्तौ च, एवकारश्रुतेः रोहिण्या नियामकत्वेना-भिधानात्।

एकादशीशताद्राजन्नधिकं रोहिणीव्रतम्।

इति श्रवणाच्चेत्यलमतिविस्तरेण॥

अथ रोहिणीरहिताष्टमी विचार्यते, तत्र शुद्धाष्टम्यां न सन्देहः। विद्धा चतुर्विधा। पूर्वेद्युरेव निशीथव्यापिनी। परेद्युरेव निशीथव्यापिनी। दिनद्वयेऽपि निशीथव्यापिनी। दिनद्वयेऽपि निशीथव्याप्तिरहिता चेति। आद्ये पूर्वैवोपोष्या, परेद्युर्निशीथव्याप्तेरभावात्। अन्येषु त्रिषु पक्षेषु परैव, सङ्कल्पकालमारभ्य सर्वकर्म-कालस्याष्टमीयोगात्।

अथ जयन्तीपारणे विशेषः।

तिथिनक्षत्रनियमे तिथिभान्ते च पारणम्।

इति स्कान्दोक्तेरुभयान्ते च पारणं कार्य्यम्॥

नन्वेवं सति यदा दिवा तिथिनक्षत्रयोरुभयोरन्तो न लभ्येत तदा कथमिति चेत्, उच्यते।

तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्।
पारणं न तु कर्त्तव्यं यावन्नैकस्य संक्षयः॥

इति नारदीयोक्त्या एकतरान्तेऽपि पारणम्॥

ननु पारणं दिवा तत्रापि पूर्वाह्ण इति पूर्वमुक्तम्। यदा तु पूर्वेद्युरर्द्धरात्रमारभ्य तिथिनक्षत्रयोः प्रवृत्तिः परदिने रात्रिप्रहर-पर्य्यन्तं व्याप्तिस्तदा कथमिति चेत्, उच्यते। तदा रात्रावपि पारणम्।

तिथ्यृक्षयो र्यदा च्छेदो नक्षत्रान्तस्तथापि वा।
अर्द्धरात्रेऽपि वा कुर्य्यात् पारणं त्वपरेऽहनि॥

इति प्रतिप्रसवस्मृतेः। अपिशब्दाद्दिवापूर्वाह्णयोः कैमुतिक-न्यायेन प्राप्तभाव एव। अत्यन्ताशक्तस्य तु गारुडे।

जयन्त्यां पूर्वविद्धाया मुपवासं समाचरेत्।
तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम्॥ इति।

तथाच परेद्युः प्रातः श्रीकृष्णपूजापूर्वकं व्रतं समाप्य व्रतरूपो-त्सवान्ते पारणम्। एवं तिथ्यृक्षयोरुभयोरन्ते पारणं मुख्यः कल्पः। एकतरान्तोऽनुकल्पः। उत्सवान्ते पारणमप्रशस्तमिति बोध्यम्॥

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः।
ऋक्षान्ते पारणं कुर्य्याद्विना श्रवणरोहिणीम्॥

इति स्मृतेर्नात्र रोहिण्यन्तापेक्षेति चेत्, न।

अष्टम्यामथ रोहिण्यां न कुर्यात् पारणं क्वचित्।
अन्यत् पुराकृतं कर्म उपवासार्जितं फलम्॥
तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम्।
तस्मात् प्रयत्नतः कुर्यात् तिथिभान्ते च पारणम्॥

इति ब्रह्मवैवर्त्तोक्तेः। विना श्रवणरोहिणीमिति तु नक्षत्रोपवास-विषयम्। उपद्रवादिवशात् पारणाया असम्भवे जलपारणं कार्यम्।

सन्ध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः ।
अन्भिस्तु पारयित्वाथ नैत्यकान्ते भुजिर्भवेत् ॥

इति कात्यायनोक्तेः ।

जयन्तीपूजाविधिस्तु, अस्मत्कृते व्रतपारे द्रष्टव्यः । जयन्त्यष्टम्याः प्रातः श्रीदुर्गादेव्या जन्मोत्सवं कुर्यात् ।

तथा च भविष्योत्तरे, श्रीकृष्णवाक्यम् ।

कर्त्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने ।
यथा मम तथा कार्य्यो भगवत्या महोत्सवः ॥ इति ।

अत्र नवमीति यदुक्तं तदष्टमीसमाप्त्यनन्तरं नवमीप्रवृत्त्यभिप्रायं, न तु नवमीनियमपरम् । अन्यथा, तत्क्षणाद्रात्रौ प्रभाते इत्याद्यसङ्गतं स्यात् । अष्टमीप्रकरणे पारणविषये, ब्राह्मे,—

अरुणोदयवेलायां नवम्यां च तथा स्त्रियः ।

इत्यादौ यदुक्तं नवमीपदं, अष्टम्यनन्तरभावित्वादेवोक्तम् । तथाच, अष्टम्याः प्रभाते सर्व्वेऽपि दुर्गाजन्मोत्सवं निःसन्दिग्धमेव समाचरन्ति । अतएव नीतिरत्नाकरेऽस्मत्पितामहकृष्ण वृहत्पण्डितमहापात्रैः जन्माष्टम्युत्तरदिनार्द्धरात्रे राजगृहे दुर्गाजन्मोत्सवो यत् क्रियते तद्भ्रान्तिमूलमिति लिखितम् ॥ इति श्रीकृष्णजयन्त्यष्टमीव्रतम् ॥

---

अथ दूर्वाष्टमी ।

एतद्व्रतं नित्यं काम्यञ्च ।

प्राप्ते भाद्रपदे मासि शुक्लाष्टम्यां च भारत ।
या न पूजयते दूर्वां मोहादिह यथाविधि ॥



त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः ।
तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैः ॥
सुखसन्तानजननी भाग्यसौख्यप्रदा सदा ।

इत्यादि वचनात् । अत्र मतसामान्यव्यवस्थया सोदयत्रिमुहूर्त्त-वेधो गृह्यते । तत्र तिथिद्वैधे अस्याः शुक्लपक्षवर्त्तित्वेऽपि पूर्वविद्धैव ग्राह्या ।

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति

नारदोक्तेः । मासि भाद्रपदे शुक्ला या भवेदष्टमी नृप ।
दूर्वाष्टमीति विज्ञेया पूर्वविद्धा प्रशस्यते ॥

तथा,— दूर्वाख्या साष्टमी ज्ञेया नोत्तरा सा विधीयते ।

इत्याद्युक्तेश्च । अत्र "काण्डात् काण्डात्" इति मन्त्रेण भविष्य-वाक्यात् केवलदुर्गापूजां कुर्वन्ति । तस्मिन्नेव भविष्यपुराणे स्त्री-पुरुषसाधारण्येन नानाकामार्थसिद्धये, दुर्गासहितमहेशपूजनं यत् लिखितं तत् काम्यम् । एकवर्षसमाप्यं व्रतान्तरं विध्यन्तरेण कार्यम् । स विधिस्तत्रैवानुसन्धेयः ॥

भाद्रशुक्लाष्टम्यां दुर्गाशयनम् । तत्र देवानां सामान्येन शयन-पक्षो राजमार्त्तण्डे,—

वह्निः स्कन्दपुरन्दरौ गणपतिः श्रीर्द्धर्मराड् भास्करो
देवः पर्वतपुत्रिका वसुमती तोयाधिपः केशवः ।
ब्रह्मा वायुशिवादयः प्रतिपदारम्भे तिथौ शेरते
चोत्तिष्ठन्त्यसुभा क्रमेण वरदाः स्वे स्वे तिथौ पूजिताः ॥

विशेषस्तु तत्र भगवतीपुराणे,—

सर्वदेवोत्थिता तिष्ठेत् दुर्गा लोकहिताय वै।
स्वपेद्भाद्रसिताष्टम्यां त्रिपक्षदिवसात् परम्॥
उत्तिष्ठत्यर्चिता देवी षोडशेऽह्नि न रात्रितः।
दिवा स्वापे भवेद्रोगो निशुत्थाने जनक्षयः॥
दिनक्षयो यदि भवेत् स्वपेद् पक्षांश्चतुर्दश।
न वर्द्धयेत् स्वापदिनं तिथिवृद्धौ कदाचन॥

इति तिथिवृद्धौ षोडशदिने स्वापननिषेधात्, पञ्चदशदिन-पर्यन्तं स्वापदिनम्। तथाच, भाद्रशुक्लाष्टमीरात्रिमारभ्य षोडश-दिवसे बोधनोक्तेः उत्थाने नैवाष्टमीनियमः। एवं सति तिथिवृद्धौ सप्तमीदिने देवीमुत्थाप्य परदिने दुर्गोत्सवारम्भः कार्यः॥ इति दुर्गाशयनम्।

---

अथ शरत्कालीनदुर्गोत्सवारम्भः।

स च आश्विनकृष्णाष्टमीमारभ्य तच्छुक्लाष्टमीपर्यन्तः। स च संयोगपृथक्त्वन्यायेन नित्यः काम्यश्च। तथाच देवीपुराणे,—

एवं च यजनं कुर्यात् वर्षे वर्षे युधिष्ठिर।
यो न पूजयते सम्यक् चण्डिकां भक्तवत्सलाम्॥
भस्मीकृत्यास्य पुण्यानि निर्दहत्यवमानिता।

एवं वीप्साश्रवणात् अकरणे प्रत्यवायश्रवणाच्च वक्ष्यमाणानुकल्प-विधानात् नित्यः। तथाच दुर्गाकल्पे,—

यदा दैववशादस्मिन् मासे पूजा न जायते।

तदा तु कार्त्तिकाष्टम्यां कर्म चैतत् प्रकीर्त्तितम् ॥
कृष्णाष्टमीं समारभ्य यावत् शुक्राष्टमी भवेत् ।
दिवसे दिवसे पूर्वप्रोक्तं कर्म प्रशस्यते ॥
आश्विने कार्त्तिके वापि कृष्णाष्टम्यां समारभेत् ।
सर्वकामार्थसिद्ध्यर्थं कर्मेदं दुर्लभं स्मृतम् ॥
कर्मेदं कुरुते यस्तु सम्यङ्सिद्धिस्तस्य जायते ।
वेदविच्च भवेत् वर्णी त्रिवर्गं साधयेत् क्रमात् ॥
कन्याप्नोति यशोराज्यपुत्रायुर्द्धनसम्पदः । इति ॥

अनुकल्पविधानं फलश्रवणं च, भविष्योत्तरे,—

पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।
गृहे गृहे शक्तिपरैः ग्रामे ग्रामे वने वने ॥
स्नातैः प्रमुदितैर्हृष्टै ब्राह्मणैः क्षत्रियैर्विशैः ।
शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च भुवि मानवैः ॥
स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु ।

शक्तिपरैर्देवीपरायणैः । म्लेच्छैः किरातादिभिः । अन्यैरनुलोमजातिभिः । देवीपुराणे ब्रह्मवाक्यम्,—

महासिद्धिप्रदं धन्यं सर्वशत्रुनिवर्हणम् ।
सर्वलोकोपकारार्थं विशेषाद्‌सिद्धिवृत्तिभिः ॥
कर्त्तव्यं ब्राह्मणाद्यैस्तु क्षत्रियैर्लोकपालकैः ।
गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ॥
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः ।
महाव्रतं महापुण्यं शङ्करायैरनुष्ठितम् ॥

एतेनास्य व्रतत्वमपि स्पष्टं। अत्र तत्तिथितत्त्वकारैः।

"चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम्"।

इति श्रीभागवतवाक्यमस्य व्रतत्वप्रतिपादनाय उदाहृतं तन्न-माद्रृतम्।

हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः।

इति तत्पूर्वार्द्धोक्तेस्तस्य व्रतान्तरत्वात्। तथा, कृष्णाष्टमीमित्यादिवाक्यादस्य षोड़शदिनात्मकत्वम्। यत्तु देवीपुराणे,—

पञ्चमेकं तु ये भूपाः पूजयिष्यन्ति चण्डिकाम्।

न तेषां विप्र राष्ट्रेषु भयं किञ्चिद्भविष्यति॥

इत्यादि बहूनि फलान्युक्त्वा,—

चण्डिकापूजनाद् वीर पूजिताः सर्वदेवताः।

इत्युक्तं पञ्चदशदिनात्मकत्वम्, तत्तिथिचयाधीनम्।

तत्र मूलाष्टमीविषये, आदित्यपुराणे,—

प्रौष्ठपद्यामतीतायां या सा कृष्णाष्टमी भवेत्।

तस्यामवश्यं कर्त्तव्या दुर्गापूजा यथाविधि॥

विश्वरूपनिबन्धे,—

यदाष्टमीं तु सम्प्राप्य अस्तं याति दिवाकरः।

तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि॥

कुलं पुत्रं धनं राज्यं दीर्घञ्चायुस्तथैव च।

प्रथमा चाष्टमी पूज्या ये काङ्क्षन्ति सदा शुभम्॥

आश्वयुज्याष्टमी यत्र पूज्यते नवमीश्रिता।

दुर्भिक्षं तत्र जानीयाद्दशवर्षाणि पञ्च च॥

तथा,— सप्तम्यामुदिते सूर्य्ये परतश्चाष्टमी यदि।
तत्र दुर्गोत्सवं कुर्य्यान्न कुर्य्यादपरेऽहनि॥

प्रथमाष्टमी, मूलाष्टमी। तथाचात्र असमयवेधस्य प्रातिस्विकत्वात् तिथितत्त्वकारलिखितस्तिथिसामान्यप्रवृत्तसोदयत्रिमुहूर्त्तवेधो न ग्राह्यः। एवं सति, "प्रातरावाहयेत् देवीं प्रातरेव विसर्जयेत्" इत्यादिवाक्यं असमयवेधस्य साकल्यापवादकत्वेन प्रातरारभ्य पूजाकर्मारम्भणीयं, न तु अष्टमी अपेक्षणीयेत्येवं परं बोध्यम्।

षोड़शदिनासामर्थ्ये स्कान्दे, काशीखण्डे,—
नवरात्रं प्रयत्नेन प्रत्यहं सा समर्च्चिता।
नाशयत्येव विघ्नौघान् सुगतिञ्चैव दास्यति॥

भविष्योत्तरे,— आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम्।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्॥

शुक्ले, शुक्लपक्षे। नवरात्रकम्, नवरात्रसम्बन्धिपूजादिकं कर्म। तत्र विद्धायां प्रतिपदि सायाह्नवेधं गृहीत्वा पूर्वविद्धैव ग्राह्या। सम्मुखीतिथिषु सायाह्नवेधस्योक्तत्वात्। माधवाचार्य्यास्तु, "आश्वयुजे मासि योऽयं नवरात्रोत्सवः क्रियते तस्य नक्तव्रतत्वान्नक्तकालेन व्यवस्था" इति पञ्चम्यादिनवम्यन्तपञ्चदिनपक्षेऽपि सायाह्नवेध एव, पञ्चम्याः सम्मुखीतिथित्वात्। एतत्पक्षे प्रमाणमग्रैव लेख्यम्॥

त्रिदिनपक्षे रुद्रयामलभविष्ययोः,—
त्रिदिनं वापि कर्त्तव्यं सप्तम्यादिदिनत्रये।
तत्रापि सप्तम्याः सम्मुखीतिथित्वात् सायाह्नवेध एव॥

यत्तु,— व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये।

द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः ॥

इति तिथितत्त्वकारैर्भविष्यवाक्यमुदाहृतम्, तत् गौड़देशे आद्रियते। तत्र सोदयत्रिमुहूर्त्तवेधस्यैव पूजायामुपवासे च आदृतत्वात्, बलिदानस्य दिवानुष्ठानाच्च।

अस्मद्देशे तु तिथिवृद्धावपि महाष्टमीपरदिन एव महानवम्या नियतत्वात्, परदिने च पूर्वापरदण्डद्वयोपेतनिशीथे नवम्या असम्भवाच्च पूर्वदिने महानवमीसमाप्तौ तत्परदिने पूजायाः कुतः प्राप्तिरिति नाद्रियत एव। अतएव महाष्टमीपद्धतिकारादिभिः प्राचीनैरपि तद्वाक्यमनादृतमेव। तस्मात् न चतुरहः पक्षः सम्भवति। "ऋक्षत्रयेऽपि मूलादौ" इति रुद्रयामलभविष्ययोर्नक्षत्रोपजीवनेन यत् त्रिदिनपूजनमुक्तं तदपि अस्मद्देशे नाद्रियते। नक्षत्रस्य न व्यवस्थापकत्वमित्यप्युच्यते। द्विदिनपक्षे यथाप्राप्तमहाष्टमीमहानवम्योः। तथाच भविष्यस्कान्दयोः,—

अष्टम्याञ्च नवम्याञ्च जगन्मातरमम्बिकाम्।
पूजयित्वाश्विने मासि विशोको जायते नरः॥

एकदिनपक्षे तु, यथाप्राप्तमहानवम्यां। तथाच भविष्योत्तरे,—

नवम्यां पूजिता देवी ददात्यनवमं फलम्।

इत्यादि महानवमीप्रकरणे लेख्यम् ॥

नवरात्रादिपक्षपक्षेषु, भविष्ये,—

शुक्ले चाश्वयुजे राजन् सोपवासो भवेन्नरः।
नीरुजो निष्प्रतिद्वन्द्वो निर्दुःखः स भवेत् सदा॥
यः करोत्युपवासन्तु नवम्यां विधिवन्नृप।

एतांस्तु एकभक्तेन प्रवदन्ति मनीषिणः ॥
पञ्चमी च तथा षष्ठी सप्तमी चाष्टमी नृप ।
उपवासपरो भूत्वा पूजयेच्चण्डिकां बुधः ॥
नवरात्रोपवासेन यथाशक्त्या तथा नृप ।
त्रिरात्रेण द्विरात्रेण एकरात्रेण वा पुनः ॥
एकभक्तस्तु पञ्चम्यां षष्ठ्यां नक्तं प्रवर्त्तयेत् ।
अयाचितन्तु सप्तम्यामष्टम्यां च उपोषितः ॥

एतच्च तथा योग्याधिकारिविषयम् । तथास्मिन् व्रते षट् पक्षाः, तथाचागमे संग्रहः ।

तत्र दिनैः षोड़शभिर्नवभिरथो पञ्चभिर्द्वाभ्याम् ।
एकेन च यदिहितं क्रमशः प्रस्तौमि तद्विधानमहम् ॥

अत्र परे न्यूनाः । भानुदये केवलाष्टम्यामपि पूजा ।

यस्त्वेकस्यामथाष्टम्यां नवम्यां वाथ साधकः ।
पूजयेद्वरदां देवीं + + + + ॥

इति कालिकापुराणोक्तेः । एतत् सर्वाधिकारिकं व्रतमिति वाक्येषु स्फुटमेव तथा समाचारोऽपि । "शरत्काले महापूजा" इत्यादिमार्कण्डेयपुराणोक्तेश्च चण्डीपाठनियमः ।

## अथ महाष्टमी ॥

तत्र व्रतोत्पत्तिः कालिकापुराणब्राह्मयोः,—

अत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ।
ततोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः ।

तथा ब्राह्मे तदनन्तरम्,—

उपोषितैर्वस्त्रधूपमाल्यैः स्नानानुलेपनैः।
दीपे रत्नैस्तथा भक्ष्यैः फलपुष्पैश्च धान्यकैः॥
आमिषैर्विविधैः क्वापि होमे ब्राह्मणतर्पणैः।
विल्वपत्रैः श्रीफलैश्च चन्दनेन घृतेन च॥
पशुभिः पालकैर्दद्यैः रात्रिजागरणेन च।
दुर्गागृहे तु शास्त्राणि[१] पूजितव्यानि पण्डितैः॥
मद्यभाण्डानि चिह्नानि कवचान्यायुधानि च।
रात्रौ च शिल्पिभिस्तानि तानि पूज्यानि सर्व्वदा॥

भगवतीपुराणे पूर्वोदाहृतोक्तिभिः स्नापविधिमुक्ता,—

मूलेन प्रतिबोधयेद्भगवतीं चण्डीं प्रचण्डाकृतिम्।
अष्टम्यामुपवाससंयतधिया कृत्वा नवम्यां वलिम्॥
नानापायसमांसमज्जरुधिरै र्भक्त्या समाराधयेत्।
नक्षत्रे श्रवणे तिथिश्च दशमीं सम्प्राप्य सम्प्रेषयेत्॥
निशायामष्टमीप्रोक्तं दुर्गोत्सवं तु कारयेत्।
अन्यत्र चोपवासादौ नवविद्धाष्टमी भवेत्॥

उत्सवपदेन पूजोपवासयोः सङ्ग्रहः। अन्यत्र दुर्गोत्सवव्यतिरिक्ते उपवासादौ। अन्योपवासव्रतेषु युग्मवाक्यस्यैव सोदयत्रिमुहूर्त्तमाद्यथैव प्रसरो न महाष्टम्युपवासे इत्यर्थः।

अष्टम्यां यत्र नवमी तत्र पूजां विवर्जयेत्।

(१) शस्त्राणि पाठान्तरम्।

अष्टमीञ्चेदनुप्राप्य अस्तं याति दिवाकरः ॥
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ।
वृथा पशुघ्नतां याति नवमीवासरार्च्चिते ॥
अष्टमीनिशि सन्तुष्टा पूजां गृह्णाति पार्वती ।

तथा,— अष्टमी नवमीविद्धा तत्र दुर्गां न पूजयेत् ।
पूजयेत् क्लेशभागी स्यात् यथा वज्रहतो गिरिः ॥
अष्टमी नवमीयुक्ता शान्तिं कुर्यात् द्विजो यदा ।
म्रियते क्रियमाणे तु तत्र राजा विनश्यति ॥

गरुड़पुराणे,— पूजनीया शिवा सर्वैरेकधाऽभिन्नपर्व्वणि ।
भिन्ने भूपादिभिः पूर्वं परं यात्र्यं द्विजातिभिः ॥
पूर्वपर्वणि भुक्त्यर्थं मुक्त्यर्थञ्च परेऽहनि ।
पशुमांसैर्बलिं कुर्यात् निशि चेन्नृपतेरतः ॥
पूर्वपर्व द्विजातीनां परं व्रतवतां सदा ।
यस्मिन्नहनि यत् कार्य्यं तस्मिन् तत्करणात् परम् ॥
फलं स्यात् पितृदेवानामतः कालं न लङ्घयेत् ।
सा विद्या साध्यविद्या चेत् सा भौमा सा शिवा ततः ॥
अतस्तस्या द्विधा पूजा द्विधा कर्म च धर्मतः ।
या पूर्वतिथिसंयुक्ता सा तिथिर्व्रतकर्मसु ॥
नेष्टा चेद्दैवकार्याणि कुतस्तस्यां द्विजन्मनाम् ।
तिथी पूर्वापरौ शेते दैवकार्येषु चेत् क्रमात् ॥
नातो देवी द्विजैः पूज्या विधिज्ञैः पूर्वपर्वणि ।
द्विजानामुपवासादि राजन्यस्यार्च्चनं परम् ॥

देवी द्विजातिभिर्नाच कार्यं प्रेतगतेऽहनि।

पशुमांसवलिदानं यदुक्तं तद्राजन्यानां नियतं ब्राह्मणाना-मनियतम्, सात्त्विक्यादिपूजया चारितार्थ्यात्।

तथाच स्कान्द-भविष्ययोः,—

पूजा तु त्रिविधा प्रोक्ता सात्त्विक्यादिप्रभेदतः।
सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः॥
राजसी वलिदानेन नैवेद्यैः सामिषैस्तथा।
सुरामांसोपहारैश्च जपयज्ञैर्विना तु या॥
विना मन्त्रैस्तामसी स्यात् किरातजनसेविता। इति।

देवीपुराणे,—प्रावृट्काले विशेषेण आश्विनेयाष्टमीषु च।
महाशब्दो नवम्याञ्च लोके ख्यातिं गमिष्यति॥

अतएव महाष्टमी महानवमीति ख्यातिः।

ननु महाष्टम्यां किं सोदयत्रिमुहूर्त्तवेधो ग्राह्य उत प्रातिस्विकः कालोऽस्ति इति चेत्, उच्यते। पूर्वापरदण्डद्वयोपेतमर्द्धरात्रमत्र कर्मकालः, तत्र देव्युत्पत्तेः। कृष्णजन्माष्टम्यादौ सर्वत्र जन्मकाले पूजाविधानवदत्रापि वलिदानान्तायाः पूजायाः अर्द्धरात्रे विहितत्वेन तज्जन्मकालनिर्णयात्।

वलिदानं ततो विद्यादर्द्धरात्रे न संशयः।

इति वायुप्रोक्तौ अर्द्धरात्रे वलिदानमुक्तमेव। कृष्णजन्मदिने अर्द्धरात्रे देव्युत्पत्तिः सिद्धैव। एवञ्च अर्द्धरात्रे दिनद्वयेऽष्टमीसम्बन्धे पूर्वेद्युः पूजादिकं परेद्युरुपवास इति सिद्धम्। एवमष्टाहात्मक-दुर्गाव्रतेऽपि अर्द्धरात्रे दिनद्वये अष्टमीयोगे परत्र व्रतम्।

आश्विनस्याष्टमी शुक्ला पूर्वविद्धार्चने स्मृता ।
व्रतोपवासादौ शिष्टैः परविद्धा प्रशस्यते ॥

इति मङ्गलोक्तेः ॥ यत्तु कैश्चिल्लिखितम्,—

नक्तकाले तु सम्प्राप्ते मण्डलं कारयेद्व्रती ।

इति देवीपुराणोक्तेः प्रदोषः कर्मकाल इति तदतीवायुक्तम् । मण्डलकरणादिसम्भारकालो यदि कर्मकालत्वेनाच ग्राह्यः, तर्हि कृष्णजन्माष्टम्याम्,—

तत्र स्नात्वा तु पूर्वाह्णे नद्यादौ विमले जले ।
देव्याः सुशोभनं कुर्यात् देवक्याः सूतिकागृहम् ॥

इति भविष्योत्तरोक्तसूतिकागृहमण्डनादिकालः पूर्वाह्णः कर्मकालः किं न स्यात् ।

ननु दिनद्वयेऽप्यर्द्धरात्रेऽष्टम्यभावे कथमिति चेत्, परेद्युरिति ब्रूमः मुख्यकाल अष्टम्यभावेऽपि मङ्गल्यमारभ्य तिथेः प्रवृत्तत्वात् ।

ननु,—उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् ।
यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत् ॥

इति महाष्टम्यामुपवासनिषेधः श्रूयते इति चेत् न । एतद्वाक्यस्य पूजाङ्गमहाष्टमीनिमित्तकोपवासविषयत्वात् । तथाच,—

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गस्ततो ग्राह्यो यतो नित्यमुपोषणम् ॥

इति जैमिनिः ।

देवीपुराणे,— अष्टमीं समुपोष्यैव नवम्यामपरेऽहनि ।
मत्स्यमांसोपहारेण दद्यान्नैवेद्यमुत्तमम् ॥

तेनैव विधिनान्नन्तु स्वयं भुञ्जीत नान्यथा।

इति यत् मांसपारणमुक्तं तन्मांसमत्स्याशिनां काम्यव्रतपरं। अन्यथा यतिब्रह्मचारिविधवानामपि तत् प्रसज्येत। तस्मात् कृतमत्स्यवर्जनसङ्कल्पानामपि न मांसमत्स्यपारणम्। अर्थकर्मणो-मांसादिवर्जनान्मांसादिपारणस्य प्रतिपत्तिकर्मत्वेन दुर्बलत्वाच्च। सधवस्त्रीणां तु मांसभक्षणनिन्दोपलम्भेः सर्वदा मांसभक्षणाभाव-समाचारात् मत्स्यपारणमेव, नैव मांसपारणम्॥

अथ महानवमीविचारः।

अथाष्टमीप्रकरणमध्ये सौकर्याय महानवमी विचार्यते। भविष्योत्तरे,—

अष्टम्यां तु नवम्यां तु देवदानवराक्षसैः।
गन्धर्वैं रुरगैर्यक्षैः पूज्यते किन्नरैर्नरैः॥
अन्यैरपि युगादौ तु सृष्टैः पूर्वं प्रपूजिता।
पूजितेयं पुरा देवैस्तेभ्यः पूर्वतरैरपि॥
तस्मादियं महापुण्या नवमी पापनाशिनी।
उपोष्य सप्रयत्नेन सततं सर्वपार्थिवैः॥

तथा,— कन्यां गते सवितरि शुक्लपक्षेऽष्टमी च या।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता॥

तथा,— पुण्या महानवम्यस्ति तिथीनामुत्तमा तिथिः।
अनुष्ठेया नरैः सर्वैः प्रजापालैर्विशेषतः॥
भवानीतुष्टये पार्थ संवत्सरसुखाय वै।
भूतप्रेतपिशाचानां प्रीत्यर्थं चोत्सवाय च॥

तथा,— संतर्जयन्ती हुङ्कारैर्विघ्नौघान् पातकान् वराम् ।
नवम्यां पूजिता देवी ददात्यनवमं फलम् ॥
सा पुण्या सा पवित्रा च सा सर्वसुखदायिनी ।
तदा तस्यां पूजनीया चामुण्डा मुण्डमालिनी ॥

तथा,— मन्वन्तरेषु सर्वेषु कल्पेषु कुरुनन्दन ।
तेषु सर्वेषु चैवासीन्नवमीयं सुरार्चिता ॥
प्रसिद्धा नवमी धन्या वर्षे वर्षे युधिष्ठिर ।
भूयो भूयोऽवतारैश्च भवानी पूज्यते सुरैः ॥
अवतीर्णा च सा देवी भुवि दैत्यनिवर्हणी ।
स्वर्गपातालमर्त्येषु करोति स्थितिपालनम् ॥
अग्निहोत्रपरे विप्रे वेदवेदान्तपारगे ।
सुवर्णस्य शते दत्ते कुरुक्षेत्रे च यत् फलम् ॥
तत् फलं लभते राजन् पूजयित्वा तु चण्डिकाम् ।
न तद्देशे च दुर्भिक्षं न च दुःखं प्रवर्त्तते ॥
न कश्चिन् म्रियते राजा पूज्यते यत्र चण्डिका ।
ये दुर्गां पूजयन्तीह पूजितं तैर्जगत्त्रयम् ॥
तस्माद्दुर्गार्चनं श्रेष्ठमृषिभिर्गीयते कलौ ।

देवीपुराणे,— मासि चाश्वयुजे वीर शुक्लपक्षे त्रिशूलिनीम् ।
नवम्यां पूजयेद्यस्तु तस्य पुण्यफलं शृणु ॥
अश्वमेधसहस्रस्य राजसूयशतस्य वै ।
तत् फलं लभते वीर देवीदेवगणैर्वृतः ॥

तथा,— महानवम्यां पूजेयं सर्वसिद्धिप्रदायिका ।

सर्वेषु व्रतम् वर्णेषु तद्भक्त्या परिकीर्त्तिता ॥
कृत्वाप्नोति यशोराज्यपुत्रायुर्धनसम्पदः।

स्कान्दे,— अश्वयुक्शुक्लपक्षस्य नवम्यां वै वरानने।
उपवासपरो भूत्वा यस्तां पश्यति भक्तितः ॥
तस्य पापं क्षयं याति तमः सूर्योदये यथा।

तथा, तत्प्रकरणे, दुर्गां सुदुर्गगहनान्नितरन्ति मर्त्याः ॥

भविष्ये,—नक्ताश्चाश्वयुजे राजा अष्टम्यां शुक्लपक्षके।
आश्विने मासि शुक्लायां नवम्यां निशि चण्डिकाम् ॥
पूजनात् शत्रुनाशः स्यात् राष्ट्रं जयति लीलया।

तथा,— वर्षपद्मसहस्रेषु यत् फलं समुपार्जितम्।
तस्यां दानं जपो होमः स्नानं चाक्षयमुच्यते ॥

अत्रापि, "नवम्यां विधिवत् बलिः" इति वाक्यात् निशीथः कर्मकालः। तत्र तिथिद्वैधे, "श्रावणीदुर्गनवमी" इति वाक्यात् पूर्वविद्धा ग्राह्या ॥

अथ गोष्ठाष्टमी।

पाद्मे,— शुक्लाष्टमी कार्त्तिके तु स्मृता गोष्ठाष्टमी बुधैः।
तद्दिने वासुदेवोऽभूद्गोपः सर्वर्त्तुवत्सपः ॥
तत्र कुर्यात् गवां पूजां गोग्रासं गोप्रदक्षिणम्।
गवानुगमनं कार्यं सर्वकामानभीप्सता ॥

कौर्मे तु, सर्वपापविशुद्धये इति पाठः ॥

मार्गशीर्षकृष्णपक्षे प्रथमाष्टमी।

तत्रास्मद्देशे प्रथमगर्भोत्पन्नस्यायुर्विवृद्ध्यर्थं गणपत्यादिवरुणपूजा-

पूर्विकां वन्दापनां कुर्वन्ति। समाचार एवाच प्रमाणम्। श्रीभुवनेश्वरक्षेत्रे चतुर्दशयात्रामध्ये एकाम्रपुराणे प्रथमाष्टमीयात्राया लिखितत्वात् प्रमाणमप्यस्तीति वदन्ति। तत्र सोदयत्रिमुहूर्त्त-व्याप्त्या व्यवस्था। तिथिद्वैधे पूर्वेद्युर्वन्दापना कृष्णाष्टमीत्वात्।

यत्तु,— मध्याह्नादधिकं किञ्चित् परत्र प्रथमाष्टमी।
तत्र पूजादिकं कार्यं न्यूना चेत् पूर्ववासरे॥ इति।

तदमन्मूलमिति निबन्धकृतः। भद्राष्टमी, अलभ्ययोगे लेख्या। भीष्माष्टमी श्राद्धप्रकरणे लेख्या॥

अथ नवमी।

सा चोपवासे पूर्वविद्धा ग्राह्या, युग्मोक्तेः। व्रतेऽपि तथा।

अष्टम्या नवमी विद्धा कर्त्तव्या फलकाङ्क्षिभिः।
न कुर्यान्नवमीं तात दशम्या न कदाचन॥

इति ब्रह्मवैवर्त्तोक्तेः, तथा ब्रह्मोक्तेश्च। अत एव माधवीये,—

नवमी पूर्वविद्धैव पक्षयो रुभयोरपि।

इति नवम्याः साधारणनियमाः॥

अथ रामनवमी।

तद्व्रत नित्यं काम्यं च नरमात्राधिकारिकम्। तथाचागस्त्य-संहितायाम्,—

प्राप्ते श्रीरामनवमीदिने मर्त्त्यो विमूढधीः।
उपोषणं न कुरुते कुम्भीपाकेषु पच्यते॥
अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमम्।
व्रतान्यन्यानि कुरुते न तेषां फलभाग् भवेत्॥

तथा,— तस्मिन् दिने तु कर्त्तव्यमुपवासव्रतं सदा।

तथा,— कुर्य्याद्रामनवम्यां तु उपोषणमतन्द्रितः।
मातुर्गर्भमवाप्नोति नैव रामो भवेत् स्वयम्॥
तस्मात् सर्वात्मना सर्वै कृत्वैव नवमीव्रतम्।
मुच्यन्ते पातकैः सर्वै र्यान्ति ब्रह्म सनातनम्॥

इति केवलोपवासेनापि नित्यसिद्धिः। काम्यत्वे तु,
श्रीरामनवमी प्रोक्ता कोटिसूर्य्यग्रहोपमा।
तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः॥
यत्किञ्चित् कुरुते कर्म तद्भवक्षयकारकम्।
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम्॥
तस्मिन् दिने तु कर्त्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः।

इत्यगस्त्यसंहितोक्तैः सर्वाङ्गोपसंहारः कार्य्यः।

तथा,— सूर्य्यग्रहे कुरुक्षेत्रे महादानैः कृतैर्मुहुः।
यत् फलं तदवाप्नोति श्रीरामनवमीव्रतात्॥

अत्र मध्याह्नः कर्मकालः। तथाचागस्त्यसंहितायाम्,—
मेषं पूषणि संप्राप्ते लग्ने कर्कटकाह्वये।
आविरासीत् स कलया कौशल्यायां परः पुमान्॥

तथा,— चैत्रशुक्लनवम्यां तु रामस्य पूजनं भवेत्।
ततो मध्याह्नवेलायां सञ्जातो हि जगत्पतिः॥
चैत्रे शुद्धा तु नवमी पुनर्वसुयुता यदि।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत्॥
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः।

उपोषणं नवम्यां वै दशम्यामेव पारणम् ॥

शुद्धा, शुक्ला । चैत्रशुक्लनवम्यां तु इति वाक्यान्तरात् । एतेनात्र तिथितत्त्वकारैः शुद्धायां स्वचादरो न विद्धायामिति यत् व्याख्यातं तन्निरस्तमेव । वस्तुतस्तु नचत्रयोगस्य फलाधिक्यापादकत्वं न व्यवस्थापकत्वं । तथा च तत्रैव फलमुक्तम् ।

पुनर्वस्वृर्चसंयोगः स्वल्पोऽपि यदि लभ्यते ।
चैत्रशुक्लनवम्यां तु सा तिथिः सर्वकामदा ॥

मध्याह्ने दिनद्वये नवमीयोगे परविद्धैव ग्राह्या ।

श्रीरामजन्मनवमी संपूर्णा फलदा सदा ।
विद्धा चेत् परविद्धैव कर्त्तव्या तु विशेषतः ॥
द्वयोर्मध्याह्नयुक्ता चेन्नोपोष्या पूर्वसंयुता ।
परविद्धैव कर्त्तव्या मध्याह्नव्यापिनी यदा ॥

इत्यगस्त्यसंहितोक्तेः, दिनद्वये मध्याह्ने नवमीयोगेऽपि परविद्धैव। सङ्कल्पकालमारभ्य नवमीसत्त्वात्, "नवमी चाष्टमी विद्धा त्याज्या" इत्युक्तेश्च । "विद्धा चेत् परविद्धैव" इत्यनेन पूर्वद्युर्मध्याह्ने योगाभावे परविद्धाया एव प्राप्तेः । तिथितत्त्वकारैस्तु दशमीपारणासत्त्वे सर्वैरेवाष्टमीविद्धा नोपोष्येत्युक्तं। वैष्णवानां तु हरिभक्तिविलासे सङ्ग्रहकारिका। "नवमी चाष्टमी विद्धा" इत्यादि लिखित्वा,

दशम्यां पारणायाश्च निश्चयान्नवमीचये ।
विद्धापि नवमी ग्राह्या वैष्णवैरप्यसंशयम् ॥ इति ।
अथ शालग्रामशिलायां पूजाकरणे फलाधिक्यम् ।

शालग्रामशिलायां तु तुलसीदलकल्पिता।
पूजा श्रीरामचन्द्रस्य कोटिकोटिगुणाधिका॥
इत्यगस्त्यसंहितोक्तेः। महानवमी तु लिखिता।

अथ दशमी।

तत्र शुक्लदशम्यां सोदयत्रिमुहूर्त्तवेधस्य प्राशस्त्यादेकादशीविद्धा ग्राह्या। कृष्णदशम्यां तु त्रिमुहूर्त्तात्मकासमयवेधस्य प्राशस्त्यान्नवमीविद्धा ग्राह्या।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः॥

इति सर्वतिथिसाधारणमार्कण्डेयोक्तेः, एतेन "दशमी चैव कर्त्तव्या सदुर्गा द्विजसत्तम" इति स्कान्दवाक्यम्। पञ्चमी सप्तमी चेत्यादिवाक्ये समुखीत्वमपि कृष्णपक्षविषयं ज्ञेयं। एवमन्यान्यपि परविद्धानिषेधवाक्यानि कृष्णपक्षविषयाण्येव। सदुर्गा नवमीमिश्रा॥

ननु तिथिसामान्यप्रवृत्तां मार्कण्डेयोक्तिमवलम्ब्य विशेषवाक्यानामेषां पक्षद्वयपरता किमिति निरस्यते इति चेत् न। पक्षद्वये, पूर्वविद्धास्वीकारे।

सम्पूर्णा दशमी कार्य्या पूर्वया परयापि वा।
युक्ता न दूषिता यस्मात्तिथिः सा सर्वतोमुखी॥

इत्यङ्गिरोवाक्ये यथा सम्पूर्णा दशमी दोषरहिता, तथा पूर्वतिथ्या परतिथ्या वा विद्धापीति विशिष्य प्रवृत्तस्य परविद्धाभिधानस्यनिरवकाशत्वेन बलवत्त्वात्। अतएव माधवाचार्य्याः,—

कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता।

## दशहरादशमी ।

ज्येष्ठशुक्लदशमीमधिकृत्य श्रीपुरुषोत्तमक्षेत्रविषये ब्राह्मे,—

यः तस्यां हलिनं कृष्णं पश्येत् भद्रां सुसंयतः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥

स्कान्दे,— ज्येष्ठशुक्लस्य दशमी संवत्सरमुखी स्मृता ।
तस्यां स्नानं प्रकुर्वीत दानञ्चैव विशेषतः ॥
यां काञ्चित् सरितं प्राप्य दद्याद्दर्भतिलोदकम् ।
मुच्यते दशभिः पापैः स महापातकोपमैः ॥

ब्राह्मे,— ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दशपापानि तस्मात् दशहरा स्मृता ॥

भविष्ये,— ज्येष्ठशुक्लदशम्यां तु भवेत् भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥

तथाच, केवलदशमी पुण्या, हस्तनक्षत्रयुता पुण्यतरा मङ्गलवारहस्तनक्षत्रयुता पुण्यतमेति विवेकः । गङ्गायां तु गङ्गा,—

ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां ।

विश्वामित्रः,— हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् ।
पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्याः ॥
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥

विश्वामित्रः,— पारुष्यमनृतञ्चैव पैशुन्यं वापि सर्वशः ।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥

अदत्तानामुपादानं हिंसा चैव विधानतः।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम्॥
दशपापं हरत्येवं स्तूयसे त्वं सुरासुरैः।
हर तानि सदा गङ्गे पापानि भञ्जतो मम॥

विष्णुपादाग्रसम्भूत इति प्रकृतमन्त्रोऽपि पठनीयः, तथा वाल्मीक्युक्तेरिति गौड़ाः। तत्र तिथिद्वैधे शुक्लदशमीत्वात् परविद्धा ग्राह्या।

अपराजितादशमी॥

शतानन्दसङ्ग्रहे,—

श्रवणेन युता चेत् स्यात् दशमी चापराजिता।
तत्र नीराजनं कृत्वा यात्रा कार्य्या जिगीषुणा॥

अन्यच,— आश्विने दशमी शुक्ला श्रवणेन समन्विता।
विजया दशमी प्रोक्ता सा चैवात्यन्तदुर्लभा॥
आश्विनस्य सिते पक्षे दशम्यां तारकोदये।
स कालो विजयो ज्ञेयः सर्वकार्य्यार्थसिद्धये॥
ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः।
विजयो नाम कालोऽयं सर्वकार्य्यार्थसाधकः॥

तथाचात्र सायंसन्ध्यासमागम एव मुख्यः कालः।

मार्त्तण्डस्योदये पुण्या वर्त्तते दशमी तिथिः।
आश्विने शुक्लपक्षे तु सा भवेज्जयदा नृणाम्॥

इत्यादिवाक्यादुदयावधि सायङ्कालव्यापित्वे तिथेः पुण्यत्वं जयदत्वं चेत्यधिकं ज्ञेयम्। चयवशाद्दिनदयेऽपि सायङ्कालासम्भवे तु विजयनामक एकादशमुहूर्त्तो ग्राह्यः।

आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु ।
सायङ्काले शुभा यात्रा दिवा वा विजयक्षणे ॥

इत्युक्तेः । अत्रैकादशीयुक्ता दशमी शस्ता ।

एकादशीयुतायां च दशम्यामुत्सवादिकम् ।
शुक्लायामाश्विने मासि कुरु त्वं भरतर्षभ ॥
इषस्य दशमीं शुक्लां पूर्वविद्धां परित्यजेत् ।

श्रवणेनापि संयुक्ता मित्युक्तेः । आदिना उपवासादि ।
परेद्युः सायङ्काले दशम्यभावे तु नवमीयुतापि ग्राह्या ।

सायङ्काले यदा न स्यात् दशमी चापरेऽहनि ।
नवमीसंयुता कार्या सर्वदा जयकाङ्क्षिभिः ॥
नवमीशेषसंयुक्तदशम्यां विजयोत्सवम् ।
कुरु राम त्वमित्युक्तं वशिष्ठेन महात्मना ॥

इत्युक्तेः । एव च,—

आश्विने शुक्लपक्षस्य दशम्यां पूजयेत्तथा ।
एकादश्यां न कुर्वीत पूजनञ्चापराजितम् ॥

इति शिवरहस्योक्तिरेतत्परैव । कालस्य नियमात् श्रवणयोगे फलाधिक्यं न तदनुसारात् व्यवस्था ।

तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम् ।
योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि ॥

इति देवलोक्तेः ।

दशमी यः समुल्लङ्घ्य प्रस्थानं कुरुते नृपः ।
तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत् ॥

इत्युक्तौ केवलदशम्या एव उक्तत्वाच्च। अतएवात्र राज्ञो यात्रा आवश्यकी। यात्रायां तु वाल्मीकिः,—

दुर्गोत्सवानन्तरवैष्णवर्क्षे
तिथौ दशम्यामपराजितायां।
रामो जिगीषुर्दशदिक्षु वेधं
कृत्वा जगामारिपुरं प्रवीरः॥

यात्रां समाप्य पुनर्बलिः। "विनिवृत्तस्तु बलिं दद्यात्" इति वाक्यात्।

शमीमभ्यर्चयेत् देशयात्रानिर्विघ्नसिद्धये।
वारशूलादि हित्वा तु दिक्षु प्रस्थानमाचरेत्॥

यात्राकरणाशक्तौ तु ज्योतिःशास्त्रे,—

कार्यवशात् स्वयमगमे भूभर्त्तुः केचिदाचार्याः।
छत्रायुधाद्यभिष्टं वैजयिकं निर्गमे कुर्युः॥

तथा खञ्जनादिदर्शनफलं स्थिरलग्ननिषेधादिकं च तत्रैव द्रष्टव्यम्। अत्र विशेषविधिरस्मत्पितामहकृष्णदत्तपण्डितमहापात्रकृते नीतिरत्नाकरे द्रष्टव्यः। श्रीपुरुषोत्तमक्षेत्रे जगन्नाथप्रासादे उदयव्यापिदशम्याम्, "दैवे ह्यौदयिकी" इति व्याक्यात्। यात्रेयं दुर्गादेव्या अपि कार्या। विधिपूजास्तु अन्ते प्रेषणश्लोकैः।

तथाच, आश्विनकृष्णाष्टमीमारभ्य मन्वन्तरसंहितायाम्,—

अष्टम्यां बोधयेद्देवीं नवम्यां च प्रभावतः।
ततः प्रभातसमये मुखप्रक्षालनं जलम्॥
जातीलवङ्गतोयेन क्षालयेत् मुखमन्ततः।

दन्तकाष्ठं दशम्यां तु प्रदद्यात् कार्यसिद्धये ॥
एकादश्यामलक्तञ्च द्वादश्यां नखशोधनम् ।
त्रयोदश्यां ततो दद्यात् गात्रोद्वर्त्तनकं शुभम् ॥
चतुर्द्दश्यां तु देव्यास्तु केशसंयमनं स्मृतम् ।
अमावास्यायाञ्चान्यं तु गात्रोद्वर्त्तनकं तथा ॥
प्रतिपत्सु च सिन्दूरं अञ्जनं चापरेऽहनि ।
तृतीयायां शुभे वस्त्रे चतुर्थ्यां भूषणं शुभम् ॥
पञ्चम्यां सद्घृतैः स्नानं षष्ठ्यां मद्योपहारकैः ।
सप्तम्यां पत्रिकापूजा नानोपकरणैः शुभैः ॥
अष्टम्यां पूजयेद्देवीं नानोपकरणैः शुभैः ।
पशुरक्तैः समांसान्नै र्यथाविभवशक्तितः ॥
नवम्यां बलिदानञ्च विजयार्थी नृपो[१] नरम् ।
दशम्यां प्रेषणं कुर्यात् क्रीडाकौतुकमङ्गलैः ॥

मद्यं मादकं जातीफलादि। षोडशदिनात्मकव्रतपक्षे मलमासपाते सिन्दूरस्यैवावृत्तिरित्याचार्याः। एतस्मिन् दिने श्रीपुरुषोत्तमक्षेत्रादौ विष्णुप्रतिमाया अपि यात्रा क्रियते ।

तथा च विष्णुधर्मोत्तरे,—

रथमारोप्य देवेशं सर्व्वाभरणशोभितम् ।
साधिज्यधनुर्बाणपाणिं नक्तञ्चरान्तकम् ॥
स्वलीलया जगत्त्रातुमाविर्भूतं रघूद्वहम् ।

---

(१) नृपोत्तमः इति पाठान्तरम् ।

राजोपचारैः श्रीरामं शमीवृक्षतलं नयेत् ॥
सीताकान्तं शमीयुक्तं भक्तानामभयङ्करम् ।
अर्चयित्वा शमीवृक्षमर्चयेद्विजयाप्तये ॥
तत्र मन्त्रः,— शमी शमयते पापं शमी लोहितकण्टका ।
धरित्र्यर्जुनबाणानां रामस्य प्रियवादिनी ॥
करिष्यमाणा या यात्रा यथाकालं सुखं मया ।
तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥
गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैस्ततो देवं गृहं नयेत् ॥
केश्चिद्रथे स्तत्र भाव्यं केश्चिद्गजाश्वयोर्वानरैः ।
केश्चिच्छाखामुखैर्भाव्यं कोशलेन्द्रस्य तुष्टये ॥
निर्जिता राक्षसा दैत्या वैरिणो जगतीतले ।
रामराज्यं रामराज्यं रामराज्यमिति ब्रुवन् ॥
आनीय स्थापयेद्देवं निजसिंहासने सुखम् ।
ततो नीराज्य देवेशं प्रणमेद्दण्डवद्भुवि ॥
महाप्रसादवस्त्रादि धारयेद्वैष्णवैः सह ।
सीता दृष्टेति हनुमद्वाक्यं श्रुत्वाकरोत् प्रभुः ॥
विजयं दानवैः सार्द्धं वासवोऽस्मात् शमीतलात् ।
तथा च विष्णुप्रतिमानामपि विजयोत्सवः शास्त्रीयः ।

कुष्माण्डदशमी ।

शाम्बपुराणे,— आश्विनस्य सिते पक्षे दशम्यां नियतः शुचिः ।
प्रातःस्नानादिकं कर्म कृत्वा पश्चादनन्तरम् ॥

एवं न्यासविधिं कृत्वा ततः पूजां समाचरेत् ।

तथा,— शिवं दशरथं तत्र लक्ष्मीदेवीं च पूजयेत् ।
वह्निः कुश्माण्डकुसुमैर्दशाहं दशभिः क्रमात् ॥
पूजयेत् विधिवत्तावत् यावत्कृष्णचतुर्थिका ।
तस्यामर्घं शशाङ्काय दत्वा न विधवा भवेत् ॥

अथैकादशीविचारः ।

एकादश्युपवासो नित्यः काम्यश्च, नित्यत्वापादकानामष्टानामपि विद्यमानत्वात् । तथा च पूर्व्वोक्तकारिकाक्रमेण नित्यशब्दादयः ।

उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि ।

इति गारुडे ।

एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः ।

इति सनत्कुमारसंहितायाम् ।

उपोष्यैकादशी राजन् यावदायुःप्रवृत्तिभिः ।

इति आग्नेये ।

पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम् ।

इति नारदीये ।

परमापदमापन्नो हर्षे वा समुपस्थिते ।
सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम् ॥

इति विष्णुधर्मोत्तरे ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।

इति कात्यायनीये ।

न करोति हि यो मूढ एकादश्यामुपोषणम् ।

स नरो नरकं याति रौरवं तमसावृतम् ॥
निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः ।
एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता ॥
मद्यपानान्मुनिश्रेष्ठ पातैव नरकं व्रजेत् ।
एकादश्यन्नकामस्तु पितृभिः सह मज्जति ॥

इति सनत्कुमारः ।

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्दादशिको भवेत् ॥

इति मार्कण्डेयः ।

इति नित्यादिशब्दाः । कारिकान्तरोक्तानतिक्रमोऽपि ।
तथा च कण्वः,—

एकादशीमुपवसेन्न कदाचिदतिक्रमेत् ।

एवमन्यान्यपि । तथा च कौर्मस्कान्दयोः,—

न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ।

नारदीये,— यानि कानि च पापानि ब्रह्महत्यादिकानि च ।

अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
तानि पापान्युपाश्नाति सम्प्राप्ते हरिवासरे ।
अग्निवर्णायसन्तीक्ष्णं क्षिपन्ति यमकिङ्कराः ।
मुखे तेषां महादेवि भुञ्जते ये हरेर्दिने ॥

नारदीये,— व्याजेनापि छला राजन् न दर्शयति पातकम् ।

फलयोगात् काम्यश्च । तथा च कौर्मे,—

यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

नारदीयेऽपि,— स्वर्गमोक्षप्रदा ह्येषा पुत्रपौत्रप्रदायिनी ।

अकरणे द्वादशमापने दोष उक्तो विष्णुरहस्ये,—

समादाय विधानेन द्वादशीव्रतमुत्तमम् ।

अस्य भङ्गं नरः कृत्वा रौरवं नरकं व्रजेत् ॥

उपवासाङ्गतिथिनिर्णयस्य वेधाधीनत्वात् दशमीवेधो निरूप्यते। अरुणोदयवेधः, कलाकाष्ठादिवेधः, पञ्चदशदण्डवेधश्चेति त्रिविधः। तत्राद्यवेधो वैष्णवानामेवेति वक्ष्यते। द्वितीय इतरेषां। तृतीयस्तु नोपवासविषयः। तथा च निगमे,—

सर्वप्रकारवेधोऽयमुपवासस्य दूषकः ।

सार्द्धसप्तमुहूर्त्तस्तु वेधोऽयं बाधते व्रतम् ॥ इति ।

नात्रोपवासे पञ्चदशदण्डवेधः नापि त्रिमुहूर्त्तवेधः ।

नारदीये,—लववेधेऽपि विप्रेन्द्र दशम्येकादशीं त्यजेत् ।

सुराया विन्दुना स्पृष्टं गङ्गाम्भ इव निर्मलम् ॥

स्मृत्यन्तरेऽपि,— कलार्द्धेनापि विद्धा स्याद्दशम्येकादशी यदि[१] ।

तत्राप्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

तथा,— अतिवेधा महावेधा ये वेधास्तिथिषु स्मृताः ।

सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये मतः ॥ इति

तथा च श्रौतस्मार्त्तानां सूर्योदयवेधः, यत्रोदये कलाकाष्ठेति वक्ष्यमाणोक्तेश्च ।

---

(१) दशम्येकादशीं विना ।

अथाधिकारिणः ।

भविष्ये,— नित्यमेतद्व्रतं नाम कर्त्तव्यं सार्ववर्णिकम् ।
सर्वाश्रमाणां सामान्यं सर्वधर्मेषु चोत्तमम् ॥

नारदीये,— अष्टाब्दादधिकोमर्त्यो ह्यपूर्णाशीतिवत्सरः ।
यो भुङ्क्ते मानवः सोऽभुङ्क्तेकादश्यां स पापकृत् ॥

तत्र व्यवस्था, कौर्मे,—
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वानप्रस्थोयतिश्चैव शुक्लामेव सदा गृही ॥

भविष्योत्तरे,— एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
ब्रह्मचारी च नारी च शुक्लामेव सदा गृही ॥

अत्र नारी विधवा,
विधवा या भवेन्नारी भुञ्जीतैकादशीदिने ।
तस्यास्तु सुकृतं नश्येत् भ्रूणहत्या दिने दिने ॥

इति सौरधर्मोक्तेः,
नास्ति स्त्रीणां पृथग्धर्मो न व्रतं नाप्युपोषणम् ।

इति मनूक्त्या पतिमत्यास्तन्निषेधात् ।

तदनुवृत्तौ,— आयुष्यं हरते पत्यु र्नरकञ्चैव गच्छति ।

इति विष्णूक्तेश्च । यत्तु एकादशीप्रस्तावे, तत् भर्त्तनुज्ञापरम् ।
"भर्तृमतौ तथा" इति स्कान्दे उक्तम् । यत्तु रविवारैकादश्यां
सधवस्त्रीभिः किञ्चिद्भक्षणपूर्वकं व्रतं क्रियते, तत्,—
भानुवारसमोपेता तथा सङ्क्रान्तिसंयुता ।
एकादशी सदोपोष्या पुत्रपौत्रविवर्द्धिनी ॥

इति नारदोक्तेः, "सर्वसम्पत्करी तथा" इति सनत्कुमारीयोक्तेश्च काम्यतया न दोषावहं, वारव्रतेषु स्त्रीणामधिकाराचारात्, उपवासनिषेधे अनोदनादिभक्षणेन निषेधपरिपालनाच्च ।

ब्रह्मवैवर्त्ते,— शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ।

इत्यादौ, "एकादशीषु कृष्णासु" इति वक्ष्यमाणवाक्येष्वपि उपवासाङ्गनियमनिषेधो नोपवासनिषेधः । "यानि कानि च" इत्यादि वक्तृवाक्येषु भोजनस्य[१] निषेधात् इति बहवः । प्राचीनास्तु गृहस्थेतरेषां पक्षद्वयेऽपि व्रतं गृहस्थानां शुक्लास्वेव । शयनीबोधनीमध्येऽपि "एकादशीषु कृष्णासु" इति निषेधात् पुत्रवद्गृहिणां किञ्चित् भक्षणपूर्वकं व्रतमिति ।

तथा च वायवीये,— उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत् ।
न दुष्यत्युपवासेन उपवासफलं लभेत् ॥

भक्ष्यकल्पनापि तत्रैव,—

नक्तं हविष्यान्नमनोदनं वा,
फलं तिलाः क्षीरमथाम्बु वाज्यम् ।
यत्पञ्च गव्यं यदि वापि वायुः
प्रशस्तमत्रोत्तरमुत्तरं स्यात् ॥

वायुभक्षणस्याप्युपवासानुकल्पत्वम्[२] ।

तथा च रामायणे,— जलाशी मारुताहारो निराहारस्तथैव च ।
इति पृथगुक्तेः ।

---

(१) भोजनस्य सर्वथा निषेधात् ।　　(२) नोपवासत्वम् ।

भविष्ये,— दन्तखाद्यं भवेत् यद्धि तदोदनमिति स्मृतम्।
भक्ष्यं चोष्यं[१] तथा लेह्यं ओदनं चिः प्रकीर्त्तितम्॥
पेयञ्चनोदनं प्रोक्तं + + + + +। इत्यादि।

स्कान्दे,— अशक्तावुपवासस्य भक्ष्यं किञ्चित् प्रकल्पयेत्।

विष्णुरहस्ये,— असामर्थ्ये शरीरस्य व्रते च समुपस्थिते।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम्॥
भगिनीं भ्रातरं वापि व्रतमस्य न लङ्घयेत्।
भार्य्या भर्त्तृव्रतं कुर्य्यात् भार्य्यायाश्च पतिस्तथा॥

स्कान्दे,— नारी च पतिमुद्दिश्य एकादश्यामुपोषिता।
पुण्यं क्रतुशतं प्राह्न मुनयः पारदर्शिनः॥
उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम्।
राज्यस्य क्षत्रियार्थे च एकादश्यामुपोषितः॥
पुरोधाः क्षत्रियैः सार्द्धं फलं प्राप्नोति निश्चितम्।
मातामहादीनुद्दिश्य एकादश्यामुपोषणे॥
कृते क्रतुफलं विप्राः समग्रं समवाप्नुयुः।
कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः॥

अन्येषां केषाञ्चिदप्यधिकारः पूर्वं लिखितः।

ननु,— एकादशीषु कृष्णासु रविसङ्क्रमणे तथा।
चन्द्रसूर्य्योपरागे च न कुर्य्यात् पुत्रवान् गृही॥
इति कात्यायनोक्तौ,
सङ्क्रान्त्यां कृष्णपक्षे च रविशुक्रदिने तथा[२]।

---

(१) शोष्यम्। (२) रविसंक्रमणे तथा।

इति कौर्म्मेऽपि, शुक्लैकादश्यामपि सङ्क्रान्त्यादिपाते उपवासो न कार्य्य इति चेत्, न। "तन्निमित्तोपवासस्य" इति जैमिन्युक्तेः सङ्क्रान्त्यादिनिमित्तोपवासस्य गृहस्थं प्रति निषेधात्।

तथा च तद्वाक्यम् विष्णुधर्मोत्तरे,—

भृगुभानुदिनोपेता सूर्य्यसङ्क्रान्तिसंयुता।

एकादशी सदोपोष्या पुत्रपौत्रविवर्द्धिनी॥

प्रत्युत, "सङ्क्रान्तौ रविवारो वा" इत्यादि सनत्कुमारीयोक्तौ च फलाधिक्यमपि कथितम्।

कात्यायनः,— उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।

उपवासं प्रकुर्वीत आघ्राय पितृसेवितम्॥ इति।

वाराहे,— सूतकेऽपि नरः स्नात्वा प्रणम्य शिरसा हरिम्।

एकादश्यां न भुञ्जीत व्रतमेतन्निरूप्यते[(१)]॥

मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः।

पुलस्त्यः,— एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि।

अशौचे तु काम्यव्रतेऽपि[(२)] पूजादिवर्जं शारीरनियमकरणमिति पूर्वं लिखितम्। अत्र "पूजादिकमशौचान्ते कार्य्यम्" इति माधवीये।

सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्द्दनम्।

दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते॥

इति मात्स्योक्तेः।

---

(१) न लुप्यते इति। (२) काम्यव्रतेऽपि।

माधवाचार्य्याः,— शुक्लायामेव नित्योपवासो नैमित्तिककाम्योपवासौ तु कृष्णायामपि कार्य्यौ। तत्र नैमित्तिकः शयनीबोधिनी मध्ये।

काम्यस्तु मात्स्ये,— एकादश्यान्तु कृष्णाया मुपोष्य विधिवन्नरः।

पुत्रानायुः समृद्धिञ्च सायुज्यञ्च समृच्छति॥ इत्यादि।

काम्ये सर्वाङ्गोपसंहारः। नित्यत्वे तु केवलोपवासेनापि सिद्धिः।

अथ नित्योपवासी चेत्सायं प्रातर्भुजिक्रियाम्।

वर्जयेन्मतिमान् विप्रः संप्राप्ते हरिवासरे॥

इति विष्णुरहस्योक्तेः।

अशक्तौ तु कात्यायनः,— अशक्तिमांस्तु ततः कुर्यान्नियमं सविशेषणम्।

अथैकादश्यां द्वैधे निर्णयः।

यत्रोदये कलाकाष्ठामुहूर्त्तमपि दृश्यते।

सैवैकादश्युपोष्या स्यान्नतु पूर्वा कथञ्चन॥

दिनद्वयेऽप्युदयसम्बन्धे द्वादशीवृद्धौ सर्वेषामुत्तरैव।

संपूर्णैकादशी यत्र प्रभाते पुनरेवसा।

सर्वैरेवोत्तरा कार्य्या परतो द्वादशी यदि॥

इति उभयाधिक्ये नारदोक्तेः।

यत्तु कृत्यकौमुद्याम् "उभयाधिक्ये विधवाणामुपवासद्वयं" लिखितं, तदाचारविरोधात् प्रत्यक्षशास्त्रविरोधात् सर्वस्मृतिकारैरनादृतत्वाच्च सर्वथा नाद्रियते।

द्वादशीक्षये तु,— संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।

द्वादशी च त्रयोदश्यां नास्ति चेत्तत्कथं भवेत्॥

उत्तरां तां यतिः कुर्य्यात् पूर्वामुपवसेद्गृही ।

एतेन विधवाप्युत्तरामुपवसेत् यतिसमानधर्मत्वात् निष्कामत्वाच्च । तथा च मार्कण्डेयः,—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां वसेत् ॥

अतएव गृहस्थानां उत्तरोपवाससमाचारोऽपि निष्कामत्वपक्षाश्रयणादेव । सकामत्वे तु पूर्वोपवास एव युक्तः ।

तदेतदुक्तं विष्णुरहस्ये,—

निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा ।
सकामस्तु सदा पूर्वामिति बौधायनो मुनिः ॥

यदा तूदये कियती दशमी, तदुत्तरमेकादशी क्षीणा, परदिने द्वादशी, तदा दशमीविद्धाप्येकादशी ग्राह्या ।

एकादशी दशाविद्धा सकला द्वादशी परे ।
उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत् ॥

इति विष्णुधर्मोत्तरोक्तेः ।

त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन ।
उपोष्यैकादशी तत्र दशमीमिश्रिता फला ॥

इति गोभिलोक्तेश्च ।

अत्र यः कालादर्शे,—एकादशी यदा ब्रह्मन् दिनत्रयतिथि भवेत् ।
तदा ह्येकादशीं त्यक्ता द्वादशीं समुपोषयेत् ॥

इति गोभिलोक्तानन्तरम् आलभ्य,

उपोषणन्तु विद्धायां द्वादशीं वा त्रये सति ।

इति स्वकारिकायां विकल्प उक्तः, स नास्माद्देशे आद्रियते।
इति एकादश्यां वैष्णवायामप्युपवासव्रतादिकमेव।
ननु,— कलार्द्धेनापि विद्धा स्यात् दशम्यैकादशी यदि।
तदाप्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्॥
इत्यस्य स्मृत्यन्तरवाक्यस्य कागतिरिति चेत्, उच्यते। तस्य काम्यद्वादशीव्रतनिमित्तत्वेन दशमीनिषेधपरत्वं नत्वेकादशीव्रतनिषेधपरत्वम्।
द्वादश्यामुपवासन्तु ये वै कुर्वन्ति मानवाः।
वत्स मामेव ते यान्ति मम व्रतपरायणाः॥
इति काम्यद्वादशीव्रतस्याप्युक्तेः।
अन्यथा,— एकादशी दशाविद्धा परतोऽपि न विद्यते।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः॥
इत्यादि वायुपुराणादिपूक्तदशमीविद्धैकादश्युपवासविधायकवाक्यानामनवकाशः प्रसज्येत। किञ्च, "कलार्द्धेनापि" इत्यादिवाक्यानां वैष्णवविषयत्वमिति वक्ष्यते। यदा तूदये एकादशी तदुत्तरं द्वादश्याः क्षयः, परदिने त्रयोदशी, तदा गृहस्थस्य,—
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
त्र्यहस्पृक् तदहोरात्रं नोपोष्यं तत्सुतार्थिभिः॥
इति पाद्मोक्तेः,[1] स्मृत्यन्तरे उपवासनिषेधात् किञ्चित् भक्षणपूर्वकं व्रतम्। तथा कालादर्शधृता स्मृतिः,—
एकादशी दशाविद्धा द्वादशी च क्षयङ्गता।

(१) इति पाद्मोक्त्या उपवासनिषेधात्।

दानं वाप्येकभक्तं वा तदाकुर्यादयाचितम् ॥ इति ।

अतएव,— एकादशी कलामात्रा द्वादशी च त्रयङ्गता ।

क्षीणा सा द्वादशी पुण्या नक्तं तत्र विधीयते ॥

इत्यादि वाक्येषु एक[१] नक्तविधिरसमर्थस्योपवासासम्भवे सत्युपगन्तव्यं इति विज्ञानेश्वराः ।

ननु एकादशीत्रयवदिह दशमीविद्धा किं न ग्राह्या इति चेत्, न । तद्विशेषवचनाभावात् । विशेषवचनाभावे दशमीविद्धायाः सर्वथा अनादेयत्वात् ।

तथाच नारदः,— नोपोष्या दशमीविद्धा सदैवैकादशीतिथिः ।

तामुपोष्य नरो जह्यात् पुण्य वर्षशतोद्भवम् ॥

दशम्यां यस्तु विद्धायामेकादश्यामुपोषितः ।

तस्यायुः क्षीयते सत्यं नारदोऽप्यब्रवीद्वचः ॥

दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।

तस्यापत्यविनाशः स्यात् परेत्य नरकं व्रजेत् ॥

दशमीशेषसंयुक्ता गान्धार्य्या समुपोषिता ।

तस्याः पुत्रशतं नष्टं तस्मात् तां परिवर्जयेत् ॥ इति[२]।

एवं ब्राह्मे,— सीतामान्धातृभार्य्ययोर्दशमीविद्धोपोषणादेवदुःखमित्युक्तम् ।

भविष्ये,— नोपोषितव्यं नक्तञ्च नैकभक्तमयाचितम् ।

(१) एष नक्तविधि ।

(२) विष्णुधर्मोत्तरे,— द्वादश्याः प्रथम पादो हरिवासरसंज्ञक ।
तमतिक्रम्य कुर्वीत पारणं विष्णुतत्पर ॥
पुस्तकान्तरे ऽधिकः पाठः ।

नन्दायां पूर्वविद्धायां कुर्यादेवं यमोदितः ॥

एकादशीव्रतविधिरस्मत्कृते व्रतसारे द्रष्टव्यः ।

अथ पारणे विशेषः ।

स्कान्दे,— पारणेऽहनि संप्राप्ते द्वादशीं यो व्यतिक्रमेत् ।

त्रयोदश्यान्तु भुञ्जानः शतजन्मनि नारकी ॥

कलाद्वयं त्रयं वापि द्वादशीं नलतिक्रमेत् ।

पारणे मरणे नृणां तिथिस्तात्कालिकी भवेत्[१] ॥

तथा,— स्नानार्च्चनक्रिया कार्य्या दानहोमादिसंयुता ।

एतस्मात् कारणात् विप्र प्रत्यूषे स्नानमाचरेत् ॥

पितृतर्पणसंयुक्तं स्वल्पां दृष्ट्वा तु द्वादशीम् ।

महाहानिकरी ह्येषा द्वादशी लङ्घिता नृणाम् ॥

पुनः स्कान्दे,— कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्द्ध्वमेव हि ।

आमध्याह्नाः क्रियाः सर्वाः कर्त्तव्याः शम्भुशासनात् ॥

अत्यन्तासामर्थ्ये देवलः,—

सङ्कटे समनुप्राप्ते द्वादश्यां पारयेत् कथम् ।

अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत् ॥

यदा कलापि द्वादशी नास्ति तदा त्रयोदश्यामपि पारणम्,—

त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम् ।

शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयम् ॥

इति नारदीयोक्तेः । पारणं तु नैवेद्यं तुलसीमिश्रं कार्यम् ।

---

(१) स्मृता ।

कृत्वा चैवोपवासन्तु योऽश्नाति द्वादशीदिने।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् ॥

इति स्कान्दोक्तेः । तत्र दशम्यादिदिनत्रये नियमाः—

अङ्गिराः,— सायमाद्यन्तयोरह्नोः सायम्प्रातश्च मध्यमे ।
उपवासफलप्रेप्सु र्जह्याद्भुक्तिचतुष्टयम्[१] ॥

देवलः,— दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः ।
एकादशीमुपवसेत् पक्षयोरुभयोरपि ॥
देवतास्तस्य तुष्यन्ति काङ्क्षितं चैव सिध्यति ।
शाकं मांसं मसूरांश्च पुनर्भोजनमैथुने ॥
द्यूतमत्यम्बुपानञ्च दशम्यां वैष्णवस्त्यजेत् ।

ब्रह्माण्डे,— कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामञ्च प्रवासञ्च दिवास्वप्नमथाञ्जनम् ॥
तिलपिष्टं मसूरांश्च द्वादश्यैतानि वैष्णवः ।
द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥

विष्णुरहस्ये,— स्मृत्यालोकनगन्धादिस्वादनापरिकीर्त्तितम् ।
अन्नस्य वर्जयेत् सर्वं ग्रासानाञ्चाभिकाङ्क्षणम् ॥
गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलञ्चानुलेपनम् ।
व्रतस्थो वर्जयेत् सर्वं यच्चान्यच्च निराकृतम् ॥

अन्यच अन्योपवासे इत्यर्थः । तथा च दशमीद्वादश्योः शाक-निषेधादिकं पूर्ववत् ।

---

(१) भक्तचतुष्टयम् ।

ब्रह्माण्डे,— सङ्क्रान्त्यां पञ्चदश्याञ्च द्वादश्यां श्राद्धवासरे।
वस्त्रञ्च पीड्यते नैव चारेणापि न योजयेत्॥
हरिभक्तिविलासादिग्रन्थानालोक्य सम्प्रति।
वैष्णवैकादशीभेदा लिख्यन्तेऽनतिविस्तरम्॥

तत्रादौ वैष्णवलक्षणम्, विष्णुपुराणे,—
न चलति निजवर्णधर्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे।
न हरति न च हन्ति किञ्चिदुच्चैः
सितमनस त्मवेहि विष्णुभक्तम्॥

स्कान्दे,— परमापदमापन्नो हर्षे वा समुपस्थिते।
नैकादशीं त्यजेद्यस्तु तस्य दीक्षास्ति वैष्णवी॥
समात्मा सर्वजीवेषु निजाचाराद्विप्लुतः।
विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते॥
सदीक्षाविधिसन्न्यासं सयन्त्रं द्वादशाक्षरम्।
अष्टाक्षरमथान्यं वा ये मन्त्रं समुपासते॥
ज्ञेयास्ते वैष्णवा लोके विष्णवर्चनरतास्तथा॥

माधवाचार्यास्तु,— वैखानसाद्यागमोक्तदीक्षाप्राप्तो हि वैष्णवः।

तत्र नित्यत्वादिविचारः(१) पूर्ववत्। कलाकाष्ठादिवेधोऽपि सूर्योदय इवारुणोदयेऽपीति विशेषः।

विलाससंग्रहकारिका,—

---

(१) नित्यत्वानित्यत्वविचारः।

एकादशी च सम्पूर्णा विद्धेति द्विविधा भवेत् ।
विद्धा तु त्रिविधा तत्र त्याज्या विद्धा च पूर्वया ॥

वेधत्रयन्तु पूर्वमुक्तम् । अरुणोदयवेधो गारुड़े,—

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तत्र चैकादशीव्रतम् ॥

तत्प्रमाणं, स्कान्दे,—उदयात् प्राक् चतस्रस्तु नाड़िका अरुणोदयः ।

नाड़िकाः दण्डाः । स च रात्रेस्त्रिंशत्तमभाग इति हरिभक्तिविलासकाराः ।

अत्र ये संपूर्णसन्दिग्धसंयुक्तसङ्कीर्णनामका वेधमहावेधातिवेधयोगाख्याश्चत्वारो वेधास्तेषामुदयात्प्राक्कालीनचतुर्दण्डात्मकारुणोदयवेधान्तर्गतत्वात् कैमुतिकन्यायेन वेधकत्वमिति ग्रन्थगौरवभयान्नलिखिताः । एतदनन्तरम्, पाद्मे,—

अरुणोदयकाले तु वेधं दृष्ट्वा चतुर्विधम् ।
सद्दीनं ये प्रकुर्वन्ति यावदाभूतनारकाः ॥

संपूर्णादीनामन्ते गारुड़े,—

पुत्रपौत्रप्रवृद्ध्यर्थं द्वादशीमुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

विलाससंग्रहकारिकापि,—

अत एव परित्याज्या समये चारुणोदये ।
दशम्येकादशीविद्धा वैष्णवेन विशेषतः ॥

यत्तु कौर्मे, अर्द्धरात्रवेध उक्तः । तदपवादो ब्रह्मवैवर्त्ते,—

अर्द्धरात्रे च केषाञ्चित् दशम्या वेध इष्यते ।

अरुणोदयवेलायां नावकाशो विचारणे ॥
कपालवेध इत्याऽऽचार्या ये हरिप्रियाः ।
न तन्मम मतं यस्मात्त्रियामा रात्रिरिष्यते ॥
त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥

इति ब्रह्मवैवर्त्तवाक्यात् त्रियामात्वं । एकादशीत्रयादौ विशेषः ।
तथा च पितामहः,—

एकादशीदिने क्षीणे उपवासं करोति यः ।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डतो यथा ॥
दिनत्रये तु सम्प्राप्ते उपोष्या द्वादशी भवेत् ।
दशमीशेषसंयुक्तां न कुर्वीत कदाचन ॥ इति ।

कौर्म्मे,— पूर्णा येकादशी त्याज्या[१] वर्द्धते द्वितयं यदि ।
द्वादश्यां पारणालाभे पूर्व्वैव परिगृह्यताम् ॥

विष्णुधर्म्मोत्तरे,— एकादशी यदा वृद्धा[२] द्वादशी च क्षयङ्गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

कौर्म्मे,— तिथिवृद्धौ तथा ह्रासे सम्प्राप्ते वा दिनत्रये ।
सन्दिग्धेषु च वाक्येषु[३] द्वादशीं समुपोषयेत् ॥

अथ उन्मिलिन्याद्यष्टविधैकादश्यः ।

ब्रह्मवैवर्त्ते,— उन्मिलिनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ॥

---

(१) पूर्णैकादशमी त्याज्या ।

(२) एकादशी यदा विद्धा दशमी च क्षयङ्गता । (३) सर्व्वेषु ।

द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज ।
तिथियोगेन जायन्ते चतस्रश्चापरास्तथा ॥
नक्षत्रयोगाच्च बलात् पापं प्रशमयन्ति ताः ।
एकादशी तु सम्पूर्णा वर्द्धते पुनरेव सा ॥
द्वादशी च न वर्द्धेत कथितोन्मिलिनीति सा ।
द्वादश्येव विवर्द्धेत न चैवैकादशी यदा ॥
वञ्जुलीति भृगुश्रेष्ठ कथिता पापनाशिनी ।
अरुणोदय आद्या स्यात् द्वादशी सकलं दिनम् ॥
अन्ते त्रयोदशी प्रातस्त्रिस्पृशा च हरेः प्रिया ।
कुहूराके यदा वृद्धिं प्रयाते पक्षवर्द्धिनी ॥
विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ।
पुष्यश्रवणपुष्याद्यरोहिणीसंयुतास्तु ताः ॥
उपोषिताः समफला द्वादश्योऽष्टौ पृथक् पृथक् ।

संग्रहकारिका,—

एतत्भेदाष्टके नन्दां त्यक्त्वा भद्रैव गृह्यते ।

नन्दा, एकादशी। भद्रा, द्वादशी। एतेषु केषुचित् भेदेषु कालविशेषेषु फलाधिक्यम् ।

तत्रैव,— शुक्ला वैशाखमासे तु सम्प्राप्ता मधुसूदनी ।
द्वादशी त्रिस्पृशा नाम पापकोटिक्षयावहा ॥
धन्याः सर्वे मनुष्यास्ते वैशाखे मधुसूदनी ।
सम्प्राप्ता त्रिस्पृशा यैस्तु बुधवारेण संयुता ॥

माघे तु,— द्वादश्यां तु सिते पक्षे ऋक्षं यदि पुनर्वसु ।

नाम्ना सा तु जया ख्याता तिथीनामुत्तमा तिथिः॥

तथा,— यदा तु शुक्लद्वादश्यां प्राजापत्यं प्रजायते।

जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः॥

तथा,— यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत्।

तदा सा तु महापुण्या द्वादशी विजया स्मृता॥

प्राजापत्यं रोहिणी।

तथा,— यदा तु शुक्लद्वादश्यां पुष्यं भवति कर्हिचित्।

तदा सा तु महापुण्या कथिता पापनाशिनी॥

इत्याद्युक्त्वा स्नानदानादिषु बहूनि फलान्युक्तानि। पुष्यायं, पुनर्वसुनक्षत्रम्। पक्षवर्द्धिन्याः स्वरूपलक्षणम्, पाद्मे,—

अमा वा यदि वा पूर्णा सम्पूर्णा जायते यदा।

भूत्वा च षष्टिघटिका जायते प्रतिपद्दिने॥ इति।

अथ विलासमंग्रहकारिका,—

अथ स्वक्षप्रयुक्तानां व्रतकर्त्तव्यता यथा।

जयादीनां चतसृणां तथा व्यक्तं निरूप्यते॥

भान्वर्कोदयमारभ्य प्रवृत्तान्यधिकानि चेत्।

समान्यूनानि वा सन्तु ततोऽमीषां व्रतौचिती॥

किं वा सूर्य्योदयात् पूर्वं प्रवृत्तान्यधिकानि चेत्।

समानि वा तदायेषां व्रताचरणयोग्यता॥

श्रवणाव्यतिरिक्तेषु नक्षत्रेषु खलु त्रिषु।

सूर्यास्तमनपर्य्यन्तं कार्य्यं द्वादश्यपेक्षणम्॥

श्रवणे त्वस्तमनतः द्वादश्याश्च समाप्तताम्।

गतायामपि तत्रैव व्रतस्योचितता भवेत् ॥

तत्रैव पारणकालनिर्णयः,—

वृद्धौ भतिथ्योरधिका तिथिश्चेत् पारणं ततः ।

भान्ते स्याचेत्तिथिर्न्यूना तिथिमध्ये तु पारणम् ॥

द्वादश्यनतुवृत्तौ तु वृद्धौ ब्रह्माच्युतर्क्षयोः ।

तन्मध्ये पारणं वृद्धौ शेषयोस्तदतिक्रमे ॥

श्रीद्वादशीचतुष्कस्य मद्दतोऽसौ विनिर्णयः ।

नृसिंहपरिचर्यादियन्थं दृष्ट्वा विनिर्मितः ॥

ब्रह्मा, रोहिणी । अच्युतः श्रवणर्क्षम् । आद्येऽपि भेदः ।

पाद्मे,— एकादश्यान्तु प्राप्तायां मातापित्रो र्मृतेऽहनि ।

द्वादश्यां तत्प्रदातव्यं नोपवासदिने क्वचित् ॥

कात्यायनः,— द्वादशीपूर्वपादीयस्तत्र चेद्धरिवासरः ।

द्वादश्याधिक्यतः तिष्ठेत् पारणं तत्र नाचरेत् ॥

एकादश्याधिक्यद्वादश्याधिक्यभेदौ उन्मिलिनी, वञ्जुलिनी चेति न पुनर्लिखितौ । उभयाधिक्ये तु भृगुः,—

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥

सन्देहे निर्णायकनिरूपणम्,—

विष्णुरहस्ये,— अर्चयन्ति सदा विष्णुं मनोवाक्कायकर्मभिः ।

तेषां हि वचनं कार्य्यं ते हि विष्णुसमा मताः ॥

इति वैष्णवैकादशी निर्णीता । गृहीतदीक्षैरपि श्रौतवैष्णवैस्तु-स्मार्त्तमार्गेणैव एकादशीं कुर्व्वन्ति ॥ इति साधारणैकादशी ॥

अथ हरिशयनपार्श्वपरिवर्त्तनोत्थापनकालविचारः ।

यथा, मात्स्ये,— शेते विष्णुः सदाषाढे भाद्रे च परिवर्त्तते ।
कार्त्तिके प्रतिबुध्येत शुक्लपक्षे हरेर्दिने ॥

हरेर्दिने, एकादश्याम् ।

नारसिंहे,— पञ्च मासान् हरौ सुप्ते देशे तत्र भयं भवेत् ।
ब्रह्महा स भवेद्राजा संग्रामे भयमाप्नुयात् ॥
स्वपेन्नारायणो देवस्तुर्यं मासि सञ्चया[१] ।
न वर्द्धयेत्स्वापदिनं तदा लोकः सुखी भवेत् ॥

अतः आषाढ़शुक्लैकादशीमारभ्य कार्त्तिकशुक्लैकादश्यन्तमास-चतुष्टये हरिशयनम् ।

स्मृत्यन्तरे,— निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।

भविष्योत्तरे,— मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् ।
तुलाराशिगते तस्मिन् पुनरुत्थापयेद्ध्रुवम् ॥
अधिमासेऽपि पतिते ह्येष एव विधिक्रमः ।
कार्त्तिके शुक्लपक्षस्य एकादश्यां यथाविधि ॥
ततः समुत्थिते विष्णौ क्रियाः सर्वाः प्रवर्त्तयेत् ।

अत्र विशेषमाह वृद्धमिहिरः,—
माधवाद्येषु षट्स्वेकमासि दर्शद्वयं यदा ।
द्विराषाढ़ः स विज्ञेयः शेते कर्कटकेऽच्युतः ॥

इयं द्विराषाढ़संज्ञा उत्तरभाविवर्षे हरिस्वापविवेकायोपयुज्यते, तथा च वृद्धमिहिरः,—

(१) संचयः ।

मेषादिमिथुनान्तेषु यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तथावश्यं मिथुनार्के हरिः स्वपेत् ॥
कर्कटादित्रिके मासि यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तथावश्यं कर्कटार्के हरिः स्वपेत् ॥

भौमैकादशी ।

गरुड़पुराणे,— माघमासे शुक्लपक्षे पुष्यर्क्षेण युता पुरा ।
एकादशी तथा चैव भौमेन समुपोषिता ॥
अर्चयंस्तद्व्रतं कुर्यात् पितृणामनृणो भवेत् ।
भौमद्वादशी विख्याता प्राणिनां पुण्यवर्द्धिनी ॥
नक्षत्रेण विनाप्येषा ब्रह्महत्यां व्यपोहति[१] ।

तदनुवृत्तौ मात्स्ये,—
यद्यष्टमीचतुर्द्दश्यो द्वादशीषु च भारत ।
अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम् ॥
ततः पुण्यामिमां भौम तिथिं पापप्रणाशिनीम् ।
उपोष्य विधिनानेन गच्छेद्विष्णोः परम्पदम् ॥

अथ द्वादशी ।

सा चैकादशीयुता ग्राह्या, युग्मोक्तेः । उपवासातिरिक्तव्रते तु कृष्णैकादश्युपवासेऽपि,

स्कान्दे,— द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो ।
सदा कार्य्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः ॥

---

(१) विनाशयेत् ।

नन्वेवं सति "असमाप्ते व्रते पूर्वं" इत्याद्युक्तनिषेधेऽप्येकस्मिन् दिने व्रतद्वयानुष्ठानं प्राप्नोतीति चेत्, न, दैवतैक्यात् दिनद्वयेऽपि व्रताचरणे दोषाभावात् । तथा च विष्णुधर्मोत्तरे,—

एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
न तत्र विधिलोपः स्यादुभयोर्देवता हरिः ॥ इति ।

एतदुक्तिवशादेव,

एवमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् ।
पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयम् ॥ इति ।

स्मृत्यन्तरमालम्ब्य माधवाचार्य्यैरुपवासद्वयासामर्थ्यं यो द्वादश्यामेवोपवासो लिखितः, सोऽयमस्मद्देशस्मार्त्तैर्नाद्रियते ।

द्वादश्यां काम्योपवासो मार्कण्डेयेनोक्तः,—

द्वादश्यामुपवासेन सिद्धार्थो भूप सर्वशः ।
चक्रवर्त्तित्वमतुलं सम्प्राप्नोत्यतुलां श्रियम् ॥

चम्पकद्वादशी ।

भविष्ये,— ज्यैष्ठे मासि सिते पक्षे द्वादश्यां चम्पकैः शुभैः ।
शुद्धैरभ्यर्च्य गोविन्दं नरः किमनुशोचति ॥
तिथिद्वैधे पूर्वविद्धा ग्राह्या ।

वामनजन्म ।

नभस्ये शुक्लपक्षे तु द्वादश्यां श्रवणेऽहनि ।
बलेस्तु बन्धनं कर्त्तुं मध्याह्ने वामनस्त्वभूत् ॥
जयन्ती वामनाख्या सा सैवोपोष्या नरोत्तमैः ।
सर्वपापप्रशमनी सर्वकामप्रदायिनी ॥

एकादश्यां भवेद्योगो द्वादश्याः श्रवणस्य च ।
पूर्वाह्णे वाथ मध्याह्ने सा तिथिर्महती स्मृता ॥

श्रवणद्वादशी ।

विष्णुधर्मोत्तरे,—

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
सङ्गमे सरितां पुण्ये स्नातस्तामुपोषितः ।
अयत्नादेव चाप्नोति द्वादशद्वादशीफलम् ॥
बुधश्रवणसंयुक्ता सैव च द्वादशी भवेत् ।
अत्यन्तमहती यस्यां सर्वं कृतमथाक्षयम् ॥
स्वर्गं समासाद्य चिरञ्च भोगान्
भुक्त्वा महेन्द्रोपमदेवतुल्यः ।
मानुष्यमासाद्य भवत्यरोगो
धनान्वितो धर्मपरो मनस्वी ॥
श्रवणर्क्षसमायुक्ता द्वादशी यदि लभ्यते ।
उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

"एकादशीम्" इत्यादि "देवताद्धरिः" इति पूर्वमुक्तम् ।

भविष्योत्तरेऽपि,—

निषिद्धमपि कर्त्तव्यं त्रयोदश्याञ्च पारणम् ।
द्वादश्याञ्च निराहारो वामनं पूजयाम्यहम् ॥ इत्यादि ।

वह्निपुराणे,— यथोक्तं नियमं कुर्य्यादेकादश्यामुपोषितः ।
दन्तकाष्ठं प्रगृह्यादौ वाग्यतो नियतेन्द्रियः ॥

श्रवणद्वादशीयोगे समुपोष्य जनार्दनम् ।
अर्च्चयित्वा विधानेन अन्नं भवेत्परेऽहनि ॥
मात्स्ये,— रात्रौ च श्रवणेनैव यदा चैककलां स्पृशेत् ।
सा तिथिः सर्वपुण्या स्यात्तत्ततस्याक्षयं भवेत् ॥
तथा,— दानं दत्वा द्विजातिभ्यो वियोगे पारणं ततः ।
वियोगे श्रवणद्वादशीव्यपगमे, इदं शक्तविषयम् ।
अत्र हरिभक्तिविलासकारिका वैष्णवानाम्,—
द्वादश्यां तु भवेद्योगः श्रवणस्य दिवैव हि ।
अत्रोपवासः कर्त्तव्यो वैष्णवैः सर्वदापि च ॥
उदयव्यापिनीं कुर्यात् श्रवणद्वादशीं सदा ।
आचार्य्याः केचिदिच्छन्ति केचिन्नेच्छन्ति चापरे ॥
मुहूर्त्तचितयं वापि सङ्गवान्त्यमथापि वा । इति ।
विष्णुधर्मे,— नभस्यशुक्लद्वादश्यां नक्षत्रं श्रवणं यदि ।
तस्यां तीर्थेषु यत्स्नानं तदनन्तफलं लभेत् ॥
देवपूजादिसहस्रगुणितमित्युक्तम् । इयं श्रवणद्वादशी फाल्गुन-
चैत्रान्यतरकृष्णपक्षेऽपि भवति । तथा च नारदीये,—
शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तयोरेवोपवासश्च त्रयोदश्यां तु पारणम् ॥

अथ विष्णुशृङ्खला ।

मात्स्ये,— द्वादशी श्रवणर्क्षञ्च स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥
तस्मिन्नुपोष्य विधिवन्नरः प्रक्षीणकल्मषः ।

यज्ञमूर्त्तिः स विज्ञेयो देवो नारायणः स्वयम् ।
पूजाविधिः कल्पतरौ द्रष्टव्यः । इति वराहद्वादशी ॥

अथ त्रयोदशी ।

अत्रापराह्णवेधः,—

त्रयोदशी प्रकर्त्तव्या या भवेदापराह्णिकी ।

इति स्कान्दोक्तेः ।

षष्ठ्यष्टम्यप्यमावास्या कृष्णा चैव त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥

पराः सप्तम्यादयः इति निगमोक्तेः । कृष्णा परविद्धा ग्राह्या, अत्र कृष्णोपादानात् शुक्ला पूर्वविद्धा ग्राह्या ।

त्रयोदशी प्रकर्त्तव्या द्वादशीसहिता विभो ।

इति ब्रह्मवैवर्त्ते, सामान्योक्तेश्च ।

यदा तु कृष्णपक्षे परविद्धा न लभ्यते, तदा पूर्वविद्धापि ग्राह्या ।

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धा तु कर्त्तव्या यदि न स्यात्परेऽहनि ॥

इति वशिष्ठोक्तेः ।

इति त्रयोदश्याः साधारणनियमाः ॥

कामदेवत्रयोदशी ।

भविष्ये,— चैत्रशुक्लत्रयोदश्यां मदनं दमनात्मकम् । इत्यादि ।
दमनो, दमनवृक्षः ।

एवं यः कुरुते पूजामनङ्गस्य महात्मनः ।
भवन्ति नापदस्तस्य तस्मिन्नब्दे कदाचन ॥

धवलसंग्रहे,— मदनस्य चयोदश्यां मदनं चन्दनात्मकम् ।
कृत्वा संपूज्य यत्नेन वीजयेद्व्यजनेन तु ॥
ततः संधुक्षितः कामः पुत्रपौत्रसमृद्धिदः ॥

संधुक्षितः प्राणितः ।

शतानन्दसंग्रहे,— कामदेवः चयोदश्यां पूजनीयो यथाविधि ।
रतिप्रीतिसमायुक्तोऽप्यशोकमणिभूषितः ॥
ततः प्रातः समुत्थाय स्नात्वा कलसवारिणा ।
परं सौभाग्यमाप्नोति कामांश्चाप्नोति पुष्कलान् ॥

तिथिद्वैधे द्वयं पूर्वविद्धैव, शुक्लचयोदशीत्वात् ।
कृष्णाष्टमी बृहत्तुल्या सावित्रीवटपैतृकी ॥
अनङ्गचयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥

इति संवर्त्तोक्तेश्च । वटशब्देन व्रतं, पैतृकी तिथिः अमावास्या।
तथा च सावित्रीव्रतामावास्या इति कालादर्शे ।
अपरानङ्गचयोदशी, भविष्ये,—"मार्गशीर्षेऽमले पक्षे" इत्युपक्रम्य
अनङ्गेन कृता ह्येषा तेनानङ्गचयोदशी ।

अत्रापि पूर्ववद्व्यवस्था ।

इति अनङ्गचयोदशी ।

## अथ चतुर्दशी ।

तत्र शुक्लोत्तरविद्धा ग्राह्या,
शुक्ला चतुर्दशी ग्राह्या परविद्धा सदाव्रते ।
इति व्यासोक्तेः ।
शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।

प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥

पारणे लग्नकविषये विष्णुधर्मोत्तरे,—

द्वादशीमुपवासस्तु द्वादश्यामेव पारणम् ।

निषिद्धमपि कर्त्तव्यमाज्ञेयं पारमेश्वरी ॥

शक्रोत्थापनम् ।

तत्र नक्षत्रपक्ष एकः, तिथिपक्षस्त्वपरः, नक्षत्रपक्षे श्रवणाया मारभ्य द्विजानक्षत्रविसर्गः, तथाचाष्टदिनसाध्यो नक्षत्रपक्षः, तथाच हरिवंशे,—

सप्तरात्रे व्यतीते तु भरण्यां विगतोत्सवे ।

जगाम संवृतो मेघैर्वृत्रहा स्वर्गमुत्तमम् ॥

भविष्योत्तरे तु द्विजायां विसर्जने यो दोष उक्तः स द्विजा-नक्षत्रानुरोधेन नवमदिननिषेधार्थः ।

तदारम्भे, ब्रह्माण्डे,—

भाद्रे मासि सिते पक्षे श्रवणद्वादशी यदि ।

शक्रमुत्थापयेत्तत्र श्रवणे तद्वियोगतः ॥

नक्षत्रपक्षोऽयं नाद्रियते। तिथिकल्पः पञ्चदिनात्मकः सर्वादृतः।

तथा च विष्णुधर्मोत्तरे,—

द्वादश्यां च शिरःस्नातो नृपतिः प्रयतस्ततः ।

मन्त्रेणोत्थापनं कुर्याच्छक्रकेतोः समाहितः ॥

तथाच,— पञ्चमे दिवसे प्राप्ते शक्रकेतुं विसर्जयेत् ।

भविष्योत्तरे,—एवं यः कुरुते यात्रां शक्रकेतोर्युधिष्ठिर ।

पर्जन्यः कामवर्षी स्यात्तस्मिन् देशे न संशयः ॥

हरिवंशे शक्रकेशवसंवादे,—

नरास्त्वाश्चैव मांश्चैव ध्वजाकारासु यष्टिषु।
महेन्द्रं वायुपेन्द्रञ्च पूजयन्तु महीतले ॥
ये त्वावयोः स्थिरे हृत्ते महेन्द्रोपेन्द्रसंज्ञिते।
मानवाः प्रणमिष्यन्ति तेषां नास्त्यनयागमः ॥

भीमद्वादशी।

विष्णुधर्मोत्तरे,—

मृगशीर्षे शशधरे माघे मासि प्रजापते।
एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः ॥
द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते।
तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलोदकी ॥
तिलदाता च भोक्ता च षट्तिली नावसीदति।
सकृत्तु षट्तिली भूत्वा सर्वपापैः प्रमुच्यते ॥
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते।

अत्रां तैलवर्ज्ज्यले दोषः, पाद्मे,—

उपोष्यैकादशीं माघे तैलाभ्यङ्गः कृतस्त्वया।
द्वादश्यां प्राग्भवे देव तेन व्याघ्रमुखो भवान् ॥
प्राग्भवे पूर्वजन्मनि।

इय वराहद्वादशी।

बृहन्नन्दिकेश्वरपुराणे,—

माघे तु शुक्लद्वादश्यां लग्ने कर्कटसंज्ञके।
आविरासीद्ब्रह्मनासाविवरात् क्रोडरूपधृक् ॥

पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥

इति निगमोक्तेः

कृष्णा तु पूर्वविद्धैव,

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।

पूर्वविद्धैव कर्त्तव्या परविद्धा न कस्यचित् ॥

इति आपस्तम्बोक्तेः

यत्तु स्कान्दे,— चतुर्दशी च कर्त्तव्या त्रयोदश्या युता विभो ।

मम भक्तैर्महाबाहो भवेद्या सापराह्निकी ॥

इति शिवचतुर्दशीविषयम्, मम भक्तैरिति ईश्वरोक्तलिङ्गात् माधवाचार्यास्तु "चैत्रश्रावणचतुर्दश्यौ शुक्लेऽपि रात्रियोगिन्यौ ग्राह्ये ।

मधुश्रवणमासस्य शुक्ला या तु चतुर्दशी ।

सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी ॥

इति बौधायनोक्तेरित्याहुः

परा, मासान्तरवर्त्तिनी शुक्लचतुर्दशी ।

इति चतुर्दश्याः साधारणनियमाः

दमनकचतुर्दशी ।

स्कान्दे,— मधुमासेऽपि संप्राप्ते शुक्लपक्षे चतुर्दशी ।

प्रोक्ता दमनभञ्जीति सिद्धिदा च महोत्सवा ॥

तथा,— पूजयिष्यन्ति ये मर्त्याः तदङ्गभवपल्लवैः ।

ते यान्ति परमं स्थानं दमनस्य प्रभावतः ॥

इयं शुक्लापि पूर्वविद्धा ग्राह्या,

सर्वा चतुर्दशी पूज्या युक्ता पूर्णेन्दुना सह ।
अपूज्या पूर्णिमायुक्ता मधौ शुक्ला चतुर्दशी ॥

इति वायवीयोक्तेः[१] ।

लैङ्गे,— अदत्वा दमनं चैत्रे ब्रह्माद्या पूजने भवेत् ।
तथा,— अदत्वा च सदोद्वेगो जायते निश्चितं मुने ।
दत्वा लक्षाश्वमेधस्य लभते वाञ्छितं फलम् ॥

इति दमनकचतुर्दशी ।

नरसिंहचतुर्दशी ।

शुक्लपक्षे चतुर्दश्यां मासि माधवसंज्ञके ।
प्रादुर्भूतो नृपञ्चास्यः तस्मात्तां समुपोषयेत् ॥
अनङ्गेन समायुक्ता न सोपोष्या चतुर्दशी ।
पूर्णायुक्तान्तु तां कुर्य्यान्नरसिंहस्य तुष्टये ॥
यः करोति नरो मोहात् कामविद्धां चतुर्दशीम् ।
धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेत् ॥
चतुर्दशी न वर्त्तेत सायङ्काले दिनद्वये ।
परैव वर्त्तते वापि कर्त्तव्या सा तदैव तु ॥
सूर्य्योत्परदिने चेत्सा सायङ्काले चतुर्दशी ।
कर्त्तव्या त्वन्यथा पूर्वा नरसिंहप्रिया तिथिः ॥

इत्यादिवाक्यात् परदिने सायङ्काले चतुर्दशीस्पर्शाभाव एव पूर्वविद्धा ग्राह्या अन्येषु पक्षेषु परविद्धैव ।

इति नृसिंहचतुर्दशी ।

---

(१) माधवीयोक्तेः ।

## अनन्तव्रतचतुर्द्दशी ।

भविष्योत्तरे,— ततः शुक्लचतुर्द्दश्यामनन्तं पूजयेद्धरिम् ।
तथा,— सर्वकामप्रदं नृणां स्त्रीणाञ्चैव युधिष्ठिर ।
शुक्लपक्षे चतुर्द्दश्यां मासि भाद्रपदे शुभे ॥
तस्यानुष्ठानमात्रेण सर्वपापं प्रणश्यति ।

तिथिद्वैधे पूर्वविद्धा ग्राह्या शुक्लचतुर्द्दशीत्वात् ।
अत्र सर्वत्र त्रिमुहूर्त्तव्याप्त्यैव व्यवस्था(१) ।

"पूर्वाह्णो वै देवानां" इति श्रुत्या दैवकृत्ये विहितस्य पूर्वाह्णस्य कर्मकालत्वेऽपि "दैवे त्वौदयिकी ग्राह्या" इति वाक्यात् सोदयत्रिमुहूर्त्तव्याप्तेरेवात्र प्राप्तत्वात् । "त्रिमुहूर्त्ताभावे समाचाराद् द्विमुहूर्त्तापि ग्राह्या" इति माधवीये यल्लिखितम्, तदस्मद्देशाचारविरोधात्त्राद्रियते ।

मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटे ।
शिला ददर्श सा स्त्रीणां समूहं रक्तवाससाम् ॥
चतुर्द्दश्यामर्चयन्तं भक्त्या देवं पृथक् पृथक् ।

इति लिङ्गान्मध्याह्नः कर्मकाल इति केचित्, तन्न । प्रमाणान्तरस्थले लिङ्गस्योपोद्बलकत्वं, नात्र प्रमाणान्तरमस्तीति लिङ्गस्य दौर्बल्यात् ।

तिथितत्त्वकारा अपि "दैवकृत्ये विहितस्य पूर्वाह्णस्य विध्यसम-

---

(१) अत्र सर्वतिथिवत्त्रिमुहूर्त्तव्याप्तैव व्यवस्था ।

भिथ्याष्टतार्थवादेन बाधायोगात्। किन्तु तस्यैव गौणकालत्वबोधकं तत्" इत्याहुः। तथा च सोदयत्रिमुहूर्त्तव्याप्तिरेव ग्राह्या।

इति अनन्तव्रतचतुर्द्दशी।

अघोरचतुर्द्दशी।

भविष्योत्तरे,— भाद्रे मासि सिते पक्षे अघोराख्या चतुर्द्दशी।
तामुपोष्य नरो याति शिवलोकमयत्नतः॥

तिथिद्वैधे पूर्ववत् परविद्धा ग्राह्या।

इति अघोरचतुर्द्दशी।

चित्राकृष्णचतुर्द्दशी अलभ्ययोगेषु लेख्या।

पाषाणचतुर्द्दशी।

देवीपुराणे,— वृश्चिके शुक्लपक्षे तु या पाषाणचतुर्द्दशी।
तस्यामाराधयेद्गौरीं नक्तं पाषाणभोजनैः॥
ऐश्वर्य्यसौख्यसौभाग्यरूपाणि प्राप्नुयान्नरः।

पाषाणाकारः पिष्टकः पाषाणशब्देनात्र उक्तः, कर्मकालोऽत्र नक्तम्। नक्तमिति विधिसमभिव्याहारात्। दिनद्वयेऽपि नक्ते चतुर्द्दशीसत्त्वे परेद्युर्व्रतम् शुक्लचतुर्द्दशीत्वात्। वृश्चिकपदेन मार्गशीर्षो माघः, अन्यथा शुक्लपक्षनियमो न स्यात्। इति।

रटन्त्याख्या चतुर्द्दशी।

यमः,— माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्द्दशी।
तस्यामुदयवेलायां स्नातो नावेक्षते यमम्॥

उदयवेला अरुणोदयकालः।

"एवं च सति यत् स्कान्दे केवलोपवासः, केवलजागरणम्, केवल-पूजनम्, चोक्तम्, तत् वैश्वानरविद्यान्यायेन अवयुत्यानुवादकत्वेन उपपद्यते" इति माधवाचार्याः। आचारादेकादशीवत् केवलोपवा-सोऽपि दृश्यते,

एकेनैवोपवासेन ब्रह्महत्यां व्यपोहति।

इति लैङ्गोक्तेः।

उपवासाशक्तौ तु स्मृतिः,—

अथवा शिवरात्रिं तु पूजाजागरणैर्नयेत्।

इत्ययं पक्षोऽनुकल्पत्वेन ग्राह्यः। नरमात्राधिकारिकमेव व्रतं द्वादशाब्दात्मकं चतुर्दशाब्दात्मकं वा काम्यं स्यात् इति ईशान-संहितायामुक्तम्,—

एवमेतत् व्रतं कुर्यात् प्रतिसंवत्सरं व्रती।
द्वादशाब्दिकमेतत्स्यात् चतुर्विंशाब्दिकं तथा॥
सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः।
शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम्॥
आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम्।

स्कान्दे,— ततो रात्रौ च कर्त्तव्यं शिवप्रीणनतत्परैः।
प्रहरे प्रहरे स्नानं पूजा चैव विशेषतः॥

शैवे,— कुर्य्यात् पञ्चामृतैः स्नाप्य यामे यामे समार्चनम्।
प्रहरे प्रहरे देवि दद्यादर्घमनुत्तमम्॥

इत्यादिविधिस्तु तत्रैव द्रष्टव्यः। स विधिः काम्ये त्ववश्यं कार्यः।

अथ कालः।

ईशानसंहितायाम्,—

माघकृष्णचतुर्दश्यां महादेवो महानिशि।
शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः।
अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्दशी॥
तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती।

इति बह्वन्यपराणि वाक्यान्युक्ता "महानिशान्विता यत्र तत्र
[illegible]दिदं व्रतम्" इत्युपसंहृतम्। एवं नारदीयसंहितादावपि
[illegible]थ उक्तः।

महानिशालक्षणमाह।

[illegible]:,— महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः। इति।
घटिकात्र दण्डः। इति निशीथः कर्मकालः।
[illegible]ोऽपि वायवीये,—

त्रयोदश्यस्तगे सूर्य्ये चतसृषु च नाड़िषु।
भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत्॥

[illegible]न्तरेऽपि,—प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत्॥

तथाच प्रदोषनिशीथयोरुभयोरपि प्राधान्यम्।
[illegible]ं सति तिथिद्वैधे पूर्वेद्युः प्रदोषनिशीथोभयव्याप्तौ पूर्वेद्युरेव व्रतम्।
[illegible]थ स्कान्दे,— त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी॥

तथा च वाराहे,—

अरुणोदयवेलायामारटन्त्यपि नित्यशः ।
नियुक्ता विष्णुना सर्वाः कस्य पापं पुनीमहे ॥
यां काञ्चित्सरितं प्राप्य कृष्णपक्षे चतुर्दशीम् ।
यमुनायां विशेषेण नियतस्तर्पयेत् पुमान् ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
दध्नोदराय दण्डाय प्रेताधिपतये नमः ।
पाशिने चित्रगुप्ताय रौद्रायौदुम्बराय च ॥
एकैकस्य तिलैर्मिश्रान् दद्याच्चींस्त्रीन् जलाञ्जलीन् ।
सम्वत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

अरुणोदयकाले दिनद्वयेऽपि चतुर्दश्या व्याप्तौ पूर्वदिनारुणोदय एव स्नानम्, कृष्णचतुर्दशीत्वात्, माघकृष्णसप्तम्युक्तन्यायाच्च ।

तत्र स्नानमन्त्रः ।

माघमासे रटन्त्यापः कृष्णपक्षे चतुर्दशीम् ।
ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥

इति रटन्तीचतुर्दशी ।

शिवरात्रिव्रतम् ।

तत् नित्यं काम्यं च, तथाचाकरणे प्रत्यवायः,

स्कान्दे,— परात्परतरं नास्ति शिवरात्रिः परात्परम् ।
न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् ॥
जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः ।

वीप्साधि स्कान्दे,—

वर्षे वर्षे महादेवी नरो नारी पतिव्रता।

शिवरात्रौ महादेवं भक्त्या कामं प्रपूजयेत्॥

नित्यनिश्चलशब्दावपि स्कान्दे,—

माघकृष्णचतुर्दश्यां यः शिवं संशितव्रतः।

मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलम्॥

अर्णवो यदि वा शुष्येत् चीयेत हिमवानपि।

मेरुमन्दरलङ्काश्च श्रीशैलो विन्ध्य एव च॥

चलन्त्येते कदाचिद्वै निश्चलं हि शिवव्रतम्॥ इति।

काम्यं च फलश्रवणात्। "ईप्सितं फलं" इति पूर्वं सामान्ये-

नोदाहृतम्।

पुनः स्कान्दे बहूनि फलान्युक्ता,—

सर्वान् भुक्त्वा महाभोगानन्ततलं प्रजायते। इति।

अत्रोपवासः पूजाजागरणं चेति त्रयं प्रधानम्।

तथाच स्कान्दे,—उपवासप्रभावेन तथाचैवात्र जागरात्।

शिवरात्रौ तथा शम्भो लिङ्गस्यापि प्रपूजनात्॥

अक्षयान् लभते कामान् शिवसायुज्यमाप्नुयात्।

तत् ब्रह्मखण्डे शैवे च,—

स्वयं च लिङ्गमभ्यर्च्य सोपवासः स जागरः।

अजानन्नपि निष्पापो निषादो गणतां गतः॥

व्याघ्रभीत्या बिल्वमारूढो निषादः तदधःस्थशिवलिङ्गोपरि

बिल्वपत्रपतनात् जागरादुपवासाच्च व्रतफलमवापेति तस्यार्थः।

दिनभुक्तिः अस्तमयसमयः। परेद्युरेवोभयव्याप्तौ परेद्युरेव। तथाच कामिके,—

निशाद्वये चतुर्द्दशी पूर्वा त्याज्या परा शुभा।

दिनद्वयेऽपि प्रदोषनिशीथोभयव्याप्तिरुभयोर्व्याप्त्यभावश्च न सम्भवति, यामद्वयस्य वृद्धिक्षययोरभावात्। पूर्वेद्युर्निशीथव्याप्तिः। परेद्युः प्रदोषव्याप्तिश्चेत् पूर्वेद्युः। "श्रावणी दुर्गनवमी" इत्याद्युक्तेः।

अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत्।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः॥

इति पुराणान्तरोक्तेश्च।

महतामपि पापानां दृष्टा वै निष्कृतिः पुरा।
न दृष्टा कुर्वतां पुंसां कुहूयुक्तां शिवां तिथिम्॥

इति स्कान्दशैवयोर्दर्शयोगनिषेधाच्च।

पूर्वेद्युः प्रदोषव्याप्तिर्नास्ति, निशीथव्याप्तिरपि नास्ति, परेद्युः प्रदोषमात्रव्याप्तिश्चेत्, परेद्युरेव।

जयाप्रयुक्तां न तु जातु कुर्यात्
शिवस्य रात्रिं प्रियकृच्छिवस्य।

इति वक्ष्यमाणपुराणान्तरोक्तेः[१]।

यदा पूर्वेद्युः प्रदोषव्याप्तिर्नास्ति, परेद्युः क्षयवशात् प्रदोषव्याप्तिरपि नास्ति, तदा पूर्वेद्युः उभयव्याप्त्यभावेऽपि निशीथव्याप्तेः सद्भावात् जयायोगाच्च।

---

(१) वक्ष्यमाणपराशरोक्तेः।

जयन्ती शिवरात्रिश्च कार्य्ये भद्राजयान्विते। इत्युक्तेश्च।

ननु,— त्रयोदश्यां यदा रात्रौ याममेकं चतुर्दशी।

उपोष्या सा महापुण्या शम्भुर्वचनमब्रवीत्॥

इति शैवोक्तेः,

भक्त्या रात्रौ प्रकर्त्तव्यो गीतवाद्यैः प्रजागरः।

अखिलायां त्रयोदश्यामन्ते स्याच्चेच्चतुर्द्दशी॥

इत्युक्तेश्च।

पूर्व्वोक्तवेधकालादन्योऽपि वेधकालोऽस्ति इति चेत्। नैवम्। अत्र चतुर्थयामे, अन्ते वा यदा त्रयोदश्यां चतुर्द्दशीयोगो ग्राह्यः, तदा किं वक्तव्यम्, अर्द्धरात्रे त्रयोदशीयोग इति, अन्ते वेध[१] उक्तो न तु भेदाभिप्रायेण। ननु तद्वाक्यानन्तरं "महतामपि पापाना" मित्यादिना दर्शयोगनिन्दोपलम्भेः तादृशस्थले एतद् ग्राह्यमिति चेत् न।

अर्द्धरात्रयुतां यस्तु माघकृष्णचतुर्द्दशीम्।

शिवरात्रिव्रतं कुर्य्यात्सोऽश्वमेधफलं लभेत्॥

सूर्य्येऽस्ते नवनाडीषु भूतविद्धा त्रयोदशी।

शिवरात्रिव्रतं तत्र कुर्य्याज्जागरणं तथा॥

भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा।

शिवरात्रिव्रतं कुर्य्यात्॥

इत्यादिबहुवाक्येषु अर्द्धरात्रस्य प्रदोषस्य वा कालत्वेन उक्तत्वात्। अर्द्धरात्रे प्रदोषे वा त्रयोदश्यभावेऽपि तद्ग्राह्यत्वे "जया-

(१) अन्तवेध।

प्रयुक्तां न तु जातु कुर्य्यात्" इत्यादिबहुवाक्यानामनवकाशत्वेन बलवत्त्वाच्चेत्यलमतिविस्तरेण ।

त्रिस्पृश्यां तु फलाधिक्यं, पुराणे,—

त्रयोदशी कलाप्येका मध्ये चैव चतुर्द्दशी ।
अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्च्चयेत् ॥

वारादियोगे तु स्कान्देशानसंहितयोः,—

माघकृष्णचतुर्द्दश्यां रविवारो यदा भवेत् ।
भौमो वाथ भवेद्देवि कर्त्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य योगो हि तद्भवेदुत्तमोत्तमम् ।

पारणे तु विशेषः ।

यदा पूर्व्वेद्युरुपवासः, तदा चतुर्द्दश्यामेव पारणं, तथाच स्कान्दे,—

उपोषणं चतुर्द्दश्यां चतुर्द्दश्यां च पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्यते वाथवा न वा ॥
ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथाप्यहम् ।
सिक्थे सिक्थे फलं तस्य शक्तो वक्तुं न पार्वति ॥
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।
संस्थितानि भवन्तीह भूतायां पारणे कृते ॥
तिथीनामेव सर्व्वासामुपवासव्रतादिषु ।
तिथ्यन्ते पारणं कुर्य्याद्विना शिवचतुर्द्दशीम् ॥

एतत्प्रकरण एव शिवपुराणे,—

तिथ्यन्ते पारणं कुर्य्याद् यामत्रयसमापने ।

अन्यथा पारणं प्रातरन्यतिथ्युपवासवत् ॥

इत्युक्का पुनः पश्चादुक्तं, "तिथीनामेवसर्वासां" इत्यादि पूर्ववदुक्तम्। तथाच यामत्रयमतिक्रम्य चतुर्द्दशीसत्त्वे पारणफलं न याम-त्रयमध्ये। तथाच एतयोर्विशेषवाक्ययोरुभयोरपि शावकाशलमेव।

एतेन एतयोः सामान्यविशेषभावं कल्पयित्वा तिथितत्त्वकारैर्यल्लिखितं तत् शैववाक्यानामकलनकृतमेवेति परास्तमेव। अशक्तस्य तु उत्सवान्तविधिना पूर्वाह्णे पारणे न फलं, न दोषोऽपि। श्राद्धाधिकारिणा तु नित्यस्य दर्शश्राद्धस्याकरणे प्रत्यवायात्, तत्कालाविरोधेन यामत्रयोर्द्ध्व चतुर्द्दशीतिथिलाभे तत्पारणं कार्य्यम्। अन्यथा दर्श एव, गुणफलकामनाया नित्याविरोधेन कार्य्यत्वात्। "इदं शिवरात्रिव्रतं वैष्णवैरपि अवश्यं कार्य्यं" इति हरिभक्तिविलासकाराः।

तथाच पाद्मे व्रतखण्डे,—

सौरो वा वैष्णवो वान्यो देवतान्तरपूजकः।
न पूजाफलमाप्नोति शिवरात्रिवहिर्मुखः॥

श्रीभगवदुक्तिः,—

नराः परतरं यान्ति नारायणपरायणाः।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम्॥

इत्यादि बहुवाक्यानि लिखित्वा हरिभक्तिविलासकारैर्व्याख्याय कारिका कृता,—

शुद्धोपोष्या च सा सर्वैं विद्धाप्यत्रैवचतुर्द्दशी।
प्रदोषव्यापिनी ग्राह्या तत्राप्याधिक्यमागता॥

प्रदोषश्च चतुर्नाड्यात्मको[१]ऽभिज्ञजनैर्मतः ।
प्रदोषव्यापिनी साम्येऽप्युपोष्यं प्रथमं दिनम् ॥
नोपोष्या वैष्णवैर्विद्धा साप्येति च सतां मतम् ।

यत् उक्तम्,— शिवरात्रिव्रतं भूतं कामविद्धं विवर्जयेत् ।

अतएवोक्तं पराशरेण,—

माघाश्रितं भूतदिनं हि राजन्
उपैति योगं यदि पञ्चदश्या ।
जयाप्रयुक्तां न तु जातु कुर्यात्
शिवस्य रात्रिं प्रियकृच्छिवस्य ॥

योगश्चोक्तोलोगाक्षिणा,—

द्विमुहूर्त्तो भवेद्योगो वेधो मौहूर्त्तिकः स्मृतः ।
शिवरात्रौ च कर्त्तव्यं नियमेन त्रयं बुधैः ॥
उपवासो महादेव पूजा जागरणं निशि ।

स्कान्दे,— कश्चित् पुण्यविशेषेण व्रतहीनोऽपि यः पुमान् ।
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥

पुनः शिवकृष्णभेदे बहुदोषानुक्त्वा संग्रहकारिकाप्युक्ता[२] ।
कार्य्यं गुणावतारत्वेनैक्याद्रुद्रस्य वैष्णवैः ।
वैष्णवाग्रतया श्रैष्ठ्यात् सदाचाराच्च तद्व्रतम् ॥

यत्तु,— चतुर्थस्कन्धदृष्यात्तु नैके वाञ्छन्ति तद्व्रतम् ।

इति कारिकां कृत्वा श्रीभागवतचतुर्थस्कन्धे भृगुशापे उदाहृतम् ।

---

(१) चतुर्नाड्यधिको । (२) संग्रहकारिका कृता ।

भवव्रतधरा ये च ये च तान् समनुव्रताः।
पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः॥

इति, स्वव्याख्यारस्यादेव "नैकेवाञ्छन्ति" इत्युक्तम्। वयं न वाञ्छाम इति नोक्तम्। तत्राखारस्यबीजं लिख्यते। भवव्रतं शिवरात्र्यादिकं इति चेदर्थः स्यात्, तदा भवव्रतकरा इत्येवोक्तं स्यात्, न तु भवव्रतधरा इति। प्रकृतार्थस्तु भवस्य व्रतानि श्मशान-वासास्थिमालासर्पधारणादिनियमान् ये दधते, तांश्च येऽनुगताः ते पाषण्डिनोभवन्तु इति।

अतएव "सच्छास्त्रपरिपन्थिनः" इति विशेषणम्। शिव-रात्रिकरणे सच्छास्त्रपरिपालनमेव, न सर्वथा परिपन्थित्वम्। अन्यथा शिवरात्रिव्रताकरणे दोषप्रतिपादकानां वैष्णवग्रन्थोक्तानां बहुवाक्यानामनवकाश एव स्यात्, इति दिक्। केवलम्,

द्रव्यमन्नं फलं तोयं शिवस्वं न पिबेत् क्वचित्।
निर्माल्यं नैव लङ्घेत कूपे सर्वं विनिक्षिपेत्॥

इति पाद्मोक्तेः, तथा कार्य्यम्।

इति शिवरात्रिनिरूपणम्।

अथ चैत्रकृष्णचतुर्द्दशी।

शतानन्दसंग्रहे,—

चैत्रकृष्णचतुर्द्दश्यां यः स्नायाच्छिवसन्निधौ।
गङ्गायां च विशेषेण न स प्रेतोऽभिजायते॥

मदनचतुर्द्दशी तु अस्मद्देशीयप्राचीनाचार्य्यैरश्लीलकथनस्याति-निषिद्धत्वात् तद्व्रते तस्यैव प्राधान्यान्नलिखितम्।

मदनपर्वाकरणदोषवाक्यस्य मदनत्रयोदशीकरणेनैव चारितार्थमिति, तथाच तत्समाचारो गौड़ानामेव । इति ।

सुही चतुर्दशी ।

राजमार्त्तण्डे,—

धवलितकलसन्यस्तरक्तपताका सुही भवने ।
चैत्राग्नितभूतदिने पापरुजं दूरतोऽभिधत्ते[१] ॥

चैत्रकृष्णचतुर्दश्यां पिष्टादिभिः शुक्लीकृतघटे रक्तपताकायुक्तां सुहीशाखां गृहोपरि स्थापयेत् ।

इति चतुर्दशीप्रकरणम् ।

अथ पञ्चदशी ।

सा च द्विविधा, पौर्णमासी अमावास्या चेति । तत्र "चैत्रशुक्लादिका मासा" इत्युक्तेस्तत्रादौ पौर्णमासी निर्णीयते, सा च उपवासे पूर्वविद्धा ग्राह्या, "चतुर्दश्या च पूर्णिमा" इति युग्मोक्तेः । व्रते तु परविद्धा ग्राह्या ।

तथा च ब्रह्मवैवर्त्ते,—

भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा ।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥

एवं च सति,—

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

---

(१) दूरतोधत्ते ॥

इति बृहस्पत्युक्तिं व्रतपरैवेति ज्ञेयम्।

अस्मद्देशीयबङ्गनिबन्धकारैर्लिखितोऽयं प्रकारः।

यमः,— पक्षान्ते स्रोतसि स्नायात्तेन नायाति मत्पुरम्। इति।

स्कान्दे, - पौर्णमासीषु चैत्रासु मासर्चसहितासु च।

एतासां स्नानदानाभ्यां फलं दशगुणं स्मृतम्॥

वैशाखीं प्रकृत्य यमः,—

गौरान् वा यदि वा कृष्णान् तिलान् चौद्रेण संयुतान्।

प्रीयतां धर्मराजेति पितृदेवांश्च तर्पयेत्॥

यावज्जन्मकृतं पापं तत्क्षणादेव नश्यति।

अब्दायुतं च सन्तिष्ठेत् स्वर्गलोके न संशयः॥

देवस्नानं तु यात्राप्रकरणे लेख्यम्। आषाढ्यादिषु दानाकरणे दोषः। तथा च रामायणे,—

आषाढी कार्त्तिकी माघी तिथयः पुण्यसम्भवाः।

अप्रदानवतो यान्तु यस्यार्योऽनुमते गतः॥

तासु दानादौ फलं महाभारते,—

अकामावैषु यत् श्राद्धं यच्च दानं यथाविधि।

उपवासादिकं यच्च तदनन्तफलं स्मृतम्॥

आषाढीकार्त्तिकीमाघीवैशाखीषु च यत् कृतम्।

तदनन्तफलं प्रोक्तं स्नानदानजपादिकम्॥

श्रावणपौर्णमास्यां बलदेवपूजा।

ग्रन्थान्तरे वक्ष्यमाणसुखरात्रिप्रातर्गवादिपूजामुक्त्वा श्रावण्यां यो विकल्प उक्तः स पक्षोऽस्मद्देशे आद्रियते।

तथाच,—गावो महिष्यः छागाद्याः पूज्याः गोभ्यास्तदा दिने।
पूजनं केचिदिच्छन्ति श्रावण्यां तु गवादीनाम्॥
तथा,— श्रावणी पूर्णिमा यत्र मध्याह्नव्यापिनी यदि।
उत्थाने बलदेवस्य नन्दाविद्धां तु वर्जयेत्॥
खर्वा दर्पा तथा हिंस्रा नन्दायां पौर्णमीयुता।
उत्थापनं शीरपाणेः कारयेत् पूर्ववासरे॥
यामद्वयं चतुर्द्दश्यां पौर्णमास्यां द्वियामकम्।
पूर्व्वेऽहनि बलेः पूजा पशुवन्दापना तथा॥
नन्दायुक्तपौर्णमास्यां कृत उत्थापने बलेः।
तत्र रोगी भवेद्दिमो गावो नश्यन्त्यनेकधा॥
पौर्णमास्यां सनन्दायां यत्र चोत्थाप्यते बलः।
गवां तत्र भवेद्रोगो दुर्भिक्षञ्च तदा भवेत्॥
पाद्मे,— "श्रावणी दुर्गनवमी" इत्यादि।

अत्र मध्याह्नस्य कर्मकालत्वं स्फुटम्। तत्र द्वैधे सर्वेषु पक्षेषु पूर्वदिन एव। नन्दायोगस्य निषिद्धत्वात्, केवलं परदिन एव मध्याह्नव्याप्तौ परदिने कार्य्यम्। पूर्व्वेद्युः कर्मकाले तद्व्याप्त्यभावात्। तत्र पूजानुष्ठानं तु रौद्रत्वादपराह्ण इति केचित्। तन्न। सर्वदेवानां जन्मकाल एव पूजाविधानात्। किन्तु मध्याह्ने पूजाद्यसम्भवे रौद्रत्वादपराह्णे करणेऽपि न दोषः॥

उपाकर्मकालः।

याज्ञवल्क्यः,—अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा।
हस्तेनौषधभावे वा पञ्चम्यां श्रवणस्य वा॥

पौषमासस्य रोहिण्यामष्टकायामथापि वा।
जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्द्विजः॥

अध्यायानामिति बहुवचनं शाखाभिप्रायम्। तथाच वेद-वाक्यानामुपाकर्माख्यं संस्कारः। ओषधीनां प्रादुर्भावे भाद्रपदे मासि सिंहार्के इत्यर्थः। तदैव सर्वौषधीनां प्रादुर्भावात्। हस्तयोगे वा श्रावणस्य शुक्लपञ्चम्या हस्तयोगे वेत्यर्थः। स्मृत्यन्तरे,—

उपाकर्म च कर्त्तव्यं कर्कटस्थे दिवाकरे।
हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणा न चेत्॥

यदा श्रावण्यां श्रवणायोगाभावनिश्चयः, तदा तत्पूर्वतो हस्तशुक्लपञ्चम्यां एतदुभयाभावनिश्चये केवलं श्रावणपूर्णिमायां कुर्य्यादित्यर्थः।

शबरस्वामी,— अध्यायानामुपाकुर्यादिति श्रवणेन वेति सप्तार्थे तृतीयाविभक्तेर्गुणभूतत्वात् श्रवणाया योगेऽयोगेऽपि श्रावणपूर्णिमायामिति मुख्यः कल्प इति। देशोपद्रवाशङ्कायां हस्तपञ्चम्यामिति बहवः॥ स्मृतिमहार्णवे तु,—

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत्।
उपाकृतिस्तु पञ्चम्यां कार्य्या वाजसनेयिभिः॥

इति पक्षान्तरम्। उत्सर्गं तु पौषमासस्य रोहिणीयुक्तायां यस्यां कस्याञ्चित्तिथौ अष्टकायां वा कुर्य्यादित्यर्थः।

मनुः,— श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान्॥

अत्र व्यवस्थितो विकल्पः। छन्दोगव्यतिरिक्तानां श्रावण्यां,

छन्दोगानां भाद्रपूर्णिमायां "अथ प्रोष्ठपद्यां हस्ते वोपाकरणं, पुष्ये चोत्सर्गं" इति गोभिलोक्तेः। छन्दोगानां गोभिलोक्तेष्वधिकारात्।

यत्पारस्करसूत्रे "अर्द्धपञ्चमानर्द्धषष्ठमान् वा"(१) इति पक्षद्वय-मुत्सर्गे उक्तम्। तत्प्रथमाध्ययनानन्तरं बोध्यं इति निबन्धकृतः।

तत्र कर्मकालः।

बृहत्प्रचेताः,— भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव च।

बह्वृचपरिशिष्टे,—

पर्वण्यौदयिके कुर्य्युः श्रावण्यां तैत्तिरीयकाः।

बह्वृचाः श्रवणे कुर्य्युर्ग्रहसंक्रान्तिवर्जिते॥ इति।

तैत्तिरीयकपदमुपलक्षणम्। शाखान्तराधिकरणन्यायेन छन्दो-गव्यतिरिक्ताः सर्वे पूर्वाह्णे कुर्युः। छन्दोगास्तु अपराह्णे।

अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके।

पूर्वाह्णके विसर्गः स्यादिति छन्दोगगोचरम्॥

इति गोभिलोक्तेः।

तत्र तिथिद्वैधे कालादर्शकारिका,—

उपाकर्मणि चोत्सर्गे पौर्णमास्यां परा तिथिः।

षण्मुहूर्त्तकविद्धा स्यादिति वेधो निरूपितः॥

परा तिथिः प्रतिपत्।

षण्मुहूर्त्तकविद्धा द्वादशदण्डविद्धा। उपाकर्मणि, उत्सर्गे, समाप्तौ

---

(१) सप्तमासान् वा।

च प्रस्ता स्यादित्यर्थः। "श्रावणी दुर्गनवमी"त्युक्तेरेतद्व्यतिरिक्तपरत्वं, अत्र विशेषविधानात्। केचित्तु दिनदये तथात्वे श्रवणायोगाद्विशेषः। श्रवणायोगाभावे क्षये पूर्वा, वृद्धौ तूत्तरा ग्राह्या। दिनदये कर्मकालव्याप्त्यभावे परत्र करणमिति॥

किञ्च मासवृद्धौ प्रजापतिः,—

उपाकर्म च हव्यञ्च कव्यं दुर्गोत्सवं तथा।
उत्तरे नियतं कुर्यात् पूर्वे तन्निष्फलं भवेत्॥

वैशाखादिवृद्धौ तु,—

माधवादित्रिके मासि अधिमासो यदा भवेत्।
कर्कटे तु हरेः स्वापः पौर्णमास्यामुपाकृतिः॥

श्रावणादिवृद्धौ तु,—

श्रावणादित्रिके मासि अधिमासो भवेद्यदि।
सिंहेऽर्के च हरेः स्वापः श्रावण्यां स्यादुपाकृतिः॥

एवञ्च छन्दोगव्यतिरिक्तानाम्। छन्दोगानां तु मलमास एव।

तथाच शतानन्दसंग्रहे,—

उपाकर्म तथोत्सर्गप्रसवाहोऽष्टकादयः।
मलीम्लुचेऽपि कर्त्तव्याः शेषमन्यद्विवर्जयेत्॥ इति।
पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः।
बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः॥ इति।

नक्षत्रपक्षे,— श्रवणं तूत्तरं ग्राह्यमुपाकरणकर्मणि।

इति माधवाचार्य्योक्तत्रिमुहूर्त्तवेधेन व्यवस्था।

व्यासः,— श्रवणेन तु यत्कर्म उत्तराषाढ़संयुतम्।
संवत्सरशतं पापं तत्क्षणादेव नश्यति॥
धनिष्ठासहितं कुर्य्यात् श्रवणं कर्म यद्भवेत्।
तत्कर्म सफलं कुर्य्यादुपाकरणसंयुतम्॥ इति।

"एतदुपाकर्म गुरोः मासिकल्प एव, होमस्य श्रावसथ्यसाध्यत्वात्" इति केचित्। तन्न। एतदेव व्रतादेशेन विसर्गेष्विति व्रतादेशशब्दोक्तैर्वेदारम्भे विसर्गशब्दोक्तेः समावर्त्तने उपाकर्महोमस्यातिदेशात्। तस्य लौकिकाग्निसाध्यत्वेन अधिकारसम्पादकत्वस्य सिद्धत्वात् लौकिकाग्निसाध्यत्वात्।

"यस्तु अनध्ययनभयात् पौषमासे उत्सर्गं न करोति, स कालातिक्रमप्रायश्चित्तं महाव्याहृतिभिर्हुत्वा श्रावण्यामुत्सर्गपूर्वकमुपाकरोति" इति शतानन्दसंग्रहे। साधीयानयमेव पक्षः सर्व्वैः समाचर्य्यते।

इत्युपाकर्मोत्सर्गयोः कालः।

अस्यां पौर्णमास्यां रक्षिकाबन्धनम्।

भविष्ये,—सम्प्राप्तेऽम्बरे पार्थ शाद्वले धरणीतले।
संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये॥
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः।
ततो देवान् पितृंश्चैव तर्पयेत् परमाम्भसा॥
उपाकर्मदिने चोक्तस्तपीणाश्चैव तर्पणम्।
कुर्वीत ब्राह्मणैः सार्द्धं देवानुद्दिश्य भक्तितः॥
शूद्राणां मन्त्ररहितं स्नानं दानं प्रशस्यते।

ततोऽपराह्णसमये रक्षापट्टोलिकां[१] शुभाम् ॥
कारयेद्रचितैः शस्तैः सिद्धार्थैर्हेमभूषिताम्।
वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्जिताम् ॥
विचित्रतन्तुग्रथितां स्थापयेद्भाजनोपरि।
कार्य्या गृहस्य रक्षा गोमयाराधितसुवृत्तमण्डलैः।
दुर्वावर्णकसहितैर्भित्तौ दुरितोपशमनाय ॥
उपलिप्ते गृहमध्ये दत्तचतुष्के न्यसेत् शुभं पीठम्।
तत्रोपविशेद्राजा सामात्यः सपुरोहितः ॥
समुद्दद्वेश्याजनेन सहितो मङ्गलशब्दैः समुत्थितैश्चित्रैः।
देवद्विजातींस्तु वस्त्रे रक्षाभिरर्चयेत् प्रथमम्।
तदनु पुरोधा नृपतेः रक्षां वध्नीत मन्त्रेण ॥
येन बद्धो बलीराजा दानवेन्द्रो महासुरः।
तेन त्वामपि वध्नामि रक्षामाचर माचल ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः।
कर्त्तव्या रक्षिका वाचो द्विजान् संपूज्य भक्तितः ॥
अनेन विधिना यस्तु रक्षिकावन्धमाचरेत्।
स सर्वदोषरहितः सुखी संवत्सरं वसेत् ॥

यः श्रावणे स्रवति शीतजले नरेन्द्र
रक्षाविधानमिदमाचरते मनुष्यः।
आस्ते सुखेन परमेण स वर्षमेकं
पुत्रप्रियादिसहितः ससुहृज्जनश्च ॥

---

(१) रक्षापट्टलिका।

अत्रापराह्णः कर्मकालः। तिथिद्वैधे परदिने, सामान्यविधौ[1] तत्प्रकरणात्। एतद्विधिस्तु अस्माभिःपितामहकृते नीतिरत्नाकरे द्रष्टव्यः इति ॥

इन्द्रपौर्णमासी।

शतानन्दसंग्रहे,— पञ्चदश्यां महेन्द्रस्य पूजयेत् केलिकौतुकैः।
गीतवादित्रमातङ्गैर्भूतये भूपतिर्निशि ॥

पञ्चदश्यां भाद्रपौर्णमास्यां, तत्प्रकरणात् इति।

कौमुदीपौर्णमासी।

लैङ्गे,— आश्विने पौर्णमास्यान्तु कुर्य्याज्जागरणं निशि।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीं इन्द्रमैरावते स्थितम्।
सुगन्धैर्निशि सद्वेशमक्षैर्जागरणञ्चरेत् ॥
निशीथे वरदा लक्ष्मीः को जागर्त्तीति भाषिणी।
तस्मै वरं प्रदास्यामि अक्षैः क्रीड़ां करोति यः ॥
नारिकेलैश्चिपिटकैः पितॄन् देवान् समर्च्चयेत्।
बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनो भवेत् ॥
नारिकेलरसं पीत्वा अक्षैर्जागरणं निशि।
तस्मै वृद्धिं प्रयच्छामि यो जागर्त्ति महीतले ॥

विष्णुः,— को जागर्त्ति वचोऽभिधाय पुरुषं लक्ष्मीस्त्यजेत् सुप्तकम्।
शुक्लां पञ्चदशीं निशि स्वयमिषे लोकस्ततो जागयात् ॥
इषे आश्विने मासि।

---

(१) सामान्यविधेः एतद्विधिस्तु।

भविष्योत्तरे पूजाविधिमुक्का,—

एवं कृत्वा विधानेन द्यूतक्रीड़ां समाचरेत्।
अक्षैश्च चतुरङ्गैश्च मुष्टिस्थौल्यादिभिस्तथा॥
क्रीड़येच्च यथान्यायं युधिष्ठिर परस्परम्।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैवान्यवर्णकैः॥

तथा,— ताम्बूलैर्नारिकेलैश्च वस्त्रैश्चैव कपर्द्दिकैः।
परस्परञ्च दातव्यं पूज्यदेवं समर्च्चयेत्॥
एवं यः कुरुते भक्त्या तस्य देवी प्रिया भवेत्।
ददात्यभिमतान् कामान् ऐहिकामुष्मिकान् सदा॥

अत्र "निशि" इति "निशीथ" इति चाभिधानात् रात्रौ पूजादिकं कार्य्यम्। तत्र तिथिद्वैधे यद्दिने प्रदोषनिशीथोभयव्याप्तिः तद्दिने कार्य्यम्, निशानिशीथोभयव्याप्तेः।

यदा पूर्व्वेद्युर्निशीथव्याप्तिः, परेद्युरस्तमयादुपरि व्याप्तिः चेत् तदा परेद्युः, प्रातरारभ्य रात्रिसम्बन्धात् प्रधानपूजाकालानुरोधाच्च।

यदा पूर्व्वेद्युर्निशीथव्याप्तिः, परेद्युर्न निशायोगः तदा सुतरां पूर्व्वेद्युः।

अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा।
नक्तादिव्रतयोगेषु रात्रियोगो विशिष्यते॥

इति जावाल्युक्तेः।

अस्याः कुमारपौर्णमासीति सञ्ज्ञान्तरं, तत्र कुमारोत्पत्तेः।

तथाच शिवपुराणे,— अश्वयुक्पौर्णमास्यान्तु विभेद दिवि सत्वरः।

इत्याद्युक्का,

अद्यापि दृश्यते लोके कुमारोत्सवपूर्णिमा।

इति कुमारपौर्णमी।

पुष्यवन्दापना।

ब्राह्मे,— इदं जगत् पुरा सृष्ट्या व्यक्रमामीत्ततो हरिः।
पुरन्दरस्य सोमस्य तथा शुक्रो बृहस्पतिः॥
पश्चैते पुष्ययोगेन पौर्णमास्यां तपोबलात्।
अलङ्कृतं पुनश्चक्रुः सौभाग्योत्साहलक्ष्मीभिः॥
तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये।
तथा,— धनैर्विप्रांश्च सन्तर्प्य नवैर्वस्त्रैश्च शोभितान्।
ततः पुष्टिकरं चैव भोक्तव्यं घृतपायसम्॥
पुष्ययोगे च कर्त्तव्यं राज्ञा स्नानञ्च सर्वदा।

"पुष्ययोगेन" इतिवचनात् तिथिमनादृत्य नक्षत्रे पूजावन्दापनादिकं बहवः कुर्वन्ति। राजानः सर्व एव। केचित्तु खण्डेऽपि तथा कुर्वन्ति, तत्र कुलाचारः प्रमाणम्। तत्र तिथिपक्षवत् नक्षत्रपक्षेऽपि। नक्षत्रद्वैधे,—

उदये त्रिमुहूर्त्तस्थं नक्षत्रं व्रतदानयोः।
दिनद्वये तथात्वे तु पूर्वं स्यादसत्त्वत्तरम्।

इति माधवीयकारिकया व्यवस्था॥

वस्त्रोत्सवपौर्णमासी।

लैङ्गे,— वस्त्रोत्सवः सिते पक्षे माघे मास्यार्द्रभे निशि।
द्वादश्यां पञ्चदश्यां वा भवेदङ्गिमहोत्सवः॥ इति।

दोलयात्रा।

ब्राह्मे,— नरो दोलागतं दृष्ट्वा गोविन्दं त्रिदशार्च्चितम्।

फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्॥

शतानन्दसंग्रहे,—

फाल्गुने पौर्णमास्यान्तु कार्य्यः फल्गुमहोत्सवः।

गोविन्दो दोलयाक्रीड़स्तत्रार्य्यम्णि गते विधौ॥

अर्य्यम्णि उत्तराफाल्गुनीनक्षत्रे।

तत्र कालः स्फुटो ब्रह्माण्डे, श्रीपुरुषोत्तमवर्णने,—

अप्रभाते निशानाथे अप्रकाशे दिनेश्वरे।

ततः प्रभोः प्रकर्त्तव्या दोला परमसम्मता॥

इति दोलोत्सवः।

अथ अमावास्या विचार्य्यते।

तदर्थो, ब्राह्मे,—

अमा वसेतामृक्षे तु यदा चन्द्रदिवाकरौ।

एकां पञ्चदशीं रात्रिममावास्या ततः स्मृता॥

अत्र अमाशब्दः सहार्थे। देवीपुराणे तु,—

अमा नाम रवेरश्मिः सूर्य्यलोके प्रतिष्ठिता।

यस्मात् सोमो वसत्यस्याममावास्या ततः स्मृता॥ इति,

सा च प्रतिपद्युता ग्राह्या,

प्रतिपद्यमावास्या तिथ्योर्युग्मं महाफलम्।

इति युग्मोक्तेः।

पक्षाष्टम्यमावास्या उभे पक्षे चतुर्द्दशी।

अस्नातानां गतिं यास्ये यदहं नागमे पुनः ॥

इति वाराहोक्तेश्च स्नानमावश्यकम् ।

अतएव,— दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः ।

कुर्वंस्तत्र निराचष्टे पितृहन्निति जीवितः ॥

इति कल्पतरौ लिखितो जीवत्पितृकस्य स्नाननिषेधो रागप्राप्तविषयः । वैधे तु तस्याप्यनिषेधात् ।

भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरैः ।

तन्निषिद्धं दशम्यादौ नित्यं नैमित्तिकं न तु ॥

इत्युक्तेः ।

दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः ।

नवम्याञ्च न चेत्तत्र निमित्तान्तरसम्भवः ॥

इति स्फुटमुक्तत्वाच्च । प्रत्युत फलमाह पैठीनसिः,—

पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।

अमायान्तु नदीस्नानं पुनात्यासप्तमं कुलम् ॥

इति साधारणनियमः ॥

सावित्रीव्रतम् ।

शतानन्दसंग्रहे,—

ज्येष्ठकृष्णत्रयोदश्यां त्रिरात्रं व्रतमाचरेत् ।

सावित्रीं पूजयेद्देवीं उत्सङ्गस्थमृतप्रभुम् ॥

त्रिरात्रोपोषणं तत्र स्त्रीणां नान्यत्र शस्यते ।

कार्यं पत्युरनुज्ञाते वैधव्यं न भवेत् क्वचित् ॥

तिथिद्वैधे सावित्रीव्रतं पूर्वेद्युः कार्य्यम् ।

भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत्।
वर्जयित्वा तु सावित्रीव्रतन्तु शिखिवाहन॥

इति स्कान्दोक्तेः। "भूतविद्धा न कर्त्तव्या" इति ब्रह्मवैवर्त्तोक्तेश्च।

यदा तु पूर्वेद्युः चतुर्द्दशी अष्टादशदण्डात्मिका भवति। तदा पूर्वविद्धामपि परित्यज्य परविद्धैव आश्रयणीया।

भूतोऽष्टादशनाड़ीभिर्दूषयत्युत्तरां तिथिम्।

इति स्कान्दोक्तेः। इति सावित्रीव्रतम्॥

अथ सप्तपिटकामावास्या।

भाद्रामावास्या सप्तपिटकामावास्या इत्युच्यते। तदाक्यं श्राद्धं च श्राद्धप्रकरणे लेख्यम्। तां प्रकृत्य पुराणान्तरे विशेषः।

दर्शे सवर्णवटकैः पतिमाराधयन्ति याः।
ताः सर्वाः सुभगा नार्यः पुत्रवत्यो वराङ्गनाः॥
न वैधव्यं भवेत्तासां पुनर्जन्मसु सप्तसु।

. इति सप्तपिटकामावास्या।

कार्त्तिके प्रदीपामावास्या श्राद्धप्रकरणे लेख्या॥

सुखरात्रिः।

धवलसंग्रहे,—

कार्त्तिके मासि शुक्लादौ तिथौ च कुङ्कुमांशुकैः[1]
सुखाय सुखरात्रिः स्यात् कायराष्ट्रसुखाय वै॥

---

(१) कुसुमांशुकैः।

कायसुखेत्युक्तेः कायसुन्दरप्रतिपदित्यस्य नामान्तरं । शुक्लादावित्यमावास्यायाः प्रातरित्यर्थः ।

*अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।*

सुखरात्रेरुषः काले प्रदीपोज्ज्वलितालये ॥

इति स्मृतेः । तुलादित्ये कार्त्तिके । पुनर्द्वैतसंग्रहे,—

सुशुभैः कुसुमैर्गन्धैर्दधिगोरोचनाफलैः ।

बन्धून् बान्धवबन्धूंश्च पृच्छेत् कुशलया गिरा ॥

पूजयेच्च तथा लक्ष्मीमलक्ष्मीमलनाशिनीम् ।

लक्ष्मीं पद्मपताकाभिर्ध्वजमेकं गृहे न्यसेत् ॥

एतस्याश्चान्द्रमास एव समाचारात् । इति सुखरात्रिः ।

मार्गशीर्षे दीपावल्यमावास्या ।

तुलास्थे दीपदानेन पूजा कार्य्या महाफला ।

*दीपदानाश्च कर्त्तव्या दीपचक्रमथापरम् ॥*

दीपयात्रा प्रकर्त्तव्या चतुर्द्दश्यां कुहूषु च ।

शिनीवालीषु अथवा बतस्र कार्य्ये महाफलम् ॥

एतेन चतुर्द्दश्यमावास्याप्रतिपदादित्रिषु दीपदानं प्रतिपादितम् । कृष्णपक्ष इत्यनुवृत्तौ भविष्योत्तरे,—

नरकाय प्रदातव्यो दीपः सम्पूज्य देवताम् ।

ततः प्रदोषसमये दीपान् दद्यान्मनोरमान् ॥

ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च ।

कूपागारेषु चैत्येषु सभासु च नदीषु च ॥

प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च ।

पूर्द्वारहर्म्यचासुण्डाभैरवायतनेषु च ॥
मन्दुरासु विविक्तासु हस्तिशालासु चैव हि ।

नरकाय नरकगमनपरिहाराय इत्यर्थः ।

अथ देवोत्थापनानन्तरामावास्यायाः यत् कार्त्तिककृत्यत्वमुक्तं तच्चैत्रशुक्लादिमासाभिप्रायेण इति ॥

वकुलामावास्या श्राद्धप्रकरणे लेख्या ॥

अथ श्रीपुरुषोत्तमक्षेत्रे द्वादशयात्राकालाः ।

तत्र संग्रहकारिका,—

मञ्चस्नानं रथवरगतिः शायनं चायने द्वे ।
पार्श्ववृत्तिः शयपरिहृतिः प्रावृतिः पुष्यपूजा ॥
दोलाकेलिर्दमनकमहोऽक्षय्यपुण्यतृतीया ।
यात्राः स्कान्दे हरिप्रतिमया द्वादशेति प्रणीताः ॥

स्कान्दे स्नानं श्रीगुण्डिचां चोक्ता प्रतिमावचनम्,—

मम स्नापं ममोत्थानं मत्पार्श्वपरिवर्त्तनम् ।
मार्गे प्रावरणं चैव पुष्ये स्नानमहोत्सवम् ॥
फाल्गुन्यां क्रीडनं कुर्यात् दोलायां मम भूमिप
अयने मां समभ्यर्च्य दृष्ट्वा मां प्रणिपत्य च ॥
प्रत्येकमष्टमासस्य समश्वमेधफलं लभेत् ।
चैत्रे मासि चतुर्दश्यां दमनैर्मम पूजनम् ।
शुक्लपक्षे तु यः पश्येत् सर्वपापक्षयं लभेत् ॥
वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिका ।
तत्र मां लेपयेद्गन्धचन्दनैरतिशोभनैः ॥

प्रीतये मम ये कुर्य्युरुत्सवान् मम शाश्वतान् ।
चतुर्वर्गप्रदा ह्येते प्रत्येकं तु प्रकीर्त्तिताः ॥

पुनस्तत्रैव,—

स्वल्पा वा महती यात्रा सर्वा मुक्तिप्रदायिका ।
तस्मिन् तस्मिन् दिने दृष्टो भगवान् मुक्तिदो ध्रुवम् ॥
विश्वासहेतोर्मूर्खाणां यात्रा ह्येताः कृपावता ।
विष्णुना कीर्त्तिता विप्राः पापिनां कल्मषापहाः ॥
आयासजनितं पुण्यं मन्यन्ते ते नराधमाः ।

तत्रादौ स्नानयात्रा ।

ब्राह्मे,— मासे ज्यैष्ठे तु संप्राप्ते नक्षत्रे चन्द्रदैवते ।
पौर्णमास्यां तदा स्नानं सर्वकालं हरेर्द्विजाः ॥

तथा,— तत्र समस्ततीर्थानि पूर्वोक्तानि द्विजोत्तमाः ।
सोदकैः पुष्पमिश्रैस्तु स्नापयन्ति पृथक् पृथक् ॥

तथा,— सूर्य्यस्य उदये स्नानं प्रशंसन्ति महर्षयः ।

उदये इति उदयाव्यवहितपूर्वकाले ।

तथा,— तस्मिन् काले तु ये मर्त्त्याः पुराणं पुरुषोत्तमम् ।
बलभद्रं सुभद्राञ्च ते यान्ति पदमव्ययम् ॥

एवं बहूनि फलान्युक्त्वा,

ब्रह्महत्यादिकं पापं प्रणश्यत्र न संशयः ।

पुरुषोत्तमपुराणे,—

जयस्व राम कृष्णेति सुभद्रेति सकृन्नरः ।
वदन्ति मार्ज्जने काले यान्ति ब्रह्मपदं मम ॥

ब्राह्मे,— दक्षिणामूर्त्तिदर्शनफलम्,—

स्नातं पश्यन्ति ये कृष्णं व्रजन्ति दक्षिणामुखम् ।
ब्रह्महत्यादिभिः पापैर्मुच्यन्ते ते न संशयः ॥

प्रासादमध्यप्रवेशानन्तरं वायवीये,—

ततः पञ्चदशाहानि मम स्नानादनन्तरम् ।
सुरूपां वा विरूपां वा न पश्येत्प्रतिमां मम ॥

इत्यादि ।

ज्येष्ठानक्षत्रं विनापीयं यात्रा फलदा । अन्यथा "सर्वकालम्" इत्यसङ्गतं स्यादत्र बहूनि फलानि विस्तरभयान्न लिखितानि । "दैवे त्वौदयिकी" इति नारदीयोक्ते र्दैवतोत्सवेषु उदयव्याप्तेरेव-व्यवस्थापकत्वात् । अत्र तिथिद्वैधे परदिने स्नानम् । केवलं दिनद्वयेऽप्युदयसम्बन्धे पूर्वदिन एव ।

षष्टिदण्डात्मिकायास्तु तिथेर्निष्क्रमणे परे ।
अकर्मण्यं तिथिमलं विद्यादेकादशीं विना ॥

इति ब्रह्माण्डोक्तेः ।

परदिनस्य कर्मानर्हत्वात् । षड्जयन्तीषु अपराजिताकुमारो-त्सवादिषु केषुचिदपि विशिष्य स्मार्त्तविधेरुक्तत्वात् । तद्व्यतिरिक्त-सर्वयात्रादिकार्य्येषु श्रीपुरुषोत्तमश्रीभुवनेश्वरचैत्रप्रासादयोरुदयवेध एव स्वीक्रियते । वक्ष्यमाणायनादिसंक्रान्तिषु यस्मिन्नहोरात्रमध्ये रविसंक्रमणं, तद्दिन एव यात्रा कार्या । देवयात्रायाः परदिने स्नानदानत्वाभावान्न परदिने प्राप्तिशङ्कापि कार्य्या इति बोध्यम् ।

इति स्नानयात्रा ।

अथ गुण्डिचा ।

ब्राह्मे,— गुण्डिचामण्डपं यान्तं ये पश्यन्ति रथे स्थितम् ।
बलं कृष्णं सुभद्राञ्च ते यान्ति भवनं हरेः ॥
ये पश्यन्ति तदा कृष्णं सप्ताहं मण्डपे स्थितम् ।
हरिं रामं सुभद्राञ्च विष्णुलोकं व्रजन्ति ते ॥

तथा गुण्डिचामुपक्रम्य,—
यस्याः सङ्कीर्त्तनादेव नरः पापात् प्रमुच्यते ।

तत्र नानाविधबहुफलान्युक्तानि द्रष्टव्यानि । तत्र नानोपहारदानञ्च लिखितं सर्वकामप्राप्त्यर्थम् ।

स्कान्दे श्रीजगन्नाथप्रतिमाया इन्द्रद्युम्नं प्रति वचनम्,—
आषाढ़स्य सिते पक्षे द्वितीया पुष्यसंयुता ।

इत्याद्युक्त्वा,
ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम ॥ इति ।

सा गुण्डिचा । सदाशब्दाद्यात्रेयं श्रीपुरुषोत्तमक्षेत्रे अवश्यं कार्य्या । नक्षत्रं विनापि कार्य्येति गम्यते । अकरणे बहवो दोषा अप्युक्ता विस्तरभयान्न लिखिताः ।

तस्मान्नक्षत्रयोगः श्रेयान् । न तदनुसारेण व्यवस्थेति सिद्धम् ।

स्कान्दे,— दिनानि नव यास्यामि तथा तस्मादिहागतम् ।
तत्रास्ति ते महाराज सर्वतीर्थमयं सरः ॥
तत्तीरे सप्त दिवसान् स्थास्याम्यनुजिघृक्षया ।
तत्र स्थितं मां पश्यन्तो यान्ति मर्त्त्या ममालयम् ॥
तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां भुवनत्रये ।

तानि सर्वाणि सरसि मत्सान्निध्याद्व्रजन्ति च ॥
तत्र स्नात्वा च विधिवद्दृष्ट्वा मां भक्तिभाविताः।
जननीजठरे क्लेशं पुनर्नानुभवन्ति हि ॥
नवमेऽह्नि समायान्तं दक्षिणाशामुखं तदा।
ये पश्यन्ति प्रतिपदमश्वमेधक्रतोः फलम् ॥
प्राप्य भोगानिन्द्रसमान् भुक्त्वान्ते मां विशन्ति ते।

तथा,— सप्ताहं यो नरो नारी न सा प्राकृतमानुषी ॥

सप्ताहमध्ये तत्रैव फलम्,—

दिवा तद्दर्शनं पुण्यं रात्रौ दशगुणं भवेत्।

इति श्रीगण्डिचा।

अथ हरिशयनम्।

स्कान्दे,— आषाढ़शुक्लद्वादश्यां कुर्यात्स्वापमहोत्सवम्।

तथा,— ये पश्यन्ति महात्मानः शयनोत्सवमुत्तमम्।
मातुर्गर्भं न पश्यन्ति कारयन्ति च ये महम् ॥

इति हरिशयनम्।

दक्षिणायनं।

स्कान्दे,—अतःपरं प्रवक्ष्यामि दक्षिणायनमुत्तमम्।
संक्रान्तेः पूर्वकाले या कला वै विंशतिर्मताः ॥
अयनं पुण्यकालोऽयं पुण्यकर्मसु कर्मिणाम् ॥

तथा,— अयने दक्षिणे तस्मिन्वर्त्तमानं श्रियः पतिम्।
विहाय सर्वपापानि विष्णुलोकं व्रजन्ति ते ॥

यत् संक्रान्तेः पूर्वं पुण्यकालत्वमुक्तं तत्तु तद्भावेऽधिककफलमुक्तं नात्र तेनैव व्यवस्था, सामान्यतः पुण्यत्वोक्तेः ।

इति दक्षिणायनम् ।

अथ पार्श्वपरिवर्त्तनम् ।

स्कान्दे,—अतःपरं प्रवक्ष्यामि पार्श्वस्य परिवर्त्तनम् ।
शयितस्य जगद्भर्त्तुः परिवर्त्तयितुर्युगम् ॥
नभस्ये विमले पक्षे सम्प्राप्ते हरिवासरे ।
सन्ध्याकाले तदा विप्राः कर्म कुर्य्याद्यथाविधि ॥
तस्मिन् काले च यः पश्येत् स्तुयादा परमेश्वरम् ।
परिवृत्तिं स नाप्नोति जननीगर्भसङ्कटे ॥

पुनरपि नानाफलान्युक्तानि ।

इति पार्श्वपरिवर्त्तनम् ।

अथ उत्थापनैकादशी ।

स्कान्दे,— कुमारपौर्णमासीमुक्ता,
ततः प्रभाते सङ्कल्प्य कार्त्तिके व्रतमुत्तमम् ।
व्रतेन तेनैव नयेत् यावदेकादशी सिता ॥
तस्यामुत्थापयेद्देवं प्रसुप्तं परमेश्वरम् ।

तथा,— शयनादुत्थितं देवं ये पश्यन्ति गदाधरम् ।
निद्रां मोहमयीं भित्वा ज्योतिःशान्तिं व्रजन्ति ते ॥

सर्वकामनाप्त्यादीन्यपि उक्तानि ।

इति उत्थापनम् ।

अथ प्रावरणोत्सवः ।

स्कान्दे,— मार्गशीर्षे सिते पक्षे षष्ठ्यां प्रावरणोत्सवम् ।
कृत्वा दृष्ट्वा नरो भक्त्या वैष्णवं लोकमाप्नुयात् ॥

इत्यादि । तत्पूर्वं पञ्चमीदिनकृत्यमुक्तम् ।
ततोऽरुणोदये काले प्रातः सन्ध्यासमीपतः ।
पुनः प्रपूजयेद्देवं पूर्ववत्सुसमाहितः ॥

इति प्रावरणोत्सवः ।

अथ पुष्याभिषेकः ।

स्कान्दे,— पुष्यर्चेण च संयुक्ता पौर्णमासी यदा भवेत् ।
पौषे मासि तदा कुर्य्यात् पुष्यस्नानोत्सवं हरेः ॥

तथा,— पुष्यस्नानोत्सवं पुण्यं ये पश्यन्ति मुदान्विताः ।
सम्पन्नसर्वकामास्ते व्रजेयुर्वैष्णवं पदम् ॥ इत्यादि ।

अस्य प्रत्यब्दविहितत्वान्नक्षत्राभावे पूर्णिमायामेव करणम् ।
नक्षत्रसद्भावे तु फलाधिक्यं न तु तेन व्यवस्था ।

इति पुष्याभिषेकः ।

उत्तरायणम् ।

ब्राह्मे,— उत्तरे दक्षिणे विप्रास्त्वयने पुरुषोत्तमम् ।
दृष्ट्वा रामञ्च कृष्णञ्च भद्रां भद्रप्रदायिनीम् ॥
त्यक्त्वा सर्वाणि पापानि विष्णुलोकं स गच्छति ।

इति उत्तरायणम् ।

दोलयात्रा ।

ब्राह्मे,—नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।

फाल्गुने मासि भो विप्रा गोविन्दस्य पुरं व्रजेत् ॥
दोलायमानं गोविन्दं यः पश्येत् सुसमाहितः ।
ब्रह्महत्यादिपापानां करोति क्षयमात्मनः ॥

इत्युक्त्वा प्रथमे ब्रह्महत्यां, द्वितीये स्त्रीवधं, तृतीये मद्यपानं नाशयतीत्युक्त्वा दोलात्रयदर्शने पञ्चमहापातकक्षय उक्तः ।

ब्रह्माण्डे तु कालः स्फुटः,—

अप्रभाते निशानाथे ह्यप्रकाशे दिनेश्वरे ।
ततः प्रभोः प्रकर्त्तव्या दोली परमसम्मता ॥ इति ।

फल्गुदानन्तु पूर्वमुक्तम् ।

इति दोलायात्रा ।

दमनकचतुर्द्दशी ।

स्कान्दे,— "चैत्रे मासि चतुर्द्दश्याम्" इत्यादि लिखितम् ।

तथा,— ततश्चाभ्युदिते सूर्य्ये देवं कृष्णपुरःसरम् ।
नयेत् श्रीजगदीशस्य समीपं द्विजसत्तमाः ॥ इत्यादि ।

इति दमनकचतुर्द्दशी ।

अक्षयतृतीया ।

ब्राह्मे,— यस्तु पश्येत्तृतीयायां कृष्णं चन्दनभूषितम् ।
वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ॥

इति श्रीपुरुषोत्तमक्षेत्रे द्वादशयात्राः ।

अथ श्रीभुवनेश्वरस्य चतुर्द्दशयात्राकालाः ।

तत्रायं संग्रहः,—

यात्राद्या प्रथमाष्टमी निगदिता प्रावारषष्ठी तथा ।

पुष्यस्नानमथाज्यकम्बलविधिर्माघे सिता सप्तमी ॥
तद्वत् स्यात् शिवरात्रिका रथगतिः स्याद्दामनं भञ्जनम् ।
पुष्पाचय्यद्वतीयिका परशुरामीयाष्टमीशायनम् ॥
उक्ते तत्र पवित्ररोपणयमद्वैतीयिके चोत्थितिः ।
चैत्रे श्रीभुवनेश्वरे हि विहिता यात्रा शतस्रो दश ॥
शैवे स्पष्टतयोदिता दशविधास्तत्रादिना संग्रहा—
देकाम्रात् प्रथमाष्टमीप्रमुखतयो यात्रा स्वतस्रो धृताः ॥

एकाम्रपुराणे,—मार्गशीर्षे शुभे मासे श्राद्धौ च प्रथमाष्टमी ।
पौर्णमास्यन्तमासे इयं कृष्णाष्टमी तथैव समाचारात् ॥

शिवपुराणे,— यः पश्येल्लिङ्गराजस्य मार्गे प्रावरणोत्सवम् ।
सर्वोत्सवैः स संयुक्तो याति शङ्करमन्दिरम् ॥

एकाम्रपुराणे,— मार्गशुक्लस्य पञ्चम्यां वस्त्रशुद्धिं समाचरेत् ।
इत्याद्यधिवासमुक्त्वा तत् परेद्युः ।
पश्येत्तु भुवनेशं यः षष्ठ्यां प्रावरणोत्सवे ।
ब्रह्महत्यादिपापानि तस्य नश्यन्ति नान्यथा ॥
इति तिथिपत्रौ स्फुटौ ।

शैवे,— यः पुष्यपौर्णमास्यान्तु लिङ्गं नीराजितं मुने ।
पश्येत् स याति भुवनमिन्द्रस्य त्रिदशार्चितम् ॥
दृष्ट्वा मकरसंक्रान्त्यां लिङ्गं त्रिभुवनेश्वरम् ।
घृतकम्बलसंयुक्तमग्निलोकमवाप्नुयात् ॥
यः पश्येन्माघसप्तम्यां भास्करेश्वरसन्निधौ ।
प्रतिमां लिङ्गराजस्य महापापैः प्रमुच्यते ॥

भविष्ये तु,— अरुणोदयकाले तु शुक्ला माघस्य सप्तमी ।

इति पक्षकर्मकालौ स्फुटौ ।

शैवे,— माघकृष्णचतुर्द्दश्यां शिवं रात्रौ विलोक्य तत्[१] ।

शिवसायुज्यमाप्नोति यदि वेदः प्रमाणभाक् ॥

माघकृष्णचतुर्द्दशी तत्र चैत्रशुक्लादिमासगणनया पूर्णिमान्त-मासे फाल्गुनकृष्णचतुर्द्दशी सिद्धैव ।

शैवे,— एकाम्रे चैत्रमासे यः पश्येद्रथगतं हरम् ।

ब्रह्महत्यादिपापानि क्षयित्वा मोक्षमाप्नुयात् ॥

एकाम्रे तन्नामकक्षेत्रे श्रीभुवनेश्वरे ।

एकाम्रपुराणे,— पुरा तुष्टेन च मया राघवाय महामते ।

वरो दत्तस्तदर्थञ्च यास्येऽहं रथसंस्थितः ॥

अशोकाख्यामिमां यात्रां कुरु त्वं नृपपुङ्गव ।

रथस्थं तत्र मां दृष्ट्वा मम लोकं व्रजेन्नरः ॥

लिङ्गपुराणे तु पक्षतिथौ स्फुटे ।

चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः । इति ।

शैवे,— तीर्थेश्वरसमीपे यः पश्येद्दमनभञ्जिकाम् ।

महोत्सवान्वितां तण्डे स पुण्यात्मा शिवं व्रजेत् ॥

एकाम्रपुराणे तु,— चैत्रशुक्लचतुर्द्दश्यां यात्रां दमनभञ्जिकाम् ।

इति मासपक्षतिथयः स्फुटाः ।

एकाम्रपुराणे,—

वैशाखस्य तृतीयायां लिङ्गं चन्दनभूषितम् । इत्यादि ।

---

(१) शिवरात्रौ विलोक्यते ।

| | Rs | |
|---|---|---|
| Muntakhabu-t-Tawarikh, (Text) Fasc 1-15 @ /6/ each | 5 | 10 |
| Muntakhabu-t-Tawarikh (English) Vol I Fasc 1-7, Vol II Fasc 1-5 and Index; Vol III, Fasc 1 @ /12 each | 12 | 0 |
| Muntakhabu-l-Lubab (Text) Fasc 1-19 @ /6/ each | 7 | 2 |
| Ma-asir-i-'Alamgiri, (Text) Fasc 1-6 @ /6 each | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc 1 | 0 | 6 |
| Nizami's Khiradnamah-i-Iskandari, (Text) Fasc 1-2 @ /12 each | 1 | 8 |
| Riyazu-s-Salatin, (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Tabaqat-i-Nasiri, (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Ditto (English) Fasc 1-14 @ /12/ each | 10 | 8 |
| Ditto Index | 1 | 0 |
| Tarikh-i-Firuz Shahi of Ziyau-d-din Barni (Text) Fasc 1-7 @ /6/ each | 2 | 10 |
| Tarikh-i-Firuzshahi of Shams-i-Siraj Aif (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc 1-2 @ 1/8/ each | 3 | 0 |
| Wis-o-Ramin (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Zafarnamah, Vol I, Fasc 1-9, Vol II Fasc 1-8 @ /6/ each | 6 | 6 |
| Tuzuk-i-Jahangiri (Eng ) Fasc 1 | 0 | 12 |

---

## ASIATIC SOCIETY'S PUBLICATIONS

| | | Rs | |
|---|---|---|---|
| 1 | ASIATIC RESEARCHES Vol VII, Vols XI and XVII and Vols XIX and XX @ 10/ each | 50 | 0 |
| 2 | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl ) @ /6/ per No , and from 1870 to date @ /8/ per No | | |
| 3 | JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8) @ 1/8 per No to Members and @ 2/ per No to Non-Members | | |
| | *N B —The figures enclosed in brackets give the number of Nos in each Volume* | | |
| 4 | Centenary Review of the Researches of the Society from 1784-1883 | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan by R B Shaw (Extra No J A S B , 1878) | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No , J A S B 1868) | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah by E Blyth (Extra No J A S B 1875) | 4 | 0 |
| | Introduction to the Maithili Language of North Bihar by G A Grierson Part II Chrestomathy and Vocabulary (Extra No , J A S B 1882) | 4 | 0 |
| 5 | Anis-ul-Musharrahin | 3 | 0 |
| 6 | Catalogue of Fossil Vertebrata | 3 | 0 |
| 7 | Catalogue of the Library of the Asiatic Society Bengal, by W A Bion | 3 | 8 |
| 8 | Inayah a Commentary on the Hidayah Vols II and IV, @ 16/ each | 32 | 0 |
| 9 | Jawamlu-l-'ilm ir riyazi 168 pages with 17 plates 4to Part I | 2 | 0 |
| 10 | Khizanatu-l-'ilm | 4 | 0 |
| 11 | Mahabharata Vols III and IV, @ 20/ each | 40 | 0 |
| 12 | Moore and Hewitson's Descriptions of New Indian Lepidoptera Parts I-III, with 8 coloured Plates 4to @ 6/ each | 18 | 0 |
| 13 | Sharaya-ool-Islam | 4 | 0 |
| 14 | Tibetan Dictionary by Csoma de Körös | 10 | 0 |
| 15 | Ditto Grammar | 8 | 0 |
| 16 | Kaçmiraçabdamrta Parts I & II @ 1/8/ | 3 | 0 |
| 17 | A descriptive catalogue of the paintings statues &c in the rooms of the Asiatic Society of Bengal by C R Wilson | 1 | 0 |
| 18 | Memoir on maps illustrating the Ancient Geography of Kasmir by M A Stein PH D , Jl Extra No 2 of 1899 | 4 | 0 |

---

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc 1-29 @ 1/ each | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr R L Mitra | 5 | 0 |

*N B* —All Cheques Money Orders &c , must be made payable to the 'Treasurer, Asiatic Society,' only

**Books are supplied by V-P P.** 15-1-1901

BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No 991.



# GADĀDHARA PADDHATAU KĀLASĀRA

BY

GADĀDHARA RĀJAGURU

EDITED BY

SADĀÇIVA MIÇRA

OF PURI

VOL. I, FASCICULUS III

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1901.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

## No 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS MESSRS LUZAC & CO,
46, GREAT RUSSELL STREET, LONDON, W C, AND MR OTTO
HARRASSOWITZ BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA

*Sanskrit Series*

| | Rs | As |
|---|---|---|
| Advaita Brahma Siddhi (Text) Fasc 1-4 @ /6/ each | 1 | 8 |
| Advaitachinta Kaustubha Fasc 1 | 0 | 6 |
| *Agni Purana (Text) Fasc 4-14 @ /6/ each | 4 | 2 |
| Aitareya Brahmana Vol I Fasc 1 5 and Vol II Fasc 1-5 Vol III Fasc 1 5 Vol IV Fasc 1 5 @ /6 | 7 | 8 |
| Anu Bhasyam (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Aphorisms of Sandilya English) Fasc 1 | 0 | 12 |
| Astasahasrika Prajna paramita (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Açvavaidyaka (Text Fasc 1-5 @ /6/ each | 1 | 14 |
| Avadana Kalpalata (Sans and Tibetan) Vol I Fasc 1-5 Vol II Fasc 1 5 @ 1/ each | 10 | 0 |
| *Bhamati (Text) Fasc 4-8 @ /6/ each | 1 | 14 |
| Bhatta Dipika Vol I Fasc 1-3 | 1 | 2 |
| Brhaddevata (Text) Fasc 1-4 @ /6/ each | 1 | 8 |
| Brhaddharma Purana (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Bodhicaryavatara of Cantideva Fasc 1 | 0 | 6 |
| Catalogue of Sanskrit Books and MSS Fasc 1 3 @ 2/ each | 6 | 0 |
| Çatapatha Brahmana Fasc 1-4 | 1 | 8 |
| *Caturvarga Chintamani (Text Vols II 1-25 III Part I Fasc 1 18 Part II Fasc 1-10 @ /6/ each | 19 | 14 |
| Çlokavartika (English) Fasc 1-2 | 1 | 8 |
| *Çrauta Sutra of Apastamba (Text) Fasc 4 15 @ /6/ each | 4 | 8 |
| Ditto Çankhayana (Text) Vol I Fasc 1-7 Vol II Fasc 1-4 Vol III, Fasc 1-4 @ /6 each | 5 | 10 |
| Çri Bhâshyam (Text) Fasc 1 3 @ /6/ each | 1 | 2 |
| Gadadhara Paddhati Kalasara Vol I Fasc 1 3 | 1 | 2 |
| Kala Madhava (Text) Fasc 1-4 @ /6/ each | 1 | 8 |
| Kala Viveka, Fasc 1-4 | 1 | 8 |
| Katantra (Text) Fasc 1-6 @ /12/ each | 4 | 8 |
| Katha Sarit Sagara (English) Fasc 1-14 @ /12/ each | 10 | 8 |
| Kurma Purana, (Text) Fasc 1-9 @ /6/ each | 3 | 6 |
| Lalita Vistara (English) Fasc 1 3 @ /12/ each | 2 | 4 |
| Madana Parijata (Text) Fasc 1-11 @ /6/ each | 4 | [illegible] |
| Mahâ-bhâsya-pradipodyota (Text) Fasc 1-9 @ /6 each | 3 | 6 |
| Manutika Sangraha (Text) Fasc 1-3 @ /6/ each | 1 | 2 |
| Markandeya Purana, (English) Fasc 1 [illegible] @ /12/ each | 4 | 8 |
| *Mimamsa Darçana (Text) Fasc 7-19 @ /6/ each | 4 | 14 |
| Narada Smrti (Text Fasc 1-3 @ /6 | 1 | [illegible] |
| Nyayavartika, (Text) Fasc 1-4 @ /6 | 1 | 8 |
| *Nirukta (Text) Vol. III Fasc 1 6 Vol IV Fasc 1 8 @ /6/ each | 5 | 4 |
| Nityacarapaddhati Fasc 1 (Text) | 0 | 6 |
| Nyayabindutika (Text) | 0 | 10 |
| Nyaya Kusumanjali Prakaranam (Text Vol I Fasc 1 6; Vol II, Fasc 1 3 @ /6 each | 3 | 6 |
| Padumawati Fasc 1-3 @ [illegible] | 6 | 0 |

भविष्ये तु पक्षः स्फुटः,—

या शुक्ला कुरु शार्दूल वैशाखे मासि वै तिथिः।

तृतीया साक्षया लोके गीर्वाणैरभिवन्दिता॥ इति।

एकाम्रपुराणे,— आषाढ़शुक्लाष्टम्यान्तु पर्शुरामस्य सन्निधौ।

नत्वा मां तत्र यत्नेन शिविकास्थं त्रिलोचनम्॥

शैवे,— शयने च चतुर्द्दश्यां यः पश्येत् शान्तिवासवम्।

स ब्रह्मलोकमाप्नोति नियतं मुनिसत्तम॥

एकाम्रपुराणे तु,— अथ वक्ष्यामि देवेशि यात्रां ते शयनोत्तमाम्।

आषाढ़स्य च शुक्लायां चतुर्द्दश्यां समाचरेत्॥

इति मासपक्षौ स्फुटौ।

एकाम्रपुराणे,— श्रावण्यां चैत्रशुक्लायां चतुर्द्दश्यामुमापतिम्।

पवित्रैरर्च्चयेद्रात्र्यां कुर्वन् दिव्यं महोत्सवम्॥

शैवे,— यमद्वितीयायान्तां यः पश्येत्तत्र समाहितः।

स यत्नेनार्च्चितो भूत्वा स्वर्गलोकमवाप्नुयात्॥

महाभारते तु,— कार्त्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर।

यमो यमुनया पूर्वं पूजितः स्वगृहे स्वयम्॥

इत्यादिना मासपक्षौ स्फुटौ॥

शैवे,— प्रबोधिनीचतुर्द्दश्यां दृष्ट्वा त्रिभुवनेश्वरम्।

प्रबुद्धः सर्वदेवैस्तु शिवलोकमवाप्नुयात्॥

इत्यादिषु च पुण्येषु दिवसेषु च यो नरः।

पश्येत् त्रिभुवनेशञ्च स लभेत् परमां गतिम्॥

एकाम्रपुराणे तु,— कार्त्तिकस्य सिते पक्षे चतुर्द्दश्यां महेश्वरि।

गर्भोदृत्थापनं कुर्यात्तया सह नगेन्द्रजे ॥

इत्यादिना उत्थापने मासपचौ स्फुटौ ॥

अासु यात्रासु तिथिद्वैधे व्यवस्था श्रीपुरुषोत्तमचैत्रयात्राप्रकरणे लिखिता ॥

इति श्रीभुवनेश्वरीयचतुर्द्दशयात्रातिथयः ।

अथानध्ययनकालाः ।

मनुः,— एतान् नित्यमनध्यायानधीयानो विवर्जयेत् ।
अध्यापनञ्च कुर्वाणः शिष्याणां विधिपूर्वकम् ॥
कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने ।
एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचचते ॥
विद्युत्स्तनितवर्षासु महोल्कानाञ्च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥
एतांस्त्वभ्युदितान् विद्याद्यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥
निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्ज्जने ।
एतानाकालिकान् विद्यादनध्यायानृतावपि ॥
प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने ।
सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥
नित्यानध्याय एव स्यात् ग्रामेषु नगरेषु च ।
धर्मनैपुण्यकामानां पूतिगन्धे च सर्वदा ॥
अन्तःशवगते ग्रामे वृषलस्य च सन्निधौ ।
अनध्यायो रुद्यमाने समवाये जनस्य च ॥

उदके मध्यरात्रे च विण्मूत्रस्य विसर्जने।
उच्छिष्टः श्राद्धभुक् चैव मनसापि न चिन्तयेत्॥
प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके॥
यावदेकानुदिष्टस्य गन्धो लेपश्च तिष्ठति।
विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्त्तयेत्॥
शयानः प्रौढ़पादश्च कृत्वा चैवावसक्थिकाम्।
नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च॥
नीहारे वाणशब्दे च सन्ध्ययोरुभयोरपि।
अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु च॥
अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी।
ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्जयेत्॥
पांशुवर्षे दिशां दाहे गोमायुरुदिते तथा।
श्वखरोष्ट्रे च रुदति पङ्क्तौ च न पठेद्द्विजः॥
नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजे तथा।
वसित्वा मैथुनं वासः श्राद्धकं प्रतिगृह्य च॥
प्राणि वा यदि वाप्राणि यत्किञ्चित् श्राद्धकं भवेत्।
तदालभ्याप्यनध्यायः प्राण्यास्यो[१] हि द्विजः स्मृतः॥
चौरैरुपप्लुते ग्रामे संभ्रमे वाग्निकारिते।
आकालिकमनध्यायं विद्यात् सर्वाद्भुतेषु च॥
उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम्।

(१) पाण्यास्यः।

अष्टकासु लहोरात्र म्रुतन्तासु च रात्रिषु ॥
नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनम् ।
न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः ॥
न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥
अतिथिश्चाननुज्ञाप्य मारुते चाभिवाति वै ।
रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥
सामध्वनावृग्यजुषी नाधीयीत कदाचन ।
वेदस्याधीत्य चैवान्तमारण्यकमधीत्य च ॥

तथा,— पशुमण्डूकमार्जारश्वसर्पनकुलाखुभिः ।
अन्तरे गमने विद्यादनध्यायमहर्निशम् ॥
द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिश्चाशुद्धामात्मानञ्चाशुचिं द्विजः ॥

एतद्वाक्यानामर्थापनेन स्मृत्यन्तरोक्तविशेषोऽप्युच्यते

रात्रौ कर्णश्रवे (कर्णश्रवणयोग्ये वायौ वाति) दिवा च धूलिपटलोत्सारणशक्ते वायौ वहति इति, वर्षासु (प्रावृट्काले) द्वावनध्यायावित्यर्थः। आकालिकं निमित्तकालादारभ्य परेद्युर्यावत् स एव कालः, तावत्पर्यन्तमनध्यायं विद्यात्, विद्युत्स्तनितवर्षेषु युगपत् जातेषु एकदा महोल्कानां सन्निपाते आकालिकमित्यादि पूर्ववत्। एतान् विद्युदादीन् यदा होमार्थं प्रकटीकृताग्निकालेषु (सन्ध्याचरणेषु) अभ्युदितान् (उत्पन्नान्) जानीयात् तदाऽनध्यायं कुर्यात् ।

सन्ध्यासु विद्युदादिसमस्तान्वये, तदा सन्ध्यायामेवानध्याय इत्यर्थः। कल्पतरुकारास्तु, विद्युदादिमध्येकदर्शने तदैवानध्याय इति। अनृतौ (प्रावृड्भिन्नर्त्तौ) प्रकटीकृताग्निकालेषु सन्ध्ययोरित्यर्थः। समाधारात् बहुमेघदर्शनमात्रे सत्यनध्यायो, न प्रावृड्तौ। ज्योतिषां (चन्द्रसूर्य्यादीनां)। ऋतौ (प्रावृड्तौ)। अपि शब्दादन्यत्रापि। प्रादुष्कृतेषु (प्रकटीकृताग्निषु) होमार्थमित्यर्थः। तथाच प्रातःसन्ध्यायां विद्युत्स्तनितनिःस्वने, न तु केवलवर्षणे, यदि प्रातःसन्ध्यायां विद्युत्स्तनितनिःस्वनः, तदा सज्योतिर्यावत् सूर्य्योदयदर्शनं, तावदनध्यायः; दिनमात्रव्यापीत्यर्थः। यदि सन्ध्यायां, तदा रात्रिमात्रव्यापीत्यर्थः। एवं विद्युत्स्तनितयोर्व्यवस्था। वर्षणे तु व्यवस्था उच्यते। शेषे (विद्युत्स्तनितवर्षाणां पूर्वोक्तानां शेषवर्षणरूपे) तृतीये जाते। यथा दिवानध्यायः, तथा रात्रौ अहोरात्रमित्यर्थः। हारीतस्मृतौ तु "सायं सन्ध्यायां स्तनिते रात्रौ अनध्यायः, प्रातःसन्ध्यायान्त्वहोरात्रमिति" यदुक्तं तत्राहोरात्रपक्षो नाचर्य्यते। सन्ध्यागर्जनदोषमाह दुर्वासाः।

सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम्॥

यानि चान्यानि स्मृतिवाक्यानि आचारविरुद्धानि सन्ति तानि सर्वाणि विस्तरभयादनुपयोगाच्च न लिखितानि। नैपुण्यमतिशयः। अत्र धर्मातिशयकामानां यो नित्यमनध्याय उक्तः। स न सर्वेषां, काम्यत्वात्। अतएव वशिष्ठः,—"नगरे तु काम्यमिति"। मध्यमरात्रे (मुहूर्त्तचतुष्टयरूपे महानिशायां)

"चतुर्मुहूर्त्तमिति" गोभिलस्मृतेः। श्राद्धभुक् निमन्त्रणादारभ्य श्राद्ध-भोजनाहोरात्रं यावत्, न पठेत्। केतनं (निमन्त्रणं)। हारीतः,— "श्राद्धमनुष्ययज्ञभोजनेऽहोरात्रं"। मनुष्ययज्ञो (अतिथिपूजा)। याज्ञवल्क्यः,—"शिष्टे च गृहमागते"। शंखलिखितौ "नगरचतुष्पथसंक्रमेष्वनध्यायः" राजामात्यमहापुरुषस्वर्यागेऽनुकूले मिवेऽतीते नावभृथयज्ञवाटे। महापुरुषोऽत्र उत्कृष्टगुणशाली। राज्ञः सूतके पुत्रजन्मादौ, राहोः सूतके (चन्द्रसूर्य्योपरागे) याज्ञवल्क्यः,— त्र्यहं प्रेतेष्वनाध्यायः शिष्यर्त्विग्गुरुबन्धुषु[१]।

उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रियोस्तथा॥

अमेध्यशब्दशूद्रान्त्यश्मशानपतितान्तिके।

बोधायनः,—

"ऋत्विग्देशपतिश्रोत्रियेषु अहोरात्रम्"। देशपतिरत्र देशाधिकारी।

श्रोत्रियश्च भिन्नशाखीयः। राजस्वशाखिनः त्रिरात्रोक्तेः। प्रौढ़पादः (आसनाद्यारूढ़पादः) अवशक्थिका जानौ पर्य्यङ्कबन्धरूपा। वाणशब्दे शरशब्दे इति केचित्। वाणशब्दस्तन्तुसहितवीणावाचीति साम्प्रदायिकाः। एकमुद्दिश्य अनुविष्टस्य सृष्टस्य कुङ्कुमादेरिति शेषः। गन्धलेपसद्भावे त्र्यहादूर्द्ध्वं अपीत्यर्थः। पौर्णमास्यष्टकासु चेत्यत्र अष्टमीष्वित्यर्थः। मध्याष्टमीति तद्व्याख्यावाक्यात् अष्टकाश्राद्धदिननिषेधस्य वक्ष्यमाणत्वाच्च।

यत्तु यमेन,— प्रजापतिं हि तिष्ठन्ति सर्वा विद्यास्तु पर्वसु।

(१) शिष्यर्त्विग्गुरुबन्धुषु।

तस्मात् धर्मार्थकामार्था नैताः पर्वसु कीर्त्तयेत् ॥

इति काम्यं पर्ववर्जनमुक्तं, तद्वेदान्तातिरिक्तविद्यापरमिति साम्प्रदायिकाः।

चतुर्द्दश्यष्टम्यौ पक्षद्वयस्य,

पक्षद्वये चतुर्द्दश्योरष्टमीद्वितीये तथा।

इति श्लोकगौतमोक्तेः।

पङ्क्तौ (श्राद्धपङ्क्तौ) स्थितायाञ्च शब्दात्।

श्मशानपरिमाणमापस्तम्बीये,— श्मशाने सर्व्वत श्चाशम्याप्रासे। शम्या रथशम्या, सा प्रदेशमात्रा, शम्याख्यादुक्तलक्षणा। तस्याः प्रासः प्रक्षेपो यावद्दूरे भवति, तावद्दूरं श्मशानात् सर्व्वतो मुक्त्वा अध्येयमित्यर्थः।

यमः,— श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च।

कदाचिदपि नाध्येयं कोविदारकपित्थयोः॥

वसित्वा (परिधाय)। प्राणि, गवाश्वादि। अप्राणि, वस्त्र-हिरण्यादि। यस्मात् ब्राह्मणः प्राणी एवास्यं मुखं यस्य तथोक्तः। यद्यपि "उत्पातेषु शान्तिस्वस्त्ययने कृत्वा" इति हारीतोक्तेः शान्तिपर्य्यन्तमनध्यायः प्राप्नोति, तथाप्यसक्तौ शान्तिकरणाभाव-निश्चये उत्पातकालीन एवानध्यायः इति मनोरभिप्रायः, "चौरैरुपप्लुते ग्रामे" इत्यादि पूर्व्वोक्तानध्यायनिमित्तसमानत्वात्॥

अनध्यायः त्रिरात्रन्तु भूमिकम्पे तथैव च।

इति यमोक्तिः सर्व्वभूमिकम्पपरा।

स्वल्पभूवाप्ये तु याज्ञवल्क्यः,—

सन्ध्यागर्ज्जितनिर्घातभूकम्पोल्कानिपातने।

समाप्य वेदं द्युनिशमारण्यकमधीत्य च॥

द्युनिशमहोरात्रम्  गौतमः।  आचार्य्ययोः (गुरुगुरुक्रयोः) परिवेशे (मण्डले) ज्योतिषोः (सूर्य्याचन्द्रमसोः) अच ये केचि-दुत्पातभेदाः उक्ताः, ते तु सर्वपदेन मनुना संगृहीताः। अष्टकासु (पौषमाघफाल्गुनमासीयकृष्णाष्टमीषु) पूर्वमष्टमीषु योऽनध्याय उक्तः। सः,—

प्रतिपत्क्षेशमात्रेण कलामात्रेण चाष्टमी।  इति वाक्यात्।

परदिने कलामात्रसत्त्वेऽपि परदिने भवति "निषेधः काल-मात्रके" इति वाक्यात्तिथिमारभ्य पूर्वदिनेऽपि। अष्टकासु तु यथाप्राप्तश्राद्धदिने इति न पौनरुक्त्यम्। अष्टकासु "त्रिरात्रं, त्रिरात्रमन्यासेके" इति गौतमोक्तिदयं सप्तम्यादिदिनत्रये प्रवृत्त-मपि मनूक्तिविरोधान्नाद्रियते। ऋत्वन्त्यासु वसन्ताद्यृत्वन्तभवासु। इरिण्स्थो (मरुदेशस्थः) यानं (शकटादि) भुक्तमात्रे (यावदार्द्र-पाणिरिति स्मृत्यन्तरोक्तिरूपे)। हारीतः,—ऊर्द्धं भोजनादुत्सवे, देवताद्युत्सवे। भोजनोर्द्धस्नानध्यायः। सूक्तके (अम्लोद्गारे)।

आभिवाति आभिमुख्येन वायौ वाति इत्यर्थः। शस्त्रहननस्य पृथगुक्तिः। आरण्यं (तन्नामकदैवतं देशम्)।

सामध्वनौ कर्मविशेषापवादमाह अङ्गिराः। सामध्वनौ सत्यपि यज्ञेऽधीयीत भूतलात्। आपस्तम्बः। "काण्डोपाकरणे चामातृकस्य। काण्डसमापने चापितृकस्य, काण्डोपक्रमे समापने चानध्यायः।

यत्काण्डमुपाकुर्वीत यदनुवाक्यमुपाकुर्वीत। तावत्तदहरधीयीत। तथा उपाकरणसमापनयोश्च पारायणस्य तां विद्यां ('पारायणं धर्मार्थमादित" इत आरभ्य समाप्तिपर्य्यन्तपठनं) तत् चानध्यायेन वर्ज्यमित्यर्थः। त्रय्या (वेदत्रयस्य) निष्कर्षं प्रणवव्याहृतिसावित्र्यात्मकसारमित्यर्थः। प्रत्यहमभ्यस्य पश्चात् वेदाध्ययनं कुर्य्युः। पशवो (गोमहिषादयः)।

विश्वामित्रः,— विड्वराहविड्डराहग्रामान्त्यभववायसैः।

कृतेऽन्तराये पश्वाद्यैरनध्यायः त्र्यहं मतः॥

ग्रामान्त्यभवाः (मनुजाः रजककर्मकारनटकैवर्त्तादयः) श्लोक-गौतमः,—

याथाप्यदन्तरे व्याघ्रो नैवाधीयेत हायनम्।

हायनं (वत्सरम्)।

गुर्वन्ते वासिनां वेदमध्येतॄणाञ्च मध्यतः।

गजश्वपाकगमने नाधीयीतापि वत्सरम्॥

मानवीये आदौ इमान्नित्यमनध्यायानिति यदुक्तं अनध्ययनस्य नित्यत्वं, तत्ग्रहणधारणादिसमर्थस्यैव। "अन्ते तु द्वावेवेति अशुद्धभूस्यात्मशौचयोर्यदनध्ययननित्यत्वमुक्तं तदसमर्थस्य ज्ञेय"मिति निबन्धकृतः।

याज्ञवल्क्यः,— भूतसन्धिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च।

भूतसन्धिः (प्रतिपत्)। महाभारतेऽपि,—

इयं यौधिष्ठिरी सेना गाङ्गेयशरपीड़िता।

प्रतिपत्पाठशीलस्य विद्येव तनुतां गता॥

आपस्तम्बीयेऽष्टम्यादिषु विशेषः,—

उदयेऽस्तमये वापि मुहूर्त्तत्रयगामि यत् ।
तद्दिनं तदहोरात्रमनध्यायविदो विदुः ॥
केचिदाहुः क्वचिद्देशे यावत्तु दिननाड़िकाः ।
तावदेव ह्यनध्यायो न हि तस्मिन् दिनान्तरे ॥

तद्दिनं तां तिथिं प्राप्येत्यर्थः । दिनान्तरे (तिथ्यन्तरे) निर्णयामृते, स्मृतिः,—

प्रतिपच्चेशमात्रेण कलामात्रेण चाष्टमी ।
दिनं दूषयते सर्वं सुरा गव्यघटं यथा ॥

श्लोकभीष्मः,— चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु ।
विषुवायनयोर्द्वन्द्वे शयने बोधने तथा ॥
पर्वादिषु त्रयोदश्यां तस्यामेवोत्तरा तिथिः ।
दर्शस्य चेद्द्विवस्यादनध्यायः श्रुतावपि ॥

राजमार्त्तण्डे,— कोशिचैत्रद्वितीयास्ताः प्रेतपक्षे गते तु या ।
या तु कोजागरे याते चैत्रावल्यां परेऽपि या ॥
चातुर्मास्ये समाप्ते च या द्वितीया भवेत्तिथिः ।
परास्वेतास्वनध्यायः पुराणैः परिकीर्त्तितः ॥

चैत्रावली (चैत्रपौर्णमासी) । वृद्धगार्ग्यः,—

शुचावूर्जे तपस्ये वा या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥

शुचौ (आषाढ़े) ऊर्ज्जे (कार्त्तिके) तपस्ये (फाल्गुने) विधुक्षये (कृष्णपक्षे) आषाढ्यादिषु पौर्णमासीषु गतास्वित्यर्थः ।

मन्वादियुगादितिथयः श्राद्धप्रकरणे वाच्याः। विषुवायनेषु विशेषमाह गार्ग्यः,—

दिवायने क्रमेद्भानुर्यदि रात्रौ परापरे।
नाधीयीताहनि रात्रावेवं विषुवयोरपि॥

दिवा संक्रमे पूर्वापरयो रात्र्योरनध्यायः, रात्रिसंक्रमे पूर्वोत्तरदिनयोः त्रयोदश्युत्तरतिथौ चतुर्द्दशामित्यर्थः। दर्शस्य दिवसे किञ्चिद्दर्शनेऽपि त्रयोदश्यामनध्यायः। श्रुतौ (श्रवणद्वादश्यां) सत्यतपाश्च,—

आभाकाशितपक्षेषु मैत्रश्रवणरेवतीः।
द्वादश्यः संस्पृशेयुश्चेत् तत्रानध्ययनं विदुः॥

वृद्धमनुः,— जननाद्दशरात्रं च शवे च समुपस्थिते।
नाधीयीत द्विजो नित्यं तावदाकालिकेषु च॥
महागुरौ द्वादशाहं वेदानध्ययनं व्रजेत्।

देवीपुराणे,— न सङ्कीर्णे जने कुर्यान्न च तस्करसन्निधौ।
न श्मश्रुकरकाकारिक्षकवाकुसमागमे॥

श्मश्रुकरो (नापितः) काकारिः (पेचकः) क्षकवाकुः (कुक्कुटः) "चत्वारीमानि कर्माणि" इति नक्तप्रकरणोक्तस्मृतौ सन्ध्यायां निषेध उक्तः।

शिवपुराणे,— प्रदोषो हि द्विधा प्रोक्तो रूढिर्लाक्षणिको मुने।
अर्द्धास्ते च रवेश्चक्रे प्रदोषो मुनिभाषितः॥
सन्ध्याकाले च पूर्णास्ते गगने तारकामये।

तथा,— रविसकार्द्धमाचष्ट प्रदोषो रूढिसंज्ञितः।

यामभेकं चतुर्द्दश्यां यामयामार्द्धसप्तमी ॥

यामत्रयं त्रयोदश्यां प्रदोषो लाघणिर्मतः ।

इत्याद्युक्ता,— नृत्यभङ्गान्महादेवः क्रुद्धो भवति तत्क्षणात् ।

शापं ददाति तस्मै स जाड्यो भव इति प्रभुः ॥

तथा,— प्रदोषे न हरिं पश्येत् पश्येच्च वृषभध्वजम् ।

वृद्धगार्ग्यः,— रात्रौ यामद्वयादर्वाक् सप्तमी स्यात्त्रयोदशी ।

प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ॥

रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते ।

प्रदोषः स तु विज्ञेयो वेदाध्ययनगर्हितः ॥

शिष्टाः,— रात्रौ यामद्वयादर्वाक् यदि पश्येत्त्रयोदशीम् ।

प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ॥

सर्वत्रापवादमाह मनुः,—

नैत्यकेनास्त्यनध्यायो ब्रह्मसूत्रं हि तत्स्मृतम् ।

तथा,— वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।

नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

कौर्मे,— अनध्यायं तु नाङ्गेषु नेतिहासपुराणयोः ।

न धर्मशास्त्रेष्वन्येषु पर्वस्वेतानि वर्जयेत् ॥

वेदोपकरणं (वेदातिरिक्तविद्यास्थानं) तेन सर्वविद्या न पठेत् इति यत्र साक्षाद्वचनं तत्रैव वेदोपकरणेऽप्यनध्यायो न सर्वत्रेति सिद्धम् ।

इति तिथिषु दैवनिरूपणम् ।

अथ पित्र्यकर्मणि तिथिनिरूपणे प्राप्ते श्राद्धस्य मरणोत्तरभा-

विलाम्मरणस्य तु जन्मोत्तरभावित्वात् जननस्य ऋतुकालाधीनत्वात् ऋतुप्रभृतिकाला निरूप्यन्ते।

याज्ञवल्क्यः,— ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकादिश्मशानान्ताः तेषां वै मन्त्रतः क्रियाः॥
गर्भाधानमृतौ पुंसः सवनात् स्पन्दनात् पुरा।
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।
षष्ठेऽन्नप्राशनं मासि चूड़ा कार्या यथाकुलम्॥
एवमेनः शमं याति वीजगर्भसमुद्भवम्।
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः॥

वीजगर्भसमुद्भवं (शुक्रशोणितसम्बन्धं, गोचव्याधिसङ्क्रान्तिनिमित्तं) न तु पतितोत्पन्नत्वादित्यर्थः। चूड़ान्तानां नित्यत्वेऽपि एतत् पापशमनं आनुषङ्गिकं फलमित्यर्थः। स्त्रीणां तु विशेषः। एताः चूड़ान्ताः तूष्णीमित्यादि।

षोड़शर्त्तुनिशाः स्त्रीणां तासु युग्मासु सम्विशेत्।
ब्रह्मचार्य्येव पर्व्वण्याद्याश्चतस्रस्तु वर्जयेत्॥
एवं गच्छेत् स्त्रियं चामां मघां मूलां च वर्जयेत्।
सुस्थ इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान्॥

षोड़शरात्रिमध्ये आद्यं रात्रिचतुष्टयं वर्ज्जम्। अवशिष्टासु द्वादशसु पञ्चमसप्तमनवमैकादशत्रयोदशपञ्चदशरूपाः षड्युग्मरात्रयः त्याज्याः। इति दशरात्रयः त्याज्याः। अवशिष्टासु षट्सु रात्रिषु यद्यत् पर्व्व पतति, तद्विहाय सङ्गमे, विशिष्टः पुत्रो भवति।

एकस्यां रात्रौ सकृदेव गमनं, न द्विस्त्रिरिति ब्रह्मचर्यफलं भवति। मानवीये तु,—षोड़शरात्रिषु रात्रिद्वयगमनमेव ब्रह्मचर्य-फलप्रदमित्युक्तम्। यासां रजस्वलानन्तरदृष्टयस्ताह्नाहारादिभिरास्व-वस्थामित्यर्थः। मघा इत्यादि गण्डनक्षत्रोपलक्षणम्। एवमादिप्रथम-सङ्गम एवाद्रियते। अन्यर्त्तावपि एतत्‌शुभकालगमने पुत्रोत्पत्ति-रिति याज्ञवल्क्याभिप्रायः। गण्डनक्षत्राणि तु ज्योतिः शास्त्रे,—

अश्विनीमघमूलानां तिस्रो गण्डाद्यनाड़िकाः।
अन्त्ये पौष्णोरगेन्द्राणां पञ्चैव यवना जगुः॥

स्वस्थ इन्दौ (बलवति चन्द्रे) एतत् चान्यशुभग्रहोपलक्षणम्। तथा च ज्योतिःशास्त्रे,—

पापासंयुतमध्यगेषु द्विनकलग्नप्रपास्वामिषु।
तद्द्यूनेष्वशुभोज्झितेषु विकुजे छिद्रे विपापे सुखे।
सद्युक्तेषु त्रिकोणकण्टकविधुष्वायत्रिषष्ठान्विते।
पापे युग्मनिशास्वगण्डसमये पुंसूद्भितः सङ्गमः॥

एवमादिप्रथमसङ्गम एवाद्रियते, अन्यर्त्तावपि एतत् शुभका-लादिगमनेन पुत्रोत्पत्तिरिति याज्ञवल्क्याभिप्रायः। अयुग्मरा-त्रित्यागो नाधर्मकारणं, किन्तु पुत्रोत्पादनार्थमेव। पर्ववर्ज्जनं तु अधर्महेतुतया एव इति बोध्यम्। गण्डनक्षत्रादिवर्ज्जनं प्रथम-र्त्तावेव बुधवारादिवर्ज्जनमपि प्रथमर्त्तावेव। "अभिनवनारीगमनं न बुधा बुधवासरे कुर्युः" इत्यादिशासनात्। पर्ववर्जनं तु सर्वर्त्तु-ष्वपि, चतुर्द्दश्यष्टमीवाक्येषु तिथीनामेवोक्तेः।

प्रथमर्त्तौ वारादिदोषे ज्योतिःशास्त्रे,—

पुष्यं दृष्टं निन्दिते मे यदि स्यात्
शान्तिं कुर्य्यादङ्गनानां च पूर्वम्।
तत्संयोगं वल्लभा वर्जयेषु
र्यावद्भूयो दृश्यते शस्तभे तत्॥
नक्षत्रतिथिवारेषु यत्र पुष्यं च दृश्यति।
होमं कुर्यात् च गायत्र्या वारदोषे तिथावपि॥
कुशै राज्यैश्चाष्टशतं दूर्वाभिश्च तथैव च।
तिलैराज्येन दूर्वाभिर्होमं कुर्यात् प्रयत्नतः॥
नक्षत्रदोषशान्त्यर्थं प्रत्येकं तु सहस्रकम्।

अत्र व्यवस्था,—

वारदोषव्यपोहनार्थं आज्यमिश्रितानां दूर्वाणां अष्टोत्तरशतं होमः, तिथिदोषे आज्यानामष्टोत्तरशतं होमः, नक्षत्रदोषे आज्यमिश्रितानां कुशानामष्टोत्तरशतं होमः, लग्नदोषे आज्यमिश्रिततिलानामष्टोत्तरशतं होमः, अतिशङ्कस्य तु प्रत्येकं सहस्रहोमः, यद्वा,—

दूर्वातिलाज्यै र्जुहुयात्सहस्रं
गायत्रीमन्त्रेण तदुक्तदोषे॥
दूर्वातिलयोर्होमे हस्तस्य साधनत्वं
आज्यहोमे स्रुवस्य साधनत्वं॥ इति।

समुच्चयहोमस्याप्रमाणात् षट्त्रिंशदधिकशतत्रयहोमे प्रत्येकद्रव्यसम्बन्धेन सहस्राष्टोत्तरहोमः सिध्यति। सहस्रशतहोमादिषु अप्रमाणात् अष्टोत्तरत्वस्य नियमात्।

ननु द्वन्द्वसमासात् समुच्चयपक्षः प्राप्नोति इति चेन्न। भिन्ना-

वस्तुद्वयं प्रति साहित्यस्योपपन्नत्वात्। ब्रह्माण्डोक्तहोमस्य काम्यत्वान्न सर्वैः क्रियते। निषेककर्मणि वृद्धिश्राद्धाभावः "विवाहादिः कर्मगण" इति वक्ष्यमाणच्छन्दोगपरिशिष्टोक्तेः। एवं च वृद्धिश्राद्धाभावात् तत्पूर्वविहितानां मातृपूजा वसोर्द्धारायुष्यमन्त्रजपानामप्यभावः एतद् वृद्धिश्राद्धप्रकरणे लेख्यम्। केचित्तु वृद्धिश्राद्धाभावेऽपि,—

निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने चैव श्राद्धं पश्चाङ्गमेव च॥

इति विष्णुपुराणोक्तकर्माङ्गं श्राद्धं कार्यम्। "कर्माङ्गं वृद्धिमत् स्मृत" मिति स्मृतेर्मातृपूजादिकवृद्धिश्राद्धकर्त्तव्यतापि, इति वदन्ति॥

वस्तुतस्तु नान्दीमुखश्राद्धस्य गर्भाधाने विहितप्रतिषिद्धत्वात् विकल्प एव, इति शिष्टब्राह्मणानां गर्भाधाने नान्दीमुखश्राद्धाभावसमाचारो, नृपादीनां तु तत्करणे समाचारस्य उभयं प्रमाण मिति, अस्मत्पितामहकृष्ण-वृहत्पण्डितमहापाचादयः।

एवं च गृह्यसूत्रभाष्ये,— "मातृपूजापूर्वकं स्वयमाभ्युदयिकं कृत्वा" इति पद्धतौ यल्लिखितं तदपि सङ्गतम्। शूद्राणां गायत्र्यामधिकाराभावाद् ब्राह्मणद्वारा होमः कार्य इति केचित्, तन्न। तथा सति यागादावपि शूद्रस्याधिकारो न निर्वार्येत। किन्तु वारादिदोषव्यपोहनार्थम्॥

योगस्य [१]होमकरणस्य च धान्यमिन्दोः

(१) हेमकरणस्य।

मांसञ्च तण्डुलमणी क्षितिविवारयोश्च ।
ताराकलायलवणान्यथगाश्चरामे
दद्यात् द्विजाय कनकं शुचिनाड़िकायाम् ॥
इति सामान्यशान्तिः कार्या ।

यदा सर्वत्र हेमदानमात्रम्,—
सर्वदोषोपशान्त्यर्थं हेमदानन्तु केवलम् ।
इति शास्त्रात् ।

विशेषस्तत्कृते आचारसारे द्रष्टव्यः । मनुः,—
ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।

"अत्र व्रते" इति सूत्रेण व्रतार्थे णिनिप्रत्ययः । अयमृतुकाल-गमनविधिरपूर्वविधिः । पुत्रोत्पादनम् प्रत्यप्राप्तस्य ऋतुगमनस्य शास्त्रेण विधानात् । नात्र नियमविधिशङ्का, पुत्रोत्पादने ऋतु-गमनस्य पाक्षिकप्राप्तेरभावात् । नापि परिसंख्याविधिः, ऋतु-गमनस्य पुत्रोत्पादनं प्रति प्राप्तेरभावात् ।

तथाच,— विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्त्यते ॥

यत्तु नियम इति विज्ञानेश्वरैरुक्तम्, तत् पुत्रोत्पादनस्य नित्यत्वात् ऋतुगमनमपि नित्यं इत्यभिप्रायेण । तस्मात् सन्ध्या-वन्दनादिवदृतुगमनमपि नित्यम् ।

यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।

इति याज्ञवल्क्योक्तेरनृतावपि गमने न दोषः । अत एव,—
ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।

तुल्यमाकाङ्क्षतयोर्दोषमयोनौ यश्च सिञ्चति ॥

इति बोधायनोक्तौ अनृतौ यो दोष उक्तः, स ऋतावगन्तृ अनृतुगमने बोध्यः । यद्यपि,—

यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति गर्भं प्राप्य विनश्यति ॥

इति देवलोक्तौ, यथा यमादिवाक्यादिषु ब्रह्महत्यादोषादय उक्ताः । तथापि,—

ऋतुकालाभिगामी स्याद्यदि पुत्रो न जायते ।

इति कौर्मोक्तेरुत्पन्नविद्यमानपुत्रस्य स्त्रीकामनाविरहेऽपि ऋतावगमनेऽप्यदोषः । चतुर्दश्यादिषु नक्षत्रेषु च वर्ज्जनं ततत्काल एव, "निषेधः कालमात्रके" इत्युक्तेः । सङ्क्रान्तिसमयस्य त्वतिसूक्ष्मत्वेन दुर्लक्ष्यत्वात् तदवच्छिन्नाहोरात्रमेव विषयः । "अतीते नागते पुण्ये" इत्यादिवक्ष्यमाणोक्तौ दानविषयत्वम्, न तु स्त्रीतैलमांसवर्ज्जनविषयत्वम् । पुण्यं नाम विहितविधिवद्धकर्म,(१) इति निषेधस्य पुण्यत्वाभावात् । ननु ऋतुदोषहोमप्रायश्चित्ते "गायत्रीहोमः शूद्रस्य निषिद्ध इत्युक्ते." तत्कथं स्त्रीशूद्रयोर्वैदिकमन्त्रानधिकारः कथं वा पौराणिकमन्त्राधिकार इति चेन्न ।

मात्स्ये,— न हि वेदेष्वधिकारः कश्चित् शूद्रस्य विद्यते ।
पुराणेष्वधिकारो मे दर्शितो ब्रह्मणैव हि ॥

इत्युक्तेरधिकारः

एतद्वचनं सङ्करजातिविशेषस्य शूद्रस्येति नात्रोपयुक्तमिति

(१) विहितविधिधर्म्म इति ।

शङ्कनीयम्। यत्र प्रतिलोमस्याप्यधिकारः, तत्र सुतरां शूद्रस्येति कैमुतिकन्यायेन शूद्रविषयत्वसम्भवात्। व्यासोऽपि,—

मन्त्रवर्ज्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च।

अत्र मन्त्रवर्जमिति वैदिकमन्त्रवर्जं इति कल्पतरुकाराः। तेषामयमभिप्रायः। "तच्चोदकेषु मन्त्राख्या" इति जैमिनीयन्यायेन "वेदभेदे गुप्तवादे" इति लौकिककोषप्रामाण्येन च मन्त्रशब्दस्य वैदिकमन्त्रपरत्वमेवेति। अतएव पराशरः,—

कपिलाक्षीरपानेन ब्राह्मणीगमनेन च।

वेदाक्षरविचारेण शूद्रो गच्छत्यधोगतिम्॥

ननु पुराणमधिकृत्य भविष्ये,—

अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना।

श्रोतव्यमेव शूद्रेण नाध्येतव्यं कथञ्चन॥ इति।

तथा,— श्रौतं स्मार्त्तञ्च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम।

तस्मात् शूद्रैर्विना विप्रं न श्रोतव्यं कथञ्चन॥

इत्युक्तेः पुराणमन्त्रेष्वपि कथमधिकार इति चेत् न। निषादस्थपत्यधिकारन्यायेन पुराणनिषेधस्य कर्मोपयोगिपौराणिकमन्त्रविशेषाध्ययनविषयत्वे मानाभावात्।

तस्माद्रथकारादेराधानोपयोगिवैदिकमन्त्रपाठवत् शूद्रस्य कर्मोपयोगिपौराणिकमन्त्रपाठेऽधिकारस्याविरोधात्। एकोद्दिष्टश्राद्धानन्तरं वाराहे,—

अयमेव विधिः प्रोक्तो शूद्राणां मन्त्रवर्ज्जितः।

अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते॥ इति।

इति यदुक्तं, तत्रापि उक्तमन्त्रलक्षणानुसारेण वैदिकमन्त्राणामेवाभावः। ननु पौराणिकमन्त्राणामपि गौणत्वेन तेषां मन्त्रपदप्रयोगविषयत्वात्। अन्यथा गौर्नास्ति इत्यादौ वाहकादेरभावः प्रसज्येत। तस्मादमन्त्रत्वप्रसिद्धिर्वैदिकमन्त्राभावकृतैव।

ननु पौराणिकमन्त्रेऽपि शूद्रस्य नाधिकारः, अध्ययनं विना प्रयोगस्यानुचितत्वात्। अध्ययनञ्च,—

न शूद्राय मतिं दद्यात् नोच्छिष्टं न हविष्कृतम्।

इति ब्राह्मणस्य शूद्रे ज्ञानोपदेशनिषेधान्न सम्भवतीति चेदुच्यते। अत्र मतिशब्दो अध्यात्मविषयकमतिपर एव। शूद्रस्य ब्रह्मविद्यायामधिकाराभावस्य दर्शितत्वात्। विदुरादेस्तुस्वभावतोविद्यत्वेन,[1] इति समाधानम्। तस्मात् शूद्रस्य पौराणिकमन्त्रपाठेऽधिकारः। स च नित्यनैमित्तकेष्वेव कर्मसु, न तु काम्यकर्मसु। काम्य[2]श्रुतीनां लब्धविद्याहिताग्निचैवर्णिकाधिकारिकत्वेनैव अधिकार्यन्तराकाङ्क्षाया अभावात्। अतएव रथकारस्याविद्यत्वादुत्तरक्रतुषु नाधिकार इति दृष्टार्थं तस्याधानमिति मीमांसकसिद्धान्तः। ननु वैदिकमन्त्रसाध्येषु कर्मसु कथमिति चेत् ? उच्यते। "अनुमतोऽस्य नमस्कारो मन्त्र" इति गौतमोक्तेर्वैदिकमन्त्रस्थाने नमः पदरूपमन्त्रोद्देशेनाधिकारः। याज्ञवल्क्योऽपि,—

नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्।

अत्र एवकारादिप्रयोगवत् कारशब्दः प्रयुक्तः। तेन नम इत्येव मन्त्रः। विज्ञानेश्वरैस्तु "नमस्कारमन्त्रो देवताभ्यः पितृ-

(१) स्वतोविद्यत्वेन। (२) कामश्रुतीनां।

भ्यश इत्यादिमन्त्रो नम इति वा" यल्लिखितम्, तत्र प्रथमपक्षस्य अस्माद्देशे नादरः। देवताभ्य इति मन्त्रस्य वैदिकत्वान्मम इत्यस्यैवादरः। ननु मन्त्राणां प्रयोगसमवेतार्थप्रकाशनद्वारा कर्माङ्गत्वात् नमःशब्देन प्रयोगसमवेतस्य कस्यचिदर्थस्य प्रकाशनात् कथं वा मन्त्रत्वं, केन रूपेण वा कर्माङ्गत्वम्, इति चेदुच्यते। जपादिमन्त्राणां कर्मसमवेतार्थप्रकाशकत्वाभावेऽपि अदृष्टद्वारा कर्माङ्गत्ववदुपपत्तिः। कर्मसमवेतार्थप्रकाशनं तु नावश्यकं, स्मार्त्तकर्मसु वाजसनेयिनां पवित्रकरणादेः केनाप्यप्रकाशनात्।

श्राद्धविवेककृद्भिस्तु, अमन्त्रस्येति परिभाषेत्यादि यदत्र विचारितं तदस्मद्भिर्दूषितमनुसन्धेयम्, शूद्राणामामान्नेनैव वैश्वदेवकरणात्।

लौकिके वैदिके वापि हुतोच्छिष्टे जले चितौ।

इति समर्त्तोक्तेर्जल एव होमः कार्यः। उपनयनाभावेन वेदाभावात् ब्रह्मयज्ञस्य न करणम्। यद्वा पौराणिकमन्त्रेण ब्रह्मयज्ञानुष्ठानं, असम्भवे वह्निभिर्नमःपदैर्वा तदनुष्ठानम्। अन्यत् सर्वं "शूद्रा वाजसनेयिनः" इत्यापस्तम्बोक्तेर्वाजसनेयिब्राह्मणवदाचरणीयं इति संक्षेपः। विशेषस्तु तत्र तत्र लेख्यः। अत्र केचित्,—

एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा।
नमस्कारेण मन्त्रेण कुर्यादामान्नवद्बुधः॥

इति सत्यव्रतोक्तेः।

मन्त्रवर्ज्जं हि शूद्राणां द्वादशाहे सपिण्डनम्।

इति विष्णूक्तेः।

लेख्यं। तत्र जन्मप्रकारो याज्ञवल्कीयेऽनुसन्धेयम्। गर्भिणीपतेः क्षौरादिनिषेधः।

तथाच स्मृतिः,—

वहनं दहनं चैव वपनं सिन्धुमज्जनम्।
पर्वतारोहणं चैव न कुर्यात् गर्भिणीपतिः॥

तथा,— नोदन्वतोऽम्भसि स्नायान्न च श्मश्रूादि कर्त्तयेत्।
अन्तर्वत्न्याः पतिः कुर्वन्नप्रजो भवति ध्रुवम्॥

एतदिष्टेतरविषयमित्याचार्याः। यत एतत् प्रकरणे,

आधानपर्वदीक्षासु प्रायश्चित्ते गुरोर्मृतौ।
सन्न्यासे यज्ञकाले च सप्तभिर्वपनं स्मृतम्॥

तथा च अलभ्ययोगादौ समुद्रस्नानम्।

इति जातकर्म।

अथ नामकरणाख्यं कर्म।

"अहन्येकादशे नाम" इतीदमशौचान्तोपलक्षणम्।

अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते।

इति शङ्खवचनात्।

तस्मात् क्षत्रविट्शूद्राः स्वाशौचान्तदिनेषु नाम कुर्युरित्यर्थः। पारस्करः। "दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति, द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरस्थं दीर्घाभिष्ठानम्। कृतं कुर्यान्न तद्धितमयुक्ताक्षरमाकारान्तं स्त्रियै तद्धितम्। शर्म ब्राह्मणस्य, वर्म क्षत्रियस्य, गुप्तेति वैश्यस्य दासेति शूद्रस्य"। इति।

अस्यार्थः, मातुर्दशम्यां दशमदिने उत्थापनम्। अशौचान्ते

नामकरणं, ब्राह्मणत्रयभोजनं नियतम्। घोषवदक्षरं आदौ यस्य नाम्नः तद्घोषवदादि। गघङाः, जझञाः, डढौ णो, दधौ नौ, बभौ मो, यरौ लो, वहौ, घोषवन्तः। अन्तर्मध्ये अन्तं अक्षरं यस्य तदन्तरस्थम्। यरलवा अन्तस्थाः। दीर्घमक्षरमभिष्ठानं अवसानं यस्य तत् तथा। कृतं (कृत्प्रत्ययान्तम्)। यद्वा कृतं पूर्वपुरुषेषु विहितं नाम। तथा च शङ्खः,— "कुलदेवतासम्बद्धं पिता नाम कुर्यात्" इति। कुलसम्बद्धं देवतासम्बद्धं चेत्यर्थः। स्त्रीनाम्नि विशेषोऽयुक्ताक्षरमित्यादि। ब्राह्मणस्य शर्म (मङ्गलप्रतिपादकं नाम)। क्षत्रियस्य वर्म (शौर्यप्रतिपादकं नाम)। वैश्यस्य गुप्तं (धनवत्तादिप्रतिपादकम्)। शूद्रस्य दासेति (प्रैष्यत्वप्रतिपादकम्)। नात्र नाम्नि शर्मादिप्रयोगः, ब्रह्मचर्य्यानन्तरं शर्मादिप्रयोगस्य वक्ष्यमाणत्वात्।

प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छुचिः।
कुमारस्य स विज्ञेयो यावन्मौञ्जीनिबन्धनम्॥

इति वृद्धशातातपोक्तेश्च ब्राह्मणबालकादीनां जन्मावधि न शर्मादि प्रयोगः।

मनुरपि,— माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥ इत्यादि।

तथा,— स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोरमम्।
माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्॥

"दिगिनशिवशताद्दे तत् कुलाचारतो वा" इति ज्योतिर्वचनात्।

नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत्।

पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥

इति मनूक्तेश्च अन्यदापि नामकरणसमाचारः। तत्र दशम-दिनपक्षो नाद्रियते, अशौचानन्तरमन्यपक्षाणां सम्भवात् इत्यभिज्ञाः। कल्पतरुकारास्तु "दशम्यां" इत्यत्र, येषां दशाहात् प्राक् शुद्धिः तेषामित्याहुः।

इति नामकरणम्।

अथ वहिर्निष्क्रमणकर्म।

"चतुर्थे मासि निष्क्रमः"।

मनुः,— चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्।

यत्तु भविष्ये,—

द्वादशे चाहि(?)राजेन्द्र शिशोर्निष्क्रमणं गृहात्।

इति "तत् शाखाभेदात्" इति[१] कल्पतरुकाराः। इदं च बालकस्य चन्द्रतारानुकूले शुभदिने कार्य्यम्। अत्र दिनस्य अनियतत्वात् चतुर्थमासे यथासम्भवं कार्यत्वात्।

एवमन्नप्राशनेऽपि बोध्यम्। चूड़ादिके तु वर्षमध्ये शुभदिने इति बोध्यम्।

इति वहिर्निष्क्रमः।

अथान्नप्राशनम्।

षष्ठेऽन्नप्राशनं मासि। "यत्तु सम्वत्सरेऽन्नप्राशनम्" इति शंख-लिखितवचनम्, तत् गुणफलविषयं इति कल्पतरुकाराः।

इत्यन्नप्राशनम्।

---

(१) विकल्प इति कल्पतरुकाराः।

अथ चूड़ाकर्म।

चूड़ा कार्य्या यथाकुलम्। मनुः,—

प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्।

शङ्खलिखितौ "प्रथमेवर्षे चूड़ाकरणं पञ्चमे वा"।

पारस्करः,—"यथा मङ्गलं वा सर्व्वेषां यद्वा यथाकुलाचारम्"।

यथामङ्गलमिति, धर्मशास्त्रान्तरविहितकालान्तरस्योपलक्षणम्। अतएव केचित् पञ्चमेऽब्दे क्रियते, बहुभिस्तु उपनयनात् पूर्व्वं यदा-कदापि क्रियते।

अत्र विशेषः स्मृत्यन्तरे,—

सूनोर्मातरि गर्भिण्यां चूड़ाकर्म न कारयेत्,
प्राक् पञ्चवत्सरादूर्द्ध्वं गर्भिण्यामपि कारयेत्।
चूड़ाकृतौ शिशोर्माता गर्भिणी चेद्यदा भवेत्,
कृते गर्भविपत्तिः स्याद्दम्पत्योर्वा सुतस्य वा॥

इदं चूड़ादिक कर्म मकरादिमासषट्के,—

चूड़ा माघादिषट्के लघुचरमृदुभे मैत्रहीने सशक्रे,
लग्नशे सत्सु केन्द्रेष्वशुभगगनगैस्त्र्यङ्गिगैर्विष्णुबोधे।
नो रिक्ताद्यष्टषष्ठान्त्यतिथिषु न यमाराद्ययुग्माब्दमासे,
नो जन्मर्क्षेन्दुमासे विधटकुजशशिन्यष्टलग्नार्कशुद्धौ॥

इति ज्योतिःशास्त्रात्।

अत्र माघादिपद सौरमासपरम्। "सौरो मासो विवाहादौ" इत्युक्तेः॥

इति चूड़ाकर्मकालः।

शूद्राणां गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामधेयवहिर्निष्क्रमणान्नप्राशनचूड़ाकरणविवाहाः ॥ इति ॥

अथ विवाहकालाः ।

विष्णुपुराणे,— वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयं ।

मनुः,— त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।

त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

सत्वरः गृहस्थाश्रमे त्वरायुक्तः सन्नित्यर्थः ।

कश्यपः,— अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।

दशवर्षा भवेत् कन्या अत ऊर्द्ध्वं रजस्वला ॥

शतानन्दः,— गर्भादष्टमवर्षे तु दशमे द्वादशेऽपि वा ।

कन्यापरिणयः शस्त इति वात्स्यादिसम्मतं ॥

सम्वर्त्तः,— विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ।

गर्भादिति सर्वचान्वयः ॥

अन्यथा,— कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत् ।

भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयं ॥

इत्यादियमादीनां तु(१) द्वादशवर्षे विवाहे निन्दावचनमनर्थकं स्यात् । अतएव जन्मावधिसप्तमवर्षे गौरीत्वमाह कश्यपः,—

सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।

प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥

भविष्येऽपि,— सप्तवर्षा भवेद्गौरी दशवर्षा तु नग्निका ।

द्वादशे तु भवेत् कन्या अत ऊर्द्ध्वं रजस्वला ॥

(१) जन्मावधिद्वादशवर्षे ।

सप्तमवर्षस्य गर्भाष्टमत्वादिति कल्पतरुकाराः। तथाच मासद्व-याधिकषड्वर्षानन्तरं स्त्रीणां विवाहकाल इत्यर्थः। तस्मिन्नेव वर्षे कन्याया गौरीत्वमिति च सिद्धं। एवं च(१) स्त्रीणां जन्मावध्येकादश-वर्षमभिव्याप्य विवाहकालस्य परमावधिरित्युक्तं भवति।

विशेषं मनुराह,—

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥

दारकर्मणि (दारत्वजनके विवाहे) मैथुने (मिथुनवाच्यस्त्री-पुंससाध्य आधानकर्मणि) न केवलं स्त्रीसाध्यपाकादिकर्मणि। अपि तु उभयसाध्येऽपि सा प्रशस्तेत्यर्थः। "मिथुनसाध्यधर्मपुत्रोत्पत्तौ" इति कल्पतरुकाराः॥

व्यासो विशेषान्तरमाह,—

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि।
जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः॥

तदसम्भवे याज्ञवल्क्यः,—

पञ्चमात्सप्तमादूर्द्धं मातृतः पितृतस्तथा।

मातृतो मातृसन्ताने मातामहादिपिण्डेन सपिण्डामपि पञ्च-मादूर्द्धं उद्वहेत्, पितृसन्ताने पितामहादिपिण्डेन सपिण्डामपि सप्तमादूर्द्धं उद्वहेदित्यर्थः।

तत्राप्यसम्भवे, वशिष्ठः,—

पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा। इति।

---

(१) एतेन।

अथोपनयनकालाः ।

विश्वामित्रयाज्ञवल्क्यौ,—

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।

राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥

अत्र गर्भपदस्य समासे गुणीभूतत्वेऽपि राज्ञामित्यादिष्वप्यन्वयः, अथ शब्दानुशासनं केषां शब्दानामितिवत् ।

गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ।

इति मनूक्तेः ।

नयनमेव नायनं पश्चादुपोपसर्गः । फलकामनायान्तु मनुः,—

ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे ।

राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

उपनयनस्य परमावधिमाह याज्ञवल्क्यः,—

आषोडशाद्वा विंशाच्च चतुर्विंशाच्च वत्सरात्,

ब्रह्मक्षत्रविशां काल औपनायनिकः परः ।

अत ऊर्द्धं पतन्त्येते सर्वधर्मवहिष्कृताः,

सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥

उक्तकालव्यतिक्रमेऽपि व्रात्यस्तोमनामकक्रतुकरणरूपप्रायश्चित्तानन्तरमेव संस्कार्य्य एव इत्यर्थः । स्त्रीणान्तु विवाह एव उपनयनम्,—

वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।

इति मनूक्तेः ।

याज्ञवल्क्यः,— प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।

ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥

तथा,— गुरवे च वरं दत्त्वा स्नायाच्च तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वाप्युभयमेव वा॥
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्॥

गुरवे वरं (अभिलषितं) अभिलषितदानाशक्तौ तदनुज्ञया इत्यर्थः।

पारस्करः,— "त्रयः स्नातका भवन्ति, विद्यास्नातकः व्रतस्नातको विद्याव्रतस्नातकः"। समाप्य वेदमसमाप्य व्रतं यः समावर्त्तते स विद्यास्नातकः यो व्रतं समाप्य वेदमसमाप्य समावर्त्तते, स व्रतस्नातकः। य उभयं समाप्य समावर्त्तते स विद्याव्रतस्नातकः॥

ननु— अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।

इति निषेधेऽपि अस्मद्देशे समावर्त्तनानन्तरं कथं विलम्ब्य विवाह इति चेत्, सत्यम्।

"अभावे कन्यकायाः स्नातकं व्रतं चरेत्, अपि वा क्षत्रियायां पुत्रानुत्पादयीत वैश्यायां वा" इति पैठीनसिवचनात् कलियुगनिषिद्धेषु "बहुकालं ब्रह्मचर्यं" इति निषेधोक्तेश्च अस्मद्देशसमाचारः सङ्गच्छत एव। क्षत्रिय वैश्ययोः कन्याभावात् न तद्विवाहव्यवहारः। शूद्राणां तु यमः,—

शूद्रोऽप्येवंविधः कार्य्यो विना मन्त्रेण संस्कृतः।
न केनचित्समसृजत् छन्दसा तं प्रजापतिः॥

छन्दसा (वेदेन) न समसृजत् (न समयोजयत्)।

माह्ये,— विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा।

मात्रशब्देन विवाहेतरसंस्कारनिवृत्तिः, तथाच यमब्राह्मोक्तिभ्यां

"एतदर्वाङ्निषेधार्थं, न पुनस्तत्प्राप्त्यर्थम्" इति विज्ञानेश्वराः। कल्पतरौ तु "असमानजातीयकन्याविषयमेतदिति"। "सवर्णमातामहकुलविषयमेतदिति" मदनपालः। विमातृसपिण्डेऽपि निषेधमाह सुमन्तुः,— पितृपत्न्यः सर्वा मातरः तद्भ्रातरो मातुलाः। तद्दुहितरश्च भगिन्यः, तदपत्याः भागिनेयाः स्युः, ताः सङ्करकारिण्यस्तस्मात् कुल्यां नोद्वहेदिति। सर्वमिदं सम्भवपरं। अत्यन्तासम्भवे तु सुमन्तुः,— "त्रीनतीत्य मातृतः, पञ्चातीत्यपितृतः"॥ पैठीनसिरपि "त्रीन् मातृतः, पञ्च पितृत इति वा" अत्र "समानजातीये पञ्च, असमानजातीये त्रीनिति व्यवस्थितो विकल्पः" इति कल्पतरौ यद्यप्युक्तं तथापि असदुद्देशे वृद्धैरत्यन्तासम्भवपरमित्येव लिखितं। वृद्धानां तु, पितृबन्धुमातृबन्धुलक्षणं यथा, आदिपुरुषस्य सगोत्रत्वेऽपि पितृसन्तानो भवति। अन्यगोत्रत्वे मातृसन्तानो भवति" इति। "यत्तुपितृस्वसुः स्वसुः पुत्राः" इत्यादिकात्यायनोक्तिमुदाहृत्य तिथितत्त्वकारैः पितृबन्ध्वादिलक्षणं उक्तं। "तत् अशौचे क्रियाकर्त्तुरधिकारे च" असद्देशनिबन्धकारैर्लिखितत्वात् न तल्लक्षणमाद्रियते[1], तत्र आत्मबन्धोरपि उपात्तत्वात्। कश्चिदसद्देशविरुद्धापि दाक्षिणात्यसंग्रहकारिका,—

> चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमीमपि।
> पाराशर्यमते षष्ठीं पञ्चमो न तु पञ्चमीं॥
> पञ्चमः पञ्चमीं कन्यां नोद्वहेदिति यद्वचः।
> पितृपक्षे निषेधोऽयं मातृपक्षे न दूषणं॥

---

(१) ध्रियते। तत्र आत्मबन्धोरपिदाक्षिणात्यसंग्रहकारिका,—।

कूटस्थगणनायान्तु यस्यां पङ्क्तौ वरस्य तु ।
जनको विद्यमानश्चेत् स पक्षः पितृपक्षकः ॥
जननी विद्यमाना चेत् स पक्षो मातृपक्षकः । इति,

विवाहयेदित्यनुवृत्तौ याज्ञवल्क्यः, "असमानार्षगोत्रजाम्" इति ऋषेरिदं आर्षं प्रवरइत्यर्थः। गोत्रं वंशपरम्पराप्रसिद्धं।

आपस्तम्बः,— समानगोत्रप्रवरां कन्यामुढ्वोपगम्यच ।
तस्यामुत्पाद्य पिण्डादं ब्राह्मण्यादेव हीयते ॥

एवं प्रवरैकेऽपि,—
परिणीय सगोत्रां च समानप्रवरां तथा ।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् ॥

इति पार्थक्येन परिगणनात् त्यागश्चोपभोगस्य, न तस्याः।
समानप्रवरां कन्यां गोत्रजामथवापि वा ।
विवाहयति यो मूढ़स्तस्य वक्ष्यामि निष्कृतिं ॥
उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् ।
इति शातातपोक्तेः ।

समानप्रवरस्वरूपमाह बौधायनः,—
एक एव ऋषिर्यावत् प्रवरेष्वनिवर्त्तते ।
तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात् ॥

समानगोत्रत्वं समानप्रवरत्वमित्यर्थः। भृग्वङ्गिरोगणेषु विशेषमाह संग्रहकारः,—
पञ्चानां त्रिषु सामान्यादविवाह स्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं वंशेष्वेकोऽपि वारयेत् ॥

तथाच पञ्चार्षेयाणां त्र्यृषिचयानुवृत्तौ मिथो न विवाहः। त्र्यार्षेयाणां त्र्यृषिद्वयानुवृत्तौ न विवाहः। शेषेष्वेकानुवृत्तौ विवाह इत्यर्थः,—

जमदग्निर्भरद्वाजो विश्वामित्रोऽत्रिगौतमौ।
वशिष्ठः गौतमोऽगस्तिरेषां येऽप्येतुयायिनः॥
येषां तुल्यर्षिभूयस्त्वं नोद्वहन्ति मिथस्तु ते।

एवामष्टानामेकस्यापि येषु प्रवरेष्वनुवर्त्तनं, तेषां मिथो न विवाहः। सर्वर्षितुल्यत्वे च विवाहः स्फुट एव।

कश्यपः,—अनेकेभ्योऽपि दत्तायामनूढ़ायां तु यत्र वै।
वरागमस्तु सर्वेषां लभेतादिवरस्तु तां॥
पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः।
तथा गच्छेयुरूढ़ायां दत्तं पूर्ववरो हरेत्॥

अनेकेभ्यो धनग्रहणपूर्वकं दातुं प्रतिज्ञाय यत्र वहूनां वराणां आगमनं, तत्रादिवरः तां कन्यां लभेत, अन्ये तु पूर्वदत्तमूल्यं लभेरन्नित्यर्थः।

नारदः,—प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य सा चान्यं वरयेद्वरं॥

प्रतिगृह्य वाग्दत्तां स्वीकृत्येत्यर्थः। कात्यायनः,—

प्रदाय शुल्कं गच्छेद्यः कन्यायाः साधनं तथा।
धार्या सा वर्षमेकन्तु देयान्यस्मै विधानतः॥

यमः,—वाचा दत्ता तु या कन्या यदि तस्या वरो मृतः।
न च मन्त्रोपपन्ना सा कन्यका पितुरेव सा॥

मन्त्रोऽत्र पाणिग्राहणिकः।

मनुः,— कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः।

देवराय प्रदातव्या यदि कन्यानुमन्यते॥

अथ पुत्रदुहित्रोरब्दमध्ये प्रतविवाहविचारः।

ज्योतिःशास्त्रे,—

नपुंविवाहोर्द्धमृतुत्रयेण विवाहकार्यं दुहितुश्च यत्नात्।

न मण्डनादुपरि मुण्डनं स्यात् तन्मुण्डनान्मण्डनमत्रमेव॥

तथाच पुत्रोपनयनादूर्द्धं दुहितृविवाहः।

प्रत्युद्वाहो नैव कार्योऽप्येकस्मिन् दुहितृद्वयं।

न चैकजन्ययोः पुंसोरेकजन्ये च कन्यके॥

नूनं कदाचिदुद्वाहो नैकधा मुण्डनद्वयं।

पुत्रीपरिणयादूर्द्धं यावद्दिनचतुष्टयं॥

पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः।

एतत् विमातृकन्याविषयं। अन्यथा स्मृतौ,—

एकोदरप्रसूतानां विवाहो नैकवत्सरे।

विवाहो नैव कर्त्तव्यो गार्गस्य वचनं यथा॥

इति एकोदरवैधर्थ्यं स्यात्। असम्भवे तु,—

विवाहस्त्वेकजन्यानां षण्मासाभ्यन्तरे यदि।

असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत्॥

इत्यादीनामपि वैयर्थ्यं स्यात्। तथा,—

एकोदर्ये क्रतलग्रहणं यदि स्या-

देकोदरस्थवरयोः कुलमेति नाशं।

एकाब्दके तु विधवा भवतीति कन्या,

न ह्यन्तरव्यवहितं शुभदं वदन्ति ॥

अधिकोऽत्र एकलग्नविवाहे दोषः ॥ इति ।

अथ ज्येष्ठपुत्रदुहित्रो र्ज्यैष्ठमासे व्रतविवाहादिविचारः ।

ज्योतिःशास्त्रे,— ज्येष्ठे मासि तथा माघे[1] चौरं परिणयं व्रतं ।

ज्येष्ठपुत्रदुहित्रोश्च यत्नेन परिवर्ज्जयेत् ॥

रत्नमालायां,—

आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न हि पाणिपीड़नं ।

ज्योतिःशास्त्रे,—

जन्ममासि न च जन्मभे तथा नैव जन्मदिवसेऽपि कारयेत् ।

आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न हि जातु मङ्गलं ॥

अत्र जन्ममासि इत्यादित्रिकनिषेधोऽपि ज्येष्ठपर एव ।

अन्यथा,— जन्ममासे च पुत्राढ्या धनाढ्या जन्मभोदये ।

जन्मभे च भवेदूढ़ा कन्या हि ध्रुवसन्ततिः ॥

जन्मोदये जन्मसु तारकासु

मासेऽथवा जन्मनि जन्मभे वा,

व्रते न विप्रोऽध्ययनं विनापि

प्रज्ञाविशेषैः प्रथितः पृथिव्यां ॥

इत्याद्युक्तिविरोधः स्यात् ।

पितृव्येष्ठं विना चान्यो ज्येष्ठपुत्रो न दूष्यति ।

मातृतो ज्येष्ठपुत्रस्येव दोषो वै प्रजायते ॥

---

(१) मार्गे ।

असम्भवे तु ज्योतिःशास्त्रे,—

कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत्।

उत्सवेषु च सर्व्वेषु दिनद्वादशकं त्यजेत् ॥

वृषमासे प्रथमं कृत्तिकानक्षत्रे द्वादशाहं रवेर्भोगः "सौरो मासो विवाहादौ" इत्युक्तत्वात् ॥ ज्येष्ठो (वृषः),—

प्रथमं ज्येष्ठमासस्य माण्डव्यो वर्ज्जयेद्दिनं।

शुभकर्मण्यसज्ञानामष्टौ च मुनिभार्गविः ॥

दशाहं चैव गार्ग्यस्तु द्वादशाहं बृहस्पतिः।

अजभोगाग्रिमं भोगं यावन्मुनिपराशरः ॥

अजोऽत्र मेषमासः तथाच मेषमासान्त्यदिनपञ्चकेऽपि वर्जनं। तावत्प्रभृतिकृत्तिकाप्रवृत्तेरिति पराशराभिप्रायः ॥

अथाशुद्धिकालेषु कर्मकरणाकरणविचारः।

तत्रादावस्मत्कृतशुद्धिसारकारिकाः लिखित्वा पश्चात्ताद्वि-वचनानि लेख्यानि। तथाच,—

कालस्याशुचिताऽधिमासयुग हरिस्वापेऽथ याम्यायने,

गुर्वादित्य उदीरितोभयविधे राशैकतारैक्यतः।

तस्यां सिंहवृहस्पतौ सुरगुरौ बाले च वृद्धे कवौ,

सन्ध्यासंगतवाक्पवार्द्धकवशाचष्टे च शुद्धिं बुवे ॥

लुप्ताब्देऽधिकवत्सरे मकरगे जीवेऽपि कालोऽशुचिः।

तत्रोक्तादिषु सर्वकर्मकरणं देशेषु शिष्टैर्मतं ॥

कालाशुद्धिषु काम्यकर्मकरणं नैवाथ नैमित्तिकं।

नित्यं कार्य्यमिह प्रतिप्रसवमूलं विशेषं बुवे ॥

जातेष्टिं गतिसंयुतां न हि तदा कुर्याद्यथोत्सर्जन-
स्नानादिं ग्रहणोदितं स्वगतिकं जन्माद्यशौचं चरेत्।
पुंसूतिप्रमुखान्नखादनविधिप्रान्तानि कर्माणि षट्,
प्रेतं सर्वमसम्भवयोगविहितं श्राद्धादिकं कर्म च॥
शुद्धे मासि मलीम्लुचे च तनुयाच्छ्राद्धं तु दर्शोदितं,
दानश्राद्धविधी युगादिषु तथा श्राद्धादि मन्वादिषु।
प्रेताब्दोदककुम्भदानमथ नो हि प्रेतपक्षाष्टका-
न्वष्टक्यप्रथितानि जातु मलिने श्राद्धानि कुर्यात्सुधीः॥
श्राद्धे मासि मलेऽधिमासविहितं श्राद्धं त्रिपक्षोदितं,
षष्ठले सति तस्य पूर्णदिवसाधोऽप्यूनषाण्मासिकं।
शुद्धे मासि मृतस्य मासि मलिनेऽप्याद्याब्दिकं साचरे,
दन्यदार्षिकमाचरेद्धि मलिने नष्टस्य मासे मले॥
नव्यस्त्रीगमनं तथा परिणयानन्तर्यभाङ्नूतने-
न्दोर्वेन्द्रापनमत्रनूतनगयाश्राद्धं विदध्यात्सुधीः।
विप्रेशव्रतमब्दपक्षविहितं तत्राय संसर्पके,
क्षीणे मासि विवाहमुख्यरहिताः सत्याः श्रुतेश्च क्रियाः॥
मासश्चाधिक आश्विने यदि भवेत् तत्पूर्वतो वासरा-
नष्टौ चाधिकमासमेव सकलं शुद्धां च शुक्लाष्टमीं।
यावद्व्याप्य शिवार्चनं विरचयेच्चेन्मुख्यपक्षक्षमो-
ऽशक्तः शुद्ध दशाचरेन्नवदिनादिष्वेकपक्षं सुधीः॥

मलमासस्वरूपं ब्रह्मसिद्धान्ते,—

चान्द्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्त्तितः।

गृह्यपरिशिष्टे,—

मलं वदन्ति कालस्य मासमकालविदोऽधिकं।

कालाधिक्यं विष्णुधर्मोत्तरे उक्तं,—

सौरेणाब्दस्तु मानेन यदा भवति भार्गव।

सावने तु तदा माने दिनषट्कं न पूर्य्यते॥

दिनरात्र्यश्च ते राम प्रोक्ताः सम्वत्सरेण षट्।

सौरसम्वत्सरस्यान्ते मानेन शशिजेन तु॥

एकादशातिरिच्यन्ते दिनानि भृगुनन्दन।

वर्षद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते॥

स चाधिमासकः प्रोक्तः सर्वकर्मसु गर्हितः।

सौरवर्षस्य पञ्चषष्ठ्यधिकत्रिशतदिनात्मकत्वं। चन्द्राब्दस्तु चतुःपञ्चाशदधिकत्रिशतदिनात्मकत्वमिति एकादशदिनाधिकत्वं॥ नन्वेवं सति दिनार्द्धन्यूनोऽधिको मास इति चेत्सत्यं। अतएव सिद्धान्ते,—

द्वात्रिंशद्भिर्गतैर्मासै र्दिनैः षोड़शभिस्तथा।

घटिकानां चतुष्केण पतत्येकोऽधिमासकः॥ इति।

ननु आधिक्ये सति मासस्य मलत्वं कुत इति चेत्,

तस्य नपुंसकत्वादित्यवेहि। तथाच, ज्योतिःशास्त्रे,—

असङ्क्रान्तो हि यो मासः कदाचित्तिथिदूषितः।

कलान्तरात्समायाति स नपुंसक उच्यते॥

नपुंसकत्वं कुत इति चेत्, पुरुषस्य सूर्य्यस्य तन्मासेऽभावादित्यवेहि। तथाच, तत्रैव,—

मासेषु द्वादशादित्यास्तपन्ते हि यथाक्रमम्।

शिष्टवाक्यं,— गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलीम्लुचे ।
यान्यायने हरौ सुप्ते सर्वकर्माणि वर्ज्जयेत् ॥
तथा,— बाल्यं वृद्धिं गते जीवे सर्वकर्माणि वर्जयेत् ।

वृद्धिं (वृद्धत्वं) गुर्वादित्यो द्विविधः । एकराशिगतत्वेन एकनक्षत्रगतत्वेन चेति । एकनक्षत्रगतत्वं च भिन्नराशिस्थत्वे सतीति बोध्यं ।

तथाच काश्यपः,—

ऋक्षैकमन्दिरगतौ यदि जीवभानू
शुक्रोऽस्तगः सुरवरैकगुरुश्च सिंहे ।
नारभ्यते व्रतविवाहगृहप्रतिष्ठा-
चौरादिकर्मगमनागमनं च धीरैः ॥

नारभ्यत इत्यनेन आरब्धव्रतं कार्य्यं। ऋक्षैकेत्यत्र मन्दिरं राशिः तथाच बृहस्पतिसूर्य्यौ एकराशिगतौ यदीत्यर्थः। एतेन बृहस्पतेरस्तगमनमप्युक्तं। रविभोग्यनक्षत्रगतत्वमस्तत्वमिति लक्षणात्। गुर्वादित्य इत्युक्तौ सर्वधर्मनिषेधः काम्यपरः॥ अत्र साक्षिवाक्यानि मलमासप्रस्तावे लेख्यानि शुक्रनष्टत्वचातुर्विध्यप्रतिपादकोक्तयो लेख्याः।

उत्तरसौरे,—

गुरोर्मध्यमसंक्रान्तिहीनश्चान्द्रोऽधिवत्सरः ।
वर्ज्यानि तत्र यज्ञार्घप्रतिष्ठादीनि नाकिनां ॥
स्फुटसंक्रान्तिहीनश्चेत् केऽप्याहुरधिमासवत् ।

शतानन्दः,— अतिचारगतोजीवो नैति चेत्पूर्वमन्दिरं ।
लुप्तसम्वत्सरो ज्ञेयः सर्वकर्मसु गर्हितः ॥
सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत् ।

इति देवीपुराणोक्तेः, प्रतिष्ठादौ मकरस्थवृहस्पतिरपि वर्ज्य उक्तः तत्र लुप्तसम्वत्सरे कर्मनिषेधेऽपवादमाह सत्याचार्यः,—

राशिचयं सञ्चरतेऽब्दमध्ये
नायाति पूर्वं यदि लुप्तवर्षं।
जीवो न कर्माणि तदा च
कुर्य्याद्विहाय गौडोड्रविहारदेशान्।

ज्योतिःशास्त्रे मकरस्थवृहस्पतावप्यपवादः,—

नर्मदापूर्वभागेतु शोणस्योत्तरदक्षिणे।
गण्डक्याः पश्चिमे पारे मकरस्थो न दोषभाक्॥

एतदधिसम्वत्सरस्याप्युपलक्षणं, अस्मद्देशशिष्टाचारात्। तथाच लुप्तवर्षाधिकवर्षमकरस्थवृहस्पतिषु सर्वकर्मकरणं निःसन्दिग्धमेव। सर्वास्वपि कालाशुद्धिषु काम्यकर्मणो वर्जनं, न नित्यनैमित्तिकयोरिति सामान्यतः। विशेषस्तु तत्र तत्र लेख्यः।

अथ मलमासकारिका।

काम्यारम्भसमापने न मलिने मासे तु कृच्छ्रादिकं,
आरब्धं हि समापयेत्तदपि यत् मासात्मकं भावनात्।
आरम्भस्य समापनस्य च यदा मध्येऽधिमासस्तदा-
रब्धं कर्म समाचरेदथ नवे तीर्थामरेज्ये त्यजेत्॥
रोगावर्षणशान्तिमुख्यकरणाकालप्रतीक्षासह-
स्यारम्भं च समापनं च मलिने काम्यस्य कुर्याद्बुधः।
नो मुञ्चेत्सकलं तदाश्यगतिकं नित्याग्निहोत्रादिकं
नित्यं सोमभवादि नो गतियुतं भाधानमप्याचरेत्॥

नपुंसकेऽधिके मासे मण्डलं तपते रवेः ॥

शातातपस्त्वाह,—

मलीम्लुचैः समाक्रान्तं सूर्यसङ्क्रान्तिवर्जितं।

मलीम्लुचं विजानीयात् सर्वकर्मसु गर्हितं ॥

यत्तु काठकगृह्ये,—

यस्मिन्मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा।

मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत्।

इति स्फुटमानाश्रितं। द्वात्रिंशद्भिरिति मध्यममानाश्रितमिति न कश्चिद्विरोधः।

लघुहारीतः,—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।

अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥

तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन।

आद्यो मलीम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः ॥

तथाच, शुक्लप्रतिपदादिदर्शान्तोमासः, संक्रान्तिरहितोऽधिमास इत्यापद्यते। दर्शान्तमासः संक्रान्तिद्वययुक्तः क्षयमासः। उभयोरपि मलमलमित्यर्थः। ननु अधिमासे जातस्य उत्तरवर्षेषु कस्मिन् मासे स्नानव्रतपूजादि, मृतस्य तु कुत्र श्राद्धादि अनुष्ठेयमिति चेत्, उच्यते। तस्य उत्तरमासेऽन्तर्भावात् उत्तरमासे तदनुष्ठेयं।

तथाच, ज्योतिःपितामहः,—

षष्ट्या तु दिवसै र्मासः कथितो बादरायणैः।

पूर्वार्द्धं तु परित्यज्य उत्तरार्द्धं प्रशस्यते ॥

इति ज्योतिःशास्त्रे। तथाच एतद्वाक्यमुपजीव्य माधवाचार्य्याः,—

चान्द्रोऽधिमासः संक्रान्तः सोऽन्तर्भवति चोत्तरे।

इति। अत्र कश्चिद्विशेषः सुधीभिरवधेयः॥

तत्र कंचिन्मासं धृत्वा विचारणीयं। तथाच, भाद्रेमासि अधिमासपाते आदौ मलपौर्णमासीपक्षः, तदुत्तरं मलदर्शपक्षः, तदुत्तरं शुद्धपौर्णमासीपक्षः। तत्र कस्यचित् जन्म मलदर्शपक्षे, कस्यचिज्जन्म शुद्धपौर्णमासीपक्षे, तत्राधिमासस्य शुद्धदर्शान्तमासेऽन्तर्भावे सिद्धे सति मलपौर्णमासीपक्षस्य शुद्धपौर्णमासीपक्षेऽन्तर्भावः। मलदर्शपक्षस्य भाद्रशुद्धदर्शरूपे पौर्णमास्यन्तपक्षमाश्रित्य आश्विनदर्शपक्षतया व्यवह्रियमाणेऽन्तर्भावः। तथाच मलमासवर्षे शुद्धपौर्णमासीपक्षे यस्य जन्म, पश्चात्जातस्यापि तदुत्तरशुद्धवर्षे त्वादौ स्नानचक्रपूजा। यस्य मलदर्शपक्षे जन्म, तस्याधिजातस्यापि आश्विनकृष्णपक्षतया व्यवह्रियमाणे कृष्णपक्षे पश्चात् स्नानचक्रपूजा। एवं श्राद्धादौ बोद्धव्यं। अयमधिमासः चैत्रादिसप्तसु मासेषु भवति। तदुक्तं ब्रह्मसिद्धान्ते,—

चैत्रादर्वाक् नाधिमासः परतस्त्वधिको भवेत्।

ज्योतिःसिद्धान्ते,—

घटकन्यागते सूर्य्ये वृश्चिके वाथ धन्वनि।

मकरे वाथ कुम्भे वा नाधिमासो विधीयते॥ इति।

ननु द्विसंक्रान्तमास एष्वेव मासेषु पततीति चेत्, न।

ज्योतिःसिद्धान्ते,—

असंक्रान्तिमासोऽधिमासः स्फुटः स्यात्।

दिसङ्क्रान्तिमास चयाख्य कदाचित् ॥

चय कार्त्तिकादित्रये नान्यदा स्यात् ।

तदा वर्षमध्येऽधिमासद्वय स्यात् ॥

इति, कार्त्तिकादिमासत्रये चयमास । चयमासयुक्ते वर्षे चयमासात् पूर्वं द्वित्रेषु मासेषु मध्ये एकोऽधिमास । चयमासादूर्द्ध्वमपि मासत्रयमध्ये ऽपरोऽधिमास ।

स च ज्योतिःशास्त्रे,—

दर्शद्वय मेषमुख्यैकराशिस्थिते तु चैत्रप्रमुखोऽधिमास ।

दर्शान्त ऊर्ज्जादिकमासि सूर्य्ये राशिद्वयस्थे चयमास उक्त ॥

ननु यथा एकाधिकमासोपेताब्दस्य त्रयोदशमासात्मकत्व । तथा अधिमासद्वयोपेताब्दस्य चतुर्द्दशमासात्मकत्व प्राप्त । न च तद्युक्त,

त्रयोदश तु श्रुतिराह मास चतुर्द्दश क्वापि न चैव दृष्ट ।

इति वचनात् इति चेत्, नैष दोष । असक्रान्तत्वेन अधिकप्रसिद्धियुतयोर्द्वयोर्मध्ये पूर्वस्याधिकत्वनिषेधात् ।

तथाच जावालि,—

एकस्मिन्नेव वर्षे तु द्वौ मासावधिमासकौ ।

प्राकृतस्तत्र पूर्व्व स्यादुत्तरस्तु मलीम्लुच ॥ इति,

प्राकृत शुद्धिकर्मार्ह इत्यर्थ । अतएव चयमासपूर्वस्यासक्रान्तमासस्य सम्यकुसर्पति कर्मणे इति ससर्पनामकत्व । चयमासस्य कर्मानर्हत्वात् अहस पापस्य पतिरहस्पतिनामकत्व ।

तथाच, विवाहादाविति प्रकृत्य ज्योतिर्ग्रन्थे,—

यस्मिन् मासे न सक्रान्ति सक्रान्तिद्वयमेव वा ।

संसर्पांहस्पती मासावधिमासश्च निन्दितः ॥

एतद्वचनमुपजीव्य माधवीये,—

क्षयस्याद्या विवाहादौ संसर्पांहस्पती उभौ।

शुद्धौ श्रौते तथा स्मार्त्ते मलमासो विविच्यते ॥

इति क्षयोत्तरासंक्रान्तमासस्य मलत्वमेव, "उत्तरस्तु मलीमुच" इति वचनात्। नन्वेवं चतुर्दशमासात्मकभावे एकादशात्मकत्व-प्रसक्तिः। तच्च द्वादश मासाः सम्वत्सर इति नित्यवत् श्रुतिविरुद्धं। ननु तर्हि केवलाधिमासस्य त्रयोदशात्मकमपि तद्विरुद्धमिति चेत् न। क्वचित् त्रयोदशमासाः सम्वत्सर इति श्रुतेः। तथा सति क्षयमासोपेते त्रयोदशमासात्मकेऽपि अब्दे द्वयोरसंक्रान्तयोः परित्यागे सत्यवशिष्टाः ससंक्रान्ता एकादशैव मासा इत्यतो नित्यवच्छ्रुति-विरोध इति चेन्न। द्विसंक्रान्तियुक्तस्य क्षयमासस्य मासद्वयत्वेन गणनात्।

तथाच स्मृतिः,—

तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तरः।

मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥ इति।

चालनसंस्काराभावे इदं बोध्यं। "न चलति यदि वै तन्मासयुग्मं विचिन्त्य" इति वटेश्वरसिद्धान्तोक्तेः।

इत्थं मलमासे निरूपिते वर्ज्याविर्ज्यान्युच्यन्ते।

तत्र पैठीनसिः,—

श्रौतस्मार्त्तक्रियाः सर्वा द्वादशे मासि कीर्त्तिताः।

त्रयोदशे तु सर्वास्ता निष्फला इति कीर्त्तिताः ॥

निष्फला इत्युक्तेः काम्यकर्मनिषेधः।

इष्टयादिसर्वकाम्यं तु मलमासे विवर्जयेत्।

इति स्मृत्यन्तरोक्तेः।

नित्ये नैमित्तिके कुर्यात् प्रयतः सन्मलीम्लुचे।

इति वृद्धस्मृत्युक्तेर्नित्यनैमित्तिककरणं।

अधिमासे निपतितेऽप्येष एव विधिक्रमः।

इति स्मृतेरारम्भसमाप्तिमध्ये मलमासपातेऽपि पूर्वारब्धकाम्यं कार्यमेव। आरम्भसमापने तु शुद्धकाल एव,—

असूर्या नाम ये मासा न तेषु मम सम्मताः।

व्रतानां चैव यज्ञानामारम्भाश्च समाप्तयः॥ इत्युक्तेः।

यत्तु काठकगृह्ये,—

प्रवृत्तं मलमासात् प्राक् काम्यं कर्म समापितं।

आगते मलमासेऽपि तत्समाप्यं न संशयः। इति।

तत् मासलमानप्रवृत्तकृच्छ्रचान्द्रायणं हि न सत्रादिविषयं।

गार्ग्यः,— अपूर्वदेवतां दृष्ट्वा शुचिः स्यात्तष्टभार्गवे।

मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत्॥

तथाचापूर्वदेवदर्शनापूर्वतीर्थयात्रे निषिद्धे। मलमासे प्रक्रान्ते दिवसेष्वहःसु गच्छत्सु यदि कश्चिद्बालो बालग्रहब्रह्मराक्षसादिना गृह्येत यदि वा रोगवृद्धिर्महती स्यात्, यदि वा वृष्टिप्रतिबन्धः स्यात्, यदि वा राजद्रोह आपतेत्, यदि वा अभिचारः केनचित् प्रारभ्येत, तत्र मध्यमासस्य समाप्तिप्रतीक्षायां बालादिबाधादिकं स्यात्, तस्मात्तत्प्रतीकारस्य कर्तुमुचितत्वादात्ययिककार्येषु शुद्ध-

नपेचणस्य औत्सर्गिकत्वात्। "वर्य्येव यजेताभिचर्य्यमाणः" इत्यादि वर्त्तमानार्थशानच्प्रत्ययान्तशब्दादिभिः समानकालत्वाविशेषाच्च मलमासेऽपि तादृशकर्म्मणामारम्भः समापनं च कार्य्यमेव। नित्यनैमित्तिकयोरपि यदनन्यगतिकं, तदेव मलमासे कार्य्यं। सगतिकं तु न कार्य्यं। तथाच, काठकगृह्ये,—

मलमासेऽनन्यगतिं कुर्य्यान्नैमित्तिकीं क्रियां।

गृह्यपरिशिष्टेऽनन्यगतिकानि यथा,—

अवषट्कार-होमाख्यपर्व्व चान्द्रायणं तथा।
मलमासेऽपि कर्त्तव्यं काम्या इष्टीर्विवर्ज्जयेत्॥
अवषट्कारहोमाग्निहोत्रोपासनवैश्वदेवादयः।

काठकगृह्ये,—

सोमयागादिकर्म्माणि काम्यान्यपि मलीम्लुचे।
षष्टीष्ठ्याग्रयणाधानचातुर्मास्यादिकान्यपि॥
महालयाष्टकाश्राद्धोपाकर्म्माद्यपि कर्म्म यत्।
स्पष्टमासविशेषस्य विहितं वर्जयेन्मले॥

तथाच वसन्ते विहितस्य सोमयागस्य मलमासे च वर्जनेऽपि शुद्धमासेऽनुष्ठानसम्भवात् सगतिकत्वं।

एवमादि सगतिकनित्यानां वर्जनं। षष्टीष्टिः काठकशाखादौ सिद्धा।

मात्स्ये,— आधानं यज्ञकर्म्माणि प्रायश्चित्तव्रतानि च।
न कुर्य्यान्मलमासेऽपि शुक्रगुर्व्वोरुपप्लवे॥
संक्रान्तिरहिते मासे कुर्य्यादाग्रयणं न वा।

इति पैठीनसिना विकल्पितत्वादाश्रयणस्य सगतिकागतिकयो-रुदाहरणं न विरुद्धं। जातेष्टेऽशौचेऽवसिते यथानुष्ठानं, तथा मलमासेऽप्यवसितेऽनुष्ठातुं शक्यत्वात्सगतिकनैमित्तिकत्वाज्जातेष्टिर्न कार्या। एवमादिसगतिकनैमित्तिकानां वर्जनं।

चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकं।
कार्याणि मलमासे तु नित्यनैमित्तिकं तथा ॥

इति यमवचनादगतिकनैमित्तिकानि ग्रहणस्नानादीनि कार्याण्येव। जन्ममरणान्तर्वाशौचादीनां पावनमानप्रक्तत्वाकदाचरणं। "सूतकादिपरिच्छेद" इत्यादि तद्वचनमुक्तं।

स्मृतिसंग्रहे,— नामकर्म च पुंसूतिः सीमन्तोन्नयनं व्रतं।
मलोम्लुचेऽपि कुर्वीत निमित्तं यदि जायते ॥
जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च।
श्राद्धजातकनामानि येन संस्कारसन्तताः ॥
मलोम्लुचेऽपि कर्त्तव्या इष्टीः काम्यास्तु वर्जयेत् ॥

गौतमः,— दानकर्मणि यच्छ्राद्धं नवश्राद्धं तथैव च।
ग्रहणे पुंसवादौ च तत्पूर्वस्य परस्य च ॥

नवश्राद्धं तु,—चतुर्थे पञ्चमे चैव नवमे दशमे तथा।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमिष्यते ॥

पुंसवादिपदेन पुंसवनसीमन्तोन्नयनजातकर्मनामकरणवहिर्नि-ष्क्रामणान्नप्राशनानां संग्रहः।

तथाच शतानन्दः,—
चूडावर्ज्यमङ्गलं कर्म मलमासेऽपि कारयेत्।

तेषां मावनमानेन ऋषिभिः परिकीर्त्तनात् ॥

एवं च,—नामान्नप्राशनं चौलं विवाहं मौञ्जीबन्धनं।

निष्क्रामं जातकर्म्मापि काम्यं वृषविसर्जनं ॥

अस्तगे च गुरौ शुक्रे वाले वृद्धे मलीम्लुचे ।

उद्यापनमुपारम्भं व्रतानां चैव कारयेत् ॥

इति वृद्धगार्ग्यवचने जातकर्म्मादीनां यो निषेधः स प्रातिस्विक-कालेषु कदाचिदनुष्ठितानां तेषां कालान्तरेऽनुष्ठानपक्षे बोद्धव्य-मिति सर्वं समञ्जसमिति वदामः।

वृहस्पतिः,—

नित्यनैमित्तिके कुर्यात् प्रयतः सन्मलीम्लुचे ।

तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च ॥

गजच्छायालक्षणं लिखितं। अस्या नैमित्तिकत्वेपि पुनर्वचनमेवं-जातीयानां महावैशाखीप्रभृतीनां मलीम्लुचे नित्यनिवृत्त्यर्थमिति केचित्, तन्न।

रोगे चालभ्ययोगे च सीमन्ते पुंसवे तथा।

यद्ददाति समुद्दिष्टं पूर्वचापि न दुष्यति ॥

इति मरीचिवचनात्। तथाच वृहस्पतिवचने गजच्छायापदं अलभ्ययोगोपलक्षणमित्यवगन्तव्यं। अतएव कालादर्शीयसंग्रह-कारिकायां,—

रोगशान्तिरलभ्ये च योगे श्राद्धव्रतानि च।

इति मलमासे कर्त्तव्यत्वेनोक्तं। सर्वनित्यकर्म्मणां मासद्वयेऽपि कार्य्यत्वेन उक्तत्वात् मलमासेऽपि दर्शश्राद्धं युगादिश्राद्धदाने च स्तः।

काम्यस्यापि मन्वादिश्राद्धस्य,—

मन्वादौ च युगादौ च मासयोरुभयोरपि ।

इति मरीचिवचनादुभयत्राप्यनुष्ठानं। अत्र युगाद्युपादानं दृष्टान्तत्वेन। तथाच मन्वादिश्राद्धं युगादिश्राद्धवदुभयत्रापि कार्यमित्यर्थः ॥

अतएव संग्रहकारः,—

युगादिकं मासिकं च श्राद्धं चापरपाक्षिकं ।

मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च ॥ इति ।

आपरपाक्षिकं (अमावास्याविहितं)। तैर्थिकमिति पूर्वदृष्टतीर्थविषयं ।

मात्स्येऽपि,— दर्शे चाहरहः श्राद्धं दानं च प्रतिवासरं ।

गोभूतिलहिरण्यानां मासेऽपि स्यान्मलीम्लुचे ॥

एवं सति,— सम्वत्सरातिरेकेण यदि स्यात्तु मलीम्लुचः ।

तत्र त्रयोदशे श्राद्धं न कुर्यादिधुसंक्षये ॥

इति ऋष्यशृङ्गोक्तिः काम्यामावास्याश्राद्धविषया इति मन्तव्यं। याज्ञवल्क्यादौ तिथिवारविहितं काम्यं श्राद्धं द्रष्टव्यं ।

अतएव जावालिः,—

नित्यं नैमित्तिकं चैव श्राद्धं कुर्यान्मलीम्लुचे ।

तिथिनक्षत्रवारोक्तं काम्यं नैव कदाचन ॥ इति ।

कौथुमिः,— अब्दमम्बुघटं दद्यादन्नं चापि सुसज्जितं ।

सम्वत्सरे विरुद्धेऽपि प्रतिमासं च मासिकं ॥

अष्टकाश्राद्धस्य नित्यत्वात् प्रेतपक्षश्राद्धस्य नित्यकाम्यत्वाच्च

कर्त्तव्यत्वाशङ्कायां वचनबलात्तयोः शुद्धमास एवानुष्ठानं, न मले ॥ तथाच "महालयाष्टके श्राद्धे" इत्यादि काठकगृह्यवचनं पूर्वमुदाहृतं। हारीतोऽपि,—

उपाकर्म तथोत्सर्गं काम्यमुत्सवमष्टकाः।
मासवृद्धौ परा कार्या वर्जयित्वा तु पैतृकं॥

भृगुरपि,— वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयं।
राज्याभिषेकं काम्यं च न कुर्याद्भानुलंघिते॥

नागरखण्डेऽपि,—

नभो वाथ नभस्यो वा मलमासो यदा भवेत्।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः॥

अत्राषाढ़ीमधिकृत्य सप्तमपञ्चमौ द्रष्टव्यौ। "आषाढ्याः प्रथमः पक्षः" इति वचनात्।

अब्दोदकुम्भमन्वादिमहालययुगादिषु।

इति कालादर्शीयसंग्रहवाक्ये तु महालयशब्देन तीर्थविशेषस्य माघत्रयोदश्यां[१] वा विवक्षितत्वमिति माधवाचार्याः। तस्मादधिमासेऽपि सर्वथा न महालयश्राद्धं, नाप्यष्टकाश्राद्धं, तदनुसन्धित्वात्तान्वष्टकाश्राद्धमपि कार्यं। मासिकश्राद्धं मलमासे कार्यं। प्रत्यहं प्रेताब्दोदकुम्भदानमपि कार्यं,—

यत्र वा तत्र वा षष्ठे मासि षाण्मासिकं भवेत्।
त्रैपक्षिकं त्रिपक्षे च पूर्णे स्यात्तदनन्तरं॥

---

(१) मघात्रयोदश्यां।

इति कात्यायनोक्तौ यत्र वा तत्र वा शुद्धे मलीम्लुचेऽपि वा तदनन्तरं षट्चत्वारिंशेऽह्नीत्यर्थः। इति षट्चत्वारिंशद्दिवस एव त्रैपक्षिकश्राद्धस्यानुष्ठानात् मलमासेऽपि त्रैपक्षिकश्राद्धं॥ षाण्मासिकमत्र ऊनषाण्मासिकमित्यर्थः। षाण्मासिकान्तःक्रियमाणतया तस्य षाण्मासिकसंज्ञा।

एकाहेन तु षण्मासं यदा स्युरपि वा त्रिभिः।
न्यूनाः सम्वत्सरश्चैव स्यातां षाण्मासिके तदा॥

इति कात्यायनोक्तेश्च।

तथाच प्रथमषण्मासाभ्यन्तरे मलमासपातेऽपि षष्ठमासपूर्वतिथिरेव प्रथमषाण्मासिकस्य काल इति सिद्धान्तितत्वात् न मलमासेऽपि ऊनषाण्मासिकश्राद्धं "यत्र वा तत्र वा" इत्युक्तेः। शुद्धमासमृतस्यापि द्वादशमासस्याधिमासत्वे तत्रैव सपिण्डीकरणं कार्यं। हारीतः,— असङ्क्रान्ते हि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः।

लघुहारीतोऽपि,—

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः।
क्वचित्त्रयोदशेऽपि स्यादाद्यं त्यक्त्वा तु वत्सरं॥

द्वितीयवर्षादाब्दिकं शुद्धमास एव, न मले।

तथाच, सत्यव्रतः,—

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि।
मलमासे न कर्त्तव्यं व्याघ्रस्य वचनं यथा॥

किन्तु मलमासमृतस्य कदाचित्तस्यैव मासस्य वर्षान्तरे मलत्वे तन्मलमास एव आब्दिकमप्यनुष्ठेयं। तथाच,—

वर्षे वर्षे तु यत् श्राद्धं मृताहे तन्मलीम्लुचे ।
कुर्यात्तच्च प्रमीतानामन्येषामुत्तरत्र तु ॥

पैठीनसिरपि,—मलमासमृतानां तु श्राद्धं यत्प्रतिवत्सरं ।
मललासेऽपि कर्त्तव्यं नान्येषां तु कदाचन ॥

नूतनस्त्रीगमनं, विवाहोत्तरं चन्द्रवन्दापनाख्यं कर्म च मलमासेऽपि कार्यं ।

तथाच स्मृत्यन्तरे,—

सीमन्तं प्रेतकृत्यं च नवगय्या नवः शशी ।
मलमासेऽपि कर्त्तव्यं निमित्तविहितं च यत् ॥

नूतनमपि गयाश्राद्धं तत्र कर्त्तव्यं,

अधिमासे जन्मदिने चास्ते च गुरुशुक्रयोः ।
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥

इति वायुपुराणोक्तेः ।

गणेशव्रते विचार्य्यते । स्कान्दे गणेशव्रतं प्रकृत्य,—

एकमासं द्विमासं वा षण्मासं वत्सरं तथा ।
अथवा गणनाथस्य व्रतं द्वादशवार्षिकं ॥

इति एकमाससमाप्यद्विमाससमाप्यषण्माससमाप्यवर्षसमाप्यद्वादशवर्षसमाप्येषु पञ्चसु पक्षेषु वर्षसमाप्यव्रतपक्षस्य प्रतिमासं प्रतिशुक्लचतुर्थीकर्त्तव्यत्वेन विहितत्वात्तद्वर्षमध्ये मलमासपाते त्रयोदशसु मासेषु कार्य्यमेव । "त्रयोदशमासाः सम्वत्सरः" इति श्रुतेः । त्रयोदशमासात्मकत्वादपि वर्षस्य । ननु "षष्ठ्या तु दिवसैः" इति वचनेन तद्व्रतं उत्तरमास एव कर्त्तव्यं न पूर्वस्मिन्नपीति चेत्, न ।

तादृशवाक्यानां मलमासस्य उत्तरमासशेषत्वप्रतिपादकत्वमिति माधवाचार्य्यैरुक्तत्वात्। "काम्यव्रतादिकर्म्मणां आरम्भसमाप्तिविषयत्वाच्च" इत्यन्ये। तत्र "असूर्य्या नाम ये मासाः" इति तत्रैव लिखितं। तथा मलमासे आरम्भसमाप्ती एव निषिद्धे। आरम्भसमाप्त्योर्मध्यपातिन्यधिमासेऽप्यारब्धकर्मणोऽनुष्ठानस्य सिद्धान्तितत्वात्।

यदि भाद्रमासेऽधिमासः, तदा शुद्धमासे प्रारम्भः, श्रावणे तु समापनस्य विहितत्वात्। भाद्रमासेऽधिमासपातेऽपि न कश्चित् विरोध इति, तदुक्तं सम्वत्सरपक्षमाश्रित्य प्रवृत्तं चेन्मलमासेऽप्यनुष्ठेयमेवेति सिद्धं। नन्वेवं सति आश्विनमासेऽधिमासपातश्चेत् दुर्गाशरदुत्सवः कथं भवेदिति चेत् उच्यते। आरम्भस्य समाप्तिश्चेत् इत्यादि वचनात् षोड़शदिनात्मकः शरदुत्सवः कार्य्यः।

सार्द्धमासात्मकत्वं कथमिति चेत्? उच्यते। "चैत्रशुक्लादिकाः मासाः" इति न्यायेन दर्शान्तमासपक्षे यो भाद्रपदस्य कृष्णपक्षः स एव पौर्णमास्यन्तमासपक्षे आश्विनकृष्णपक्षः, तत्र आश्विनमासात् पूर्वं कृष्णाष्टम्यादि दर्शान्तं दिनाष्टकं समग्रो मलमासः। शुद्धाश्विनमासशुक्लपक्षान्महाष्टम्यन्तं दिनाष्टकं एवं मिलित्वा सार्द्धमासात्मकत्वं नवदिनादिषु पञ्चसु पक्षेसु अशक्ततया कार्य्येषु आश्विनशुक्लप्रतिपदि एव समारम्भः कार्य्यः।

नवाहपञ्चाहत्र्यहद्व्यहैकाहरूपाः पञ्चपक्षाः। तेषु पूर्वपूर्वाशक्तः परं परमेकं पक्षमेव कुर्यात्। एतत्पक्षे प्रजापतिः,—

उपाकर्म च हव्यं च कव्यं दुर्गोत्सवं तथा।
उत्तरे नियतं कुर्यात् पूर्वे तन्निष्फलं भवेत्॥

यथा षोड़शाहपचे 'अथारभ्य महाष्टमीपर्यन्तं' इत्युल्लेखात् कदाचित्तिथिवृद्धौ दिनाधिक्येऽपि न दोषः। तावन्मासाधिक्येऽपि न काचित्क्षतिरिति सर्वं सुस्थं ।

अथ हरिस्वापदक्षिणायनयोः कारिके ।

यद्विष्णौ शयिते व्रतादिगदितं याम्यायने चात्र तत्
कार्यं शारद्वाजपेय इतरत्कर्म प्रतीचावहं ।
नारीनूतनसंगमो नवगयाश्राद्धं च गोदावरी,—
स्नानं नूतनचन्द्रवन्दनविधिः सर्वं परं पूर्ववत् ॥

प्राक्पश्चाच्छयनाद्धरेर्वितनुयाद्याम्यायनेकर्कट-
स्थेऽर्के तौलिगतेऽलिगेऽपि मदनारम्भप्रवेशौ बुधः ।
उद्वाहं तनुयाद्गलौ च निखिले याम्यायने चागती-
न्युग्राणां नरसिंहमातृगिरिजादीनां प्रतिष्ठाविधिं ॥

विनायकव्रतादीनां च हरिस्वापदक्षिणायनयोरेवोक्तत्वात्तयोरपि तेषां करणं। एवं शरद्वाजपेयस्यापि। एवमनन्यगतिकं प्रतीचावहं कर्मापि तत्र कार्यं।

प्रथमपर्वान्तरं कालविलम्बे वक्ततरदोषस्य वच्यमाणत्वादनयोरपि नारीनूतनसङ्गमः कार्यः। गयाश्राद्धं प्रेतपचफलाधिक्योक्तेरशुद्ध-कालेऽपि प्रतिप्रसववचनस्योक्तेश्च कार्यमेव।

गोदावरीस्नानस्य सिंहस्थबृहस्पतावेव विहितत्वात्तत्कार्यं। दम्पत्योर्नवचन्द्रवन्दापनस्य विवाहानन्तरमेव विहितत्वात्समाचाराच्च तदपि कार्यं। अन्यत्सर्वं मलमासवद्बोध्यं। माधवचनान्यप्युक्तानि। नित्य-नैमित्तिकसर्वनिषेधस्य हरिशयनदक्षिणायनयोरौत्सर्गिकत्वेऽपि

श्रावणे भृत्यलाभश्च हानिर्भाद्रपदे तथा ।
पत्नीनाशस्तथाश्विने कार्त्तिके सुर्द्धनानि च ।
मार्गशीर्षे भवेद्धर्म्मं पौषे तस्करतो भयं ॥

इत्यादिमात्स्यवचनाद्याम्यायनानादरवद्धरिशयनस्याप्यनादरेण श्रावणकार्त्तिकयोर्गृहारम्भप्रवेशप्रसक्तौ "आदित्ये यूपकर्किक्रिय[1]-मिथुनघटालिस्थिते" इति ज्योतिर्वचनेन सौरमानेनैव गृहारम्भ-प्रवेशयोः सिद्धान्तितत्वात् हरिशयनात् पूर्वं कर्कटमासे पतिते तथा हरिशयनोत्तरं तुलामासे स्थिते गृहारम्भप्रवेशौ कार्य्यौ। न जातु हरिशयनमध्ये। एवं च मात्स्यादिवचनस्य सावकाशत्वे किमिति निषेधोल्लंघनं कार्य्यमिति सम्प्रदायविदः। वृश्चिकमासस्य दक्षिणायनान्तर्गतत्वेऽपि मात्स्योक्तवचनेनैव गृहारम्भप्रवेशकरणं। विवाहविषये ज्योतिःशास्त्रे,—

वात्स्यो वर्षमनोजमिच्छति तथारेभ्योऽयनं चोत्तरम्,
स्त्रीनामानमृतुं विहाय मुनयो माण्डव्यशिष्या जगुः।
चैत्रं प्रोज्झ्य पराशरस्त्वकथयत् पौषं च दौर्भाग्यदम्,
आषाढ़ादिचतुष्टयं न शुभदं कैश्चित्प्रदिष्टं द्विजैः ॥
आषाढ़े धनधान्यभोगरहिता, नष्टप्रजा श्रावणे,
वेश्या भाद्रपदेऽश्विने च मरणं, भोगार्थिता कार्त्तिके।
पौषे प्रेमवती वियोगबहुला चैत्रे मदोन्मादिनी,
शेषेष्वेव विवाहिता सुतवती नारी समृद्धा भवेत् ॥

---

(१) यूककर्किक्रिय इत्यादि ।

स्त्रीनामानं स्त्रीलिङ्गमित्यर्थः। तथाच वर्षाः शरदिति ऋतु-द्वयं, इति कर्कटादिसौरमासचतुष्टयं वर्ज्यं इत्यर्थः।

आषाढ़ादिबहुव्रीह्यावाषाढ़ः कैश्चिदिष्यते।
माण्डव्यादिवचो दृष्ट्वा मार्गेणं मन्वयथापरे॥

अस्यार्थः। आषाढ़ादिचतुष्टयमित्यत्र आषाढ़ः आदिर्येषां ते आषाढ़ादयस्तेषां चतुष्टयमित्येतद्गुणसंविज्ञानो बहुव्रीहिः। तथाच श्रावणादिषु न विवाहः कार्यः, आषाढ़े तु कार्य एवेत्यर्थः। एवं दक्षिणायनमनादृत्य वृश्चिके विवाहसमाचारः समूलः। "सौरमासो विवाहादौ" इत्युक्तेराषाढ़ादिशब्दानां मिथुनादिपरत्वमेव। अगति-कानां सूतकाद्यशौचग्रहणस्नानादिनवस्त्रीसङ्गमेन्दुवन्दापनादीनां दक्षिणायनमासपक्षेऽपि करणं। मालभैरवादीनां च प्रतिष्ठादि-वाक्यं अयनप्रकरणे लिखितं।

अथ गुर्वादित्ये कारिका।

जीवेऽप्यस्तमितेऽध्वरादिकरणं शस्तं प्रतिष्ठाव्रत-
चौरोद्वाहगृहप्रवेशसदनारम्भा विवर्ज्या हि षट्।
गुर्वादित्य वशन्ति सद्मकरणादीन्यत्र तारुण्यवान्,
जीवश्चेदुदितोऽथवाप्यतरुणः त्याज्ये विवाहव्रते॥

शतानन्दः,—

गुरावस्तं गते वर्ज्याः प्रतिष्ठोद्वाहमेखलाः।
गृहारम्भप्रवेशौ च चूड़ेत्येवं षड़ेव तु॥
अग्न्याधेयादिकं सर्वं गुरावस्तं गतेऽपि च।
कुर्वीतत्तन्निषेधोक्तेरभावादिति निश्चितं॥

रविश्चराशिं संत्यज्य उदितः स्याद्युवा गुरुः ।
रविराशिसमेतोऽपि कदाचिदुदितो युवा ॥
गुरावयुवति त्याज्यं विवाहं प्राह चाङ्गिराः ।
अन्ये तु व्रतमुद्वाहं त्याज्यमाहुर्मनीषिणः ॥
गुरुणा संयुते सूर्ये शुक्रे चास्तमुपागते ।
असौम्यदिवसे प्राप्ते व्रतोद्वाहौ विवर्जयेत् ॥
बाले नवदिनं प्रोक्तं वृद्धे चैव चतुर्दश ।
बाल्यं वृद्धिं गते जीवे शुभकर्म विवर्जयेत् ॥

"गुर्वादित्ये गुरूदयेऽपि कार्यं गृहादि इति गम्यते" इति निबन्धकृतः ॥

अथ सिंहवृहस्पतौ ।

कुर्यात्सिंहवृहस्पतावपि गयाश्राद्धं च गोदावरी-
स्नानं पुंसवनादिकान्नकवलान्तानि स्वकालेषु चेत् ।
षट्चायात्ययिकागतिग्रहणकाद्यालभ्ययोगांस्तथा
नव्यस्त्रीगमनं च सोमयजनाग्न्याधानसोमाध्वरान् ।

अथ शुक्रास्तमये ।

मन्थाश्रतन्नवाप्यवाद्धंकवश्राप्तष्टः कविः प्रोच्यते-
ऽग्न्याधानाद्यखिलं हि वर्ज्यमुदितं तत्राधिमासे यथा ।
एकर्येदुदितो युवा दितिसुताचार्यामराचार्ययो-
रुद्वाहं प्रविहाय सर्वमितरत्कर्त्तव्यमेके जगुः ॥

"न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च वृहस्पतौ" इति गयाश्राद्धं कार्यं । तत्काल एव गोदावरीस्नानस्य कर्त्तव्यत्वात् सुतरां तत्-

करणं। पुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रामणान्नप्राशनानां संस्कारपद्धर्म्मणां कालस्य नियतत्वात्तेषां करणं। निषेधवाक्येषु चूड़ादीनामेवोक्तत्वाच्च, केवलं विहितकालेष्वनुष्ठेयः, उत्क्रम्य कालान्तरे तत्करणप्रसक्तौ सिंहस्थस्यतौ तानि सर्व्वथानुष्ठेयानि। तच तिथिनक्षत्रशुद्धिवत् कालशुद्धेरपि अपेक्षणीयत्वात् ॥

तथाच कालप्रतीक्षासहकर्मणां अगतिकानां प्रेतकृत्याशौचादीनां ग्रहणाद्यलभ्ययोगविहितकर्मणां च करणं। दोषातिशयश्रवणात्तथ- स्त्रीगमनमपि कार्यं "न ऋतुं न कालं पृच्छेत्" इति श्रुतेः। सोमयागे अशुद्धकालस्यानिषिद्धत्वात् आचाराच्च सोमः कार्यः। तथाच तदङ्गाधानस्य सुतरां करणं। "यागकरणनिषेधोऽस्तु भूतिपुत्राभिचारादिकाम्ययागपरा" इति याज्ञिकाः। तच निषेध- वचनानि, शौनकः,—

स्नानं तीर्थगतिव्रतचुरमहादानप्रतिष्ठादिकं।
सिंहस्थे विबुधार्चिते न शुभदं कर्त्तुंस्तथा सूर्य्यगे ॥

सूर्य्यगे गुर्व्वादित्य इत्यर्थः। शातातपः,—

माघ एव यदा माघी सिंहे चैव यदा गुरुः।
व्रतं चौरं तथोद्वाहं गृहकर्म विवर्ज्जयेत् ॥

शतानन्दः,—

माघे च माघी यदि पौर्णमासी,
तस्यां विधौ सिंहगते च जीवे।
नोद्वाहकर्माच च कामरूपे,
समाचरेद्याम्यदिशि प्रशस्तम् ॥

माघे न यदि माघी स्यान्महामाघः स उच्यते।
यशोदाश्चै न कुर्वीत यावत् सिंहगतो गुरुः॥
महामाघीं विनैवाह माण्डव्यः सिंहगे गुरौ।
विवाहवर्जं कर्माणि कुर्य्यादिति वचः शृणु॥
श्रुतिवेधव्रतचूड़ानववधूयज्ञप्रतिष्ठाद्याः।
रविभवनस्थे जीवे कार्या वर्ज्यो विवाहस्तु॥
तत्सर्वं दाक्षिणात्यविषयं। अतएव राजमार्त्तण्डे,—
यात्रां चूड़ां विवाहं श्रुतिविवरविधिं यागसद्मप्रवेशौ,
प्रासादोद्यानहर्म्यामरनरभवनारम्भविद्याप्रदानं।
मौञ्जीबन्धं प्रतिष्ठां मणिरदकनकाधारणं कुर्वते ये,
मृत्युस्तेषां हरिज्ये गुरुदिनकरयोरेकराशिस्थयोस्च॥
गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखा मुनीन्द्राः।
यदा न माघी मघसंगता स्यात्तदा तु कन्योद्वहनं वदन्ति॥
मघाग्र्चं परित्यज्य यदा सिंहे गुरुर्भवेत्।
विवाहस्तत्र कर्त्तव्यो मुनिभिः परिकीर्त्तितः॥
कल्पतरौ देवीपुराणे,—
सिंहसंस्थं गुरुं शुक्रं सर्वारम्भेषु वर्जयेत्।
प्रारब्धं न च सिध्येत महाभयकरं भवेत्॥
पुत्रभ्रातृकलत्राणि हन्यात्शीघ्रं न संशयः।
कारको प्रजते नाशं सन्तानं क्षीयतेऽचिरात्॥
देवारामतड़ागेषु प्रपोद्यानगृहेषु च।
सिंहस्थ मकरस्थं च गुरुं यत्नेन वर्ज्जयेत्॥

इत्यादि नानाविरुद्धवाक्यैः सिंहस्थबृहस्पतौ विवाहोपनयनादि-कर्म्मकरणसन्देहे गुर्वादित्य इत्यादिपूर्वोदाहृतोक्तिबलात् देशाचार-स्थावदातो विचिन्त्य इति सिद्धान्तितत्वात् अपिवा कारणा-ग्रहणे प्रयुक्तानि प्रतीयन्निति जैमिनीयन्यायाच्च विवाहोपनयन-नवतीर्थयात्रादिकं सर्वथा न कार्य्यं इति सिद्धान्तः। अस्मद्देशा-चारस्तु तथैव दृश्यते॥ राजमार्त्तण्डे,—

भवेत् सन्ध्यागतः पश्चादस्तमेति दिनत्रयं।
दिनानि पञ्च पूर्व्वेण सर्व्वकर्म[१] विवर्ज्जयेत्॥
बालो दिनचतुष्कं स्याद्वृद्धः पश्चाद्दमियते।
अर्द्धं सन्ध्यागतः शुक्रस्त्रिधाप्येवं विवर्ज्जयेत्॥

तथाच सन्ध्यास्तमितत्वबालत्ववृद्धत्वेषु चतुर्षु शुक्रस्य नष्टत्वं। तत्र सर्व्वकर्म्मवर्ज्जनं। बृहस्पतिः,—

बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते।
मलमास इवैतानि वर्ज्जयेद्देवदर्शनं॥

मलमासदृष्टान्तोपादानान्मलमासे यावन्निषिद्धं, तावत् सर्व्व-मिह निषिध्यते। सकलकाम्यान्यपि वर्ज्ज्यानि। तथा,—

अपूर्व्वदेवतां दृष्ट्वा शुचः सुनष्टभार्गवे।
मलमासेऽप्यनाहन्ततीर्थयात्रां विवर्ज्जयेत्॥

तत्र विचारान्तरमाह शतानन्दः,—

गुरुभार्गवयोरेको यदि स्यादुदितो युवा।
विवाहवर्ज्जमन्यानि कुर्य्यादित्याह चाङ्गिराः॥

---

(१) सन्ध्याकर्म्म।

ब्रह्मसिद्धान्ते,—

रविणास्तिरन्येषां ग्रहाणामस्त उच्यते ।

अर्वागूर्द्धमधस्ताच्च्यात् मौढ्यवार्द्धकशैशवाः ॥

ज्योतिःसागरे,—

तथा मलीम्लुचे मासि सुराचार्येऽतिचारगे ।

वापीकूपतडागादिक्रियाः प्रागीरितास्त्यजेत् ॥

शतानन्दसंग्रहे,—

कुजशुक्रबुधार्काणां फलं वक्रातिचारगं ।

वृहस्पतेस्तु तत्रास्ति पूर्वराशिगतं फलं ॥

तथा,— सत्यं विवाहयज्ञादिविषयं वचनं न तत् ।

किन्तु नष्टव्रतावाप्तौ मनोरथवचः शृणु ॥

यथाचारं गताः सर्वे ग्रहाः स्युः स्वफलप्रदाः ।

नष्टप्राप्तौ तु फलदः पूर्वराशिगतो गुरुः ॥ इति ।

अथ जन्ममरणाद्यशौचविचारः ।

तत्रादावस्मत्कृतशुद्धिसारकारिका लिखित्वा वाचिवचनानि लेख्यानि ।

वाह्यं चाभ्यन्तरं च द्विविधमिति मतं कर्म्मशौचं तु वाह्यम् ।

देहे स्यात्तद्द्विधेऽप्यौत्युभयविधमिदं ज्ञातिजन्मादिजन्यम् ॥

कालस्थानापनोद्यं यदवधि विदितौ जन्मम्रत्यू तथाद्यम् ।

शेषाद्यैः सर्ववर्णेष्वपि जगति सतां यत्र कुत्राप्यशौचम् ॥

कर्म्मशौचं द्विविधं, वाह्याभ्यन्तरभेदात् । तथाच देवलः,—

अशौचं द्विविधं प्रोक्तं वाह्यं चाभ्यन्तरं तथा । इति ।

आभ्यन्तरं कर्म्मशौचं प्रायश्चित्तापनोद्यमघलक्षणं ग्रन्थगौरवभया तन्नात्र विचार्य्यते। बाह्यमपि द्विविधं, शरीरस्य कर्म्मानर्हत्वरूपमेकं। अशौचिसत्त्वाश्रयद्रव्यस्यापीति। इदं च बाह्याशौचं जन्ममरणादिना जायते, स्त्रीणां च्ऋतुप्रसवादिना च। तच्च वक्ष्यमाणकालविशेषेण स्नानेन चापगच्छति।

कालोऽग्निकर्म्म मृदायुर्म्मनोज्ञानं तपो जलम्।

पश्चात्तापो निराहारः सर्व्वेऽमी शुद्धिहेतवः॥

"वर्म्मणोऽजलम्" इति कालो दशाहादिरिति विज्ञानेश्वराः।

देवलः,—जनने मरणे नित्यमशौचमनुधावति।

सपिण्डान् पितृबन्धूंश्च यत्र क्वचन तिष्ठति॥

पितृबन्धवः (समानोदकाः) यत्र क्वचनेति एकग्रामे अन्यत्रापि वेत्यर्थः। जननं मरणं च ज्ञातमेवाशौचनिमित्तं। तस्माद्दिदेशादिवशात् विलम्बेन श्रवणे तु अवशिष्टदिनैरेव शुद्धिर्भवति॥

तथाचादित्यपुराणे,—

अपि दातृग्रहीत्रोश्च सूतके मृतकेऽपि वा।

अविज्ञानेन दोषः स्यात् श्राद्धादिषु कथञ्चन॥

कौर्म्मे,— देशान्तरगतं श्रुत्वा सूतकं शावमेव च।

तावदप्रयतो मर्त्त्यो यावच्छेषं समाप्यते॥

बृहस्पतिरपि,—

अन्यदेशमृतं जातं श्रुत्वा पुत्रस्य जन्म च।

अनिर्गते दशाहे तु शेषाहोभिर्विशुद्ध्यति॥

सापिण्ड्ये तद्दशाहं त्रिदिनमपि समानोदकत्वेऽपि यावत्,

ज्ञानं स्याज्जन्मनाम्नोरपि भवति समानोदकत्वं हि तावत्।
तुर्याद्या लेपभाजो जनकप्रभृतयः पिण्डभाजोऽथ पिण्डोत्-
सृष्टा स्यात् सप्तमस्येत्यपि भवति सपिण्डत्वमासप्तमं तत्॥
जीवः सप्तद्वयान्तान्निगदति पुरुषान् व्याप्य चैकोदकत्व-
मज्ञाने जन्मनाम्नोरपि भवति तदभ्यन्तरे तन्निवृत्तिः।
एवं सत्येव यस्मान्मनुवचनसुराचार्य्यवाचौ विरुद्धे,
न स्यातां तत् सुधीभ्या विदधत सुविचार्य्यैव जीवस्य पचम्॥

वृहस्पतिः,—

दशाहे न सपिण्डास्तु शुध्यन्ति मृतसूतके।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः॥

सपिण्डाश्च मात्स्ये,—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषं॥

मनुः,— सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावश्च जन्मनाम्नोरवेदने॥

एतद्व्याख्याने मेधातिथिः। "स्वप्रपितामहस्य यः प्रपितामह
तदन्वये यावन्तः सप्तमास्ते तस्य सपिण्डा" इति।

समानोदकभावश्च निवर्त्तताचतुर्द्दशात्।

इति वृहस्पतिवचनं।

मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते॥

इति स्ववचनविरोधादेव नादरणीयमिति केचित्। वस्तुत
चतुर्द्दशपुरुषादूर्द्ध जन्मनामज्ञानेऽपि न समानोदकभावः। चतुर्द्दश

पुरुषमध्ये जन्मनाम्नोरज्ञाने मनुवचनस्य सावकाशत्वाद् बृहस्पति-वचनस्य निरवकाशत्वेन बलवत्त्वम्।

तत्रास्मत्पद्ये सपिण्डसमानोदकयोः पौर्वापर्यविपर्यासो निबन्धसौकर्यार्थः।

एकाग्नेरथनग्नेरपि मरणदिनावध्यशौचन्तु साग्नेः,
दाहोर्द्ध्वं दैवतश्चेद्दहनमपि कृतं लौकिकेनाग्निनास्य।
नास्त्यन्याशौचमेतत्तनयकुलभुवां किन्तु दाहो यदाग्नः,
श्रौतेनास्याग्निना स्यात्तदवधि गदितं पर्णदाहेऽस्य तद्वत्॥

श्रौताग्निमतो दाहात् पूर्वं ज्ञातीनां पुत्रस्य च अशौचाभावः।

अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः।
शुद्धिः संचयनं दाहान्मृताहस्तु यथाविधि॥

इत्यङ्गिरः स्मृतेः।

जातुकर्णः,— एकाग्नेर्मरणादूर्द्धमशौचं श्राद्धमेव च।
यस्य तु त्रयमग्नीनां तस्योर्द्ध्वं दाहकर्मणः॥
ऊर्द्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत्।
अधस्तात् कारयेद्दाहादाहिताग्नेर्द्विजन्मनः॥

अतएव विज्ञानेश्वराः "आहिताग्नौ पितरि देशान्तरमृते पुत्रादीनामर्वाक् संस्कारात् सन्ध्योपासनादीनां कर्मणां लोपो नास्ति" इति लिखितवन्तः। तथा चाहिताग्नेर्दैवाल्लौकिकाग्निना दाहेऽपि पश्चात् श्रौताग्निना यदास्थिदाहः ततःप्रभृत्येवाशौचं, तत्पूर्वमशौचं नास्ति, एवं निर्णीते साग्निके पितरि मृते पुत्रस्य दाहादूर्द्ध्वं अशौचं, ज्ञातीनां मरणादूर्द्धमिति शुद्धिशुद्धकारव्यवस्था निरस्तैव।

अस्थ्यभावे पर्णनरदाहस्य उक्तत्वात्तद्दाहेऽपि ततःप्रभृत्येवाशौचं। तथाच छन्दोगपरिशिष्टे,—

विदेशस्थस्य मरणे अस्थीन्यभ्यज्य सर्पिषा।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादि पूर्ववत्॥
अस्थ्नामलाभे पर्णानि शकलान्यूर्णयावृता।
दाहयेदस्थिसंख्यानि ततःप्रभृति सूतकम्॥

आवृता परिपाट्या, सूतकं अशौचम्।

दम्पत्योराहिताग्न्योरपि सति तु वितानाग्निनैकस्य दाहे, पश्चादन्यस्य मृत्यामरणिजनिमताप्यग्निना लौकिकेन। दाहेऽशौचं न दाहावधि भवति परं मृत्युघस्रावधि स्यात्,— श्रौताधानस्य मध्ये यदि भवति मृतिर्मृत्युघस्रावधि स्यात्। दम्पत्योः पूर्वमृतस्य श्रौताग्निना दाहे पश्चान्मृतस्य वक्ष्यमाणोक्त्या लौकिकारणिजन्येनाप्यग्निना दाहे मरणदिनावध्येवाशौचम्। पश्चान्मृतस्येति वचने लौकिकाग्निनेत्युक्तेराहिताग्नित्वाभावात्। तथाचादित्यपुराणे,—

आहिताग्न्योस्तु दम्पत्योर्यस्त्वादौ म्रियते भुवि।
तस्य देहः सपिण्डैस्तु दग्धव्यस्त्रिभिरग्निभिः॥
पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना।
अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः॥
तदभावे पलाशोत्थैः पत्रैः कार्यः पुमानपि।
शतैस्त्रिभिः तथा षष्ठ्या शरपत्रैर्विधानतः॥
वेष्टितव्यस्तथा पश्चात्कृष्णसारस्य चर्मणा।

ऊर्णासूत्रेण संवेष्ट्य प्रलेपश्चस्तथा यवैः ॥
सपिण्डैर्जलसंमिश्रैर्दग्धव्यश्च वृथाग्निना ।
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स्वबान्धवैः ॥"

वृथाग्निः (लौकिकाग्निः) एवं च सति आहिताग्नेरित्यत्र निष्ठान्ते आहिताग्निपदे साङ्गप्रधानक्रियोपरमप्रतीतेराहिताग्निधर्माः साङ्गप्रधानाभिनिर्वृत्त्यन्तरमेव । तथा च संस्कृते कर्मसंस्काराणां तदर्थत्वादिति जैमिनिना पञ्चमाध्यायतृतीयपादे क्तप्रत्ययान्तस्य क्रियोपरमप्रतीतेरेव सिद्धान्तता । एवं च आधानमध्ये यजमानमरणे नाहिताग्नित्वविधिरिति मरणदिनावध्येवाशौचम् ।

आशौचे कर्मणां नो भवति किल निषेधान्वयो येन तत्त्वा,
तस्मिन् सन्ध्यादिके स्यादपि विहितनिषिद्धत्वयोगाद्विकल्पः ।
किन्तु स्यात् पर्युदासस्तदिदमभिहितं सम्भवत्यत्र यद्यत्,
सन्ध्यादि स्यादुपास्यं भवति हि तदशौचाहभिन्नेष्वहःसु ॥

तथाशौचे कर्मनिषेधविचारः । तत्र कात्यायनः,—

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।

इत्यादिषु अशौचे कर्मणां निषेधः, येन विहितप्रतिषेधे विकल्पः स्यात् । किन्तु पर्युदासः । यत्सन्ध्यादिकमुपास्यं, तदन्यत्राशौचदिनेभ्य इति । तथा च विष्णुपुराणे,—

सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥ इति ।

विभ्रमो (भयं विनाशाकुलता) अत्र निबन्धकृतः जननमरणाशौच एव पर्युदासः सन्ध्याया अकरणत्वप्रतिपादकवहुक्तिश्रव-

णात्। विभ्रमातुरभयेषु सति सम्भवे कार्य्यतैव। असम्भवे लकरणेऽपि न दोष इति तात्पर्य्यम्।

सन्ध्या स्मार्त्ताग्निहोमः श्रुतिपठनमुखाः पञ्चयज्ञाश्च दाना-
दाने स्मार्त्तं च कर्म त्रिविधमहिमरुक्संक्रमस्नानदाने।
दर्शश्राद्धादि पित्र्यं न भवति तु भवेज्जातकर्मापि षष्ठाह-
हाद्युक्तं प्रेतकर्मादशमदिनमथ स्नानमुख्यं ग्रहे च॥

ग्रहो(ग्रहणं)। अशौचे केषाञ्चित् कर्मणां लोप एव, केषाञ्चित्तन्मध्येऽपि करणं। केषाञ्चित्तदनन्तरमेव करणमिति व्यवस्था क्रियते।

अत्र जावालिः,— सन्ध्यापञ्चमहायज्ञा नैत्यकं स्मृतिकर्म च।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया॥ इति।

ननु सन्ध्याया अशौचेऽप्यपरित्यागः, पुलस्त्य आह,—

सन्ध्यामिष्टं चरुं होमं यावज्जीवं समाचरेत्।
न त्यजेत् सूतके वापि त्यजन् गच्छेदधोगतिम्॥

इत्यत्र विरोधाभावः, कथमिति चेत्? उच्यते, पुलस्त्यवचनस्य मानसिकसन्ध्याकरणे तात्पर्य्यम्, न तु साक्षात् सन्ध्याकरणे।

मृतके सूतके चैव सन्ध्याकर्म समाचरेत्।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः॥

इति वचनान्तरात्, अञ्जलिप्रक्षेपमात्रस्य वक्ष्यमाणत्वाच्च। नैत्यकशब्देन आवश्यककर्त्तव्यनैमित्तिकानामपि संग्रहः। अनारम्भकाम्यानां तु सर्व्वत्र सर्वथा निवृत्तिः। तथा च कालिदासधर्षिनिनः,—

"स्मार्त्तं च कर्म त्रिधा त्याज्यं" इति। त्रिधा (नित्यं नैमित्तिकं काम्यं च) रविसंक्रान्तिस्नानादिकं नैमित्तिकत्वादवर्ज्यम्।

न च नैमित्तिकोच्छेदः कर्त्तव्यो हि कथञ्चन।

इति वाक्यस्य प्रामाण्ये सूतिकादिमध्यपतितजातकर्मसञ्चयनादिविषयत्वमिति सर्वनिबन्धकृतः।

यमशङ्खौ,—दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च।

प्रेतपिण्डक्रियावर्जमशौचे विनिवर्त्तते॥

तेन दर्शेष्टिकादिश्राद्धानां पितृकर्मत्वान्निवृत्तिः। होमोऽत्र स्मार्त्तः, श्रौतस्याप्यनुष्ठेयत्वात्। तथा च पारस्करः, "नित्यानि विनिवर्त्तेरन् वैतानवर्जं" इति।

मार्कण्डेयः,—षष्ठेऽह्नि रात्रियागन्तु जन्मदानाञ्च कारयेत्।

रक्षणीया तदा षष्ठी निशा तत्र विशेषतः॥

जन्मदानां षोडशमातृणां षष्ठी षष्ठी देवी निशां निशां व्याप्य अत्यन्तसंयोगे द्वितीया।

प्रजापतिः,— एवं प्रेतक्रियायान्तु पूर्वाशौचं न बाधकम्।

स्मृत्यन्तरे,— ग्रहणे शावमाशौचं विमुक्तौ सूतकं स्मृतम्।

एवं ग्रहमुक्तेरपि स्नाननिमित्तत्वम्। अतएव लिङ्गपुराणे,—

चन्द्रसूर्यग्रहे स्नायात् सूतके मृतकेऽपि वा।

अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति॥

तद्विहितश्राद्धदानादिकमप्यत्र कार्यम्। तथा च तत्रैव,—

सूतके मृतके चैव न दोषो राहुदर्शने।

तावत्कालं भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते॥

अत्र यत् शुद्ध्यभिधानं तद्दानश्राद्धार्थमेव, पूर्वेण स्नानस्य प्राप्तेः।
यत्तु,— सूतके मृतके चैव न दोषो राहुदर्शने ।
स्नानमात्रं च कर्त्तव्यं श्राद्धदानविवर्ज्जितम् ॥
इति गौड़देशीयसम्वत्सरधृतवाक्यम् । तत्र मूलं न दृश्यते ।
श्राद्धे त्रैपक्षिकैकादशदिनविहिते चाब्दिकं मासिकान्यू,
नाब्दोत्पन्नं सपिण्डीकृतिरपि न भवेदूनषाण्मासिकं च ।
प्रेतश्राद्धेस्त्रि(१)पत्राभिहितमपि भवेद्योजनं नो निरग्नेः,
किन्तु श्राद्धान्यशौचव्यपगमदिवसे तान्यवश्यं भवेयुः ॥
योजनं सपिण्डीकरणं ।
स्मृतिः,— मासिकार्थे तु संप्राप्ते कदाचिन्मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शे वापि मनीषिणः ॥
मासिकार्थे मासिकाभिधेये कर्मणीत्यर्थः । तथा च एकादशाहश्राद्धस्य ऊनमासिकसञ्ज्ञत्वात् त्रैपक्षिकश्राद्धस्य सार्द्धमासिकत्वात् ऊनषाण्मासिकोनसाम्वत्सरिकयोः षाण्मासिकसञ्ज्ञत्वात् सपिण्डीकरणस्य द्वादशमासे विहितत्वाच्च एकादशाहत्रैपक्षिकोनषाण्मासिकोनसाम्वत्सरिकसपिण्डीकरणानि मासिकश्राद्धवदशौचानन्तरदिवसे कार्याणीत्यर्थः । अत्र यत् "दर्शे" इति पक्षान्तरं । तदशौचान्तदिने विघ्ने सतीति बोध्यम् । "एकादशे नवश्राद्धे" इति वक्ष्यमाणोक्तेः एकादशाहश्राद्धप्रस्तावे तस्य ऊनमासिकसञ्ज्ञत्वं वक्तव्यम् । मन्वेवं सति,—

आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

(१) प्रेतश्राद्धेषि इत्यादि ।

इति शङ्खवचनस्य का गतिरिति चेदुच्यते, अत्र केचित् विज्ञानेश्वरोलिखितमपि तदभिप्रायमुन्नीय द्वादशाहाद्यशौचिचत्रियादिपरतया समादधते। तन्न सम्यगिति प्रतीमः। तथा- शौचापगम इति विष्णुना सर्वसाधारण्येन एकादशाहश्राद्धम- शौचापगम एवोक्तम्।

मात्स्येपि,—तत एकादशाहे तु द्विजानेकादशैव तु।

चत्रादिः सूतकान्ते तु भोजयेदयुतोद्विजान्॥

इति चत्रादीनामशौचान्त एकादशाहकृत्यमुक्तम्। अतएव कल्पतरुकारैर्मृतेऽहनि तु कर्त्तव्यमिति याज्ञवल्कीयवचने एका- दशाहपदमशौचान्तोपलक्षणमिति व्याख्यातम्।

राज्ञां तु दशमः पिण्डो द्वादशेऽहनि दीयते।

वैश्यस्य पञ्चदशमे ज्ञेयस्तु दशमस्तथा॥

शूद्रस्य दशमः पिण्डो मासे पूर्णे हि दीयते।

इत्यादि पुराणोक्तौ पूरकपिण्डदानस्य चत्रादीनां द्वादशदि- नादिपूक्तत्वात् पूर्वमुत्तरषोड़शाधिकाराभावात्। अतएवाचाभि- युक्ता आद्यं श्राद्धं अशुद्धोऽपीत्युक्तेः कल्पतरुकारादिभिरना- दृतत्वेन अननुष्ठानलक्षणमप्रामाण्यं इत्याहुः। अतएव पर्णदाहादि- प्रयुक्तत्र्यहाशौचादौ अशौचान्तदिन एव एकादशाहश्राद्धसमाचारः सङ्गच्छते। न त्वेकादशाहपर्यन्तापत्तेति कामधेनुकारः। अतएव आद्यश्राद्धमिति संज्ञा ब्राह्मणस्य सर्ववर्णोत्तमत्वादधिकेन व्यपदेशा- भवन्तीति न्यायादेकादशोक्तिरिति सिद्धं। यदि आद्यं श्राद्धमिति शङ्खोक्तेः कामादर्शकारादृतत्वेन प्रामाण्यमङ्गीकार्यम्, तर्हि तद्देशी-

यानां वैकल्पिकं तदिति वोध्यं नवसद्दे शीयानाम् । एवं निरग्नि-पुत्रेण साग्निकस्य पितुः विपचे सपिण्डीकरणं कार्यमिति यदुच्यते तदप्यशौचान्त एव कार्यम् । "देये पितॄणां श्राद्धे" इत्युग्रशङ्ग्रोक्ते मासिकार्थं इत्युक्तौ, संग्रहीलाच ।

अस्पृश्यस्पर्शनोक्ताप्लवनमिव सदा स्नानमत्राप्यमन्त्रम् ।
प्राणाहुत्यः समन्त्राः परमिह तदपोशानयुग्मं समन्त्रम् ॥
सावित्र्याः प्रास्य नीराञ्जलिमिह च परिक्रम्य सन्ध्यानिषेधे ।
सूर्यं वन्देत कर्मैयदय भगवतो वन्दनादीनि न स्युः ॥

स्मृतिः,— सूतके मन्त्रवत्कर्म स्मार्त्तं नैव समाचरेत् ।
अपोशानद्वयं मुक्त्वा तथाप्राणाहुतीरपि ॥

एवं च प्रातःस्नानं मन्त्ररहितं कार्य्यम् । विण्मूत्रचाण्डालादि-स्पर्शविहितस्नानस्य शौचेऽप्यमन्त्रकत्वात्सुतरामत्राप्यमन्त्रकत्वम् ।

ननु,— अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।
अहुत्वा च कृमीन् भुङ्क्ते अदत्वा विषभोजनम् ॥

इति जावालिवचनात् । भोजननिमित्तयोर्जपस्नानयोरशौचेऽपि कार्यत्वमिति चेत्, न । नैमित्तिकानामप्यच निषिद्धत्वात् । अथवा एतद्वाक्यस्याशौचेतरदिनेषु सावकाशत्वेन सर्वकर्मत्याग-स्मृतेर्निरवकाशत्वेन बलवत्त्वात् तदाक्येकदेशोक्तस्मार्त्तहोमदानयो-रपि कार्यत्वपाताच । नमच नैमित्तिकस्य निषेधे चण्डालाद्यस्पृश्य-स्पर्शनिमित्तस्नानस्य नैमित्तिकत्वादकरणं प्रसज्येत इति चेत्, न । शक्तिविषये न मुहूर्त्तमप्रयतः स्यादित्यापस्तम्बोक्तनिषेधपरिपालन रूपेण शौचस्य कार्यत्वं न तु नैमित्तिकत्वात् ।

सन्ध्यानिषेधे पैठीनसि,—"साविव्याऽञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं नमः कुर्यात् एतावत् कार्यं" इति। तस्मात् सर्वथा जपो न कार्य्यः। जपस्य किञ्चित्करणमिति केचिद्वदन्ति, तन्न चारु। वाचनिकेऽर्थे शङ्काया अनुचितत्वात्। किञ्च "पूर्वां सन्ध्यां जपंस्तिष्ठेत्" इत्यादिना अञ्जलिप्रक्षेपजपयोः सन्ध्याया प्राधान्यात्तन्निषेधस्य निरवकाशत्वं स्यादिति सङ्क्षेपः। वाराहे द्वात्रिंशदपराधमध्ये,— "उच्छिष्टे चैव वा शौचे भगवद्वन्दनादिकम्" इति गणनात् भगवद्वन्दनादिकं न कार्य्यम्। उच्छिष्टे लेपाद्यशौचे। अशौचे सूतकाद्यशौचे।

शारीरं स्याद्व्रतोक्तं निखिलनियमनं कार्त्तिकादिव्रतेषु,
प्रारब्धेष्वेव देवापचितिवितरणे किन्तु वान्यैर्विधेये।
यद्वाद्यान्तेषु कार्यं यजनवितरणे पञ्चगव्याशनान्ते,
तद्वत्कार्यस्त्वरेयू रजसि परमुपोष्यादसौयास्तु रात्रौ॥

लिङ्गपुराणे,—

प्रारब्धे तु व्रते पश्चादशौचं यदि जायते।
शरीरनियमं कार्यं पूजादानविवर्जितं॥
अशौचान्ते ततः स्नात्वा पञ्चगव्यकृताशनः।
देवं पूर्व्वोक्तविधिना[१] दक्षिणां दापयेत्तदा॥
भवेद्रजस्वला नारी यदैव व्रतवासरे।
भवितव्यं तदाप्येव शरीरक्लेशयुक्तया॥
यस्मिन् दिने भवेच्छुद्धा विधिं तस्य समाचरेत्।

(१) सपूज्य विधिना।

व्रतस्य राजशार्दूल नैव खण्डक्षतं भवेत् ॥

अङ्गिराः,— प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तेन तद्व्रतं तासामुपहन्यात्कदाचन ॥
स्वभाव एष नारीणां ज्ञेयो मूत्रपुरीषवत् ।
ततोऽर्थाच्च प्रदुष्यन्ति चरेयुरेव तद्व्रतम् ॥

तथा,— नियमस्था यदा नारी प्रपश्येदन्तरा रजः ।
उपोष्यैव च ता रात्रीः शेषं स्नात्वा व्रतञ्चरेत् ॥

गारुड़पुराणे तु पचान्तरम्,—

अन्यैर्दानादिकं कार्यं कायिकं स्वयमेव तु । इति ।

अतएवैकादशीप्रस्तावे, माधवाचार्याः,—स्त्रीणां रजोदर्शनेऽपि न व्रतत्यागः । किन्तु देवार्चनादिरहितं सूतकादाविव उपवासमात्रं कार्यमित्यादि ।

देवार्चार्चान्यगोचैर्हरिगिरिशशिवाब्रह्मपूजा तु नित्या,
मानसैकादशी श्रीमधुरिपुयजनं मानसं वाघघान्ते ।
आरब्धं पूर्वरिक्थैर्व्रतसुरयजनं स्यादथारब्धजाप्यं,
स्नौचाद्य तीर्थयात्राद्यनुदिवसमिह स्यादघान्ते समाप्यम् ॥

देवार्चार्चा देवप्रतिमायाः पूजेत्यर्थः । व्रतरूप सुरयजनं शरत्कालीनदुर्गोत्सवादि । पूर्वरिक्थैरशौचात् पूर्वमञ्चितद्रव्यैः । जप एव जाप्यम् । तीर्थं गङ्गागयादि । यात्रा श्रीगुण्डिचादिदेवोत्सवः । अशौचे सर्वकर्मनिषेधेऽपि "नार्चयित्वा तु यो भुङ्क्ते" इत्यादिविशेषवाक्ये विष्णुब्रह्महरदुर्गाणां पूजायाः कार्यत्वशङ्कायां नैमित्तिकत्वात् स्नानजपवत् निषिद्धत्वेऽपि,

स्नात्वा नित्यं च निर्वर्त्त्य मानस्या क्रियया तु वै ॥
वाह्यक्रियाक्रमेणैव ध्यानयोगेन पूजयेत् ।

इति यमोक्तिवलान्मानसी पूजैव कार्या। पुष्पाञ्जलित्रयदानं अष्टपुष्पिकापूजा कार्येति कैश्चिद्यल्लिखितं तन्न चारु। अशक्तिविषये तयोर्विधानादशौचे प्रसराभावात् ।

यत्तु राघवभट्टेन,—जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।
नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् ॥

इति लिखितं तदशौचाभावकत्वात् यतिब्रह्मचार्यादिविषयम् ।
तथा च,— असपिण्डगृहे नीत्वा पूजनीयः सदाशिवः ।

इति वाक्यादसगोत्रगृहे पूजा कारयितव्या। सदाशिव इत्युपलक्षणाद्विष्णवादिदेवानामपि। एवं च सति "प्रतिष्ठितार्चा न त्याज्या यावज्जीवं तदर्चनम्" इति हयशीर्षवाक्यस्य ब्राह्मणान्तरद्वारा करणान्न विरोधः ।

स्कान्दे, चन्द्रशर्मणो वैष्णवार्चाप्रतिज्ञायां,—"मया भक्त्या प्रकर्त्तव्यं प्रत्यहं पूजनं तव" इति वाक्यं भगवत्प्रीतिरूपफलकामनया यावज्जीवकृतसङ्कल्पस्यैवादेयमिति केचित्, वस्तुतस्तु नित्यारब्धायाः विष्णुपूजायाः सन्ध्यादिनित्यकर्मवत् अशौचेतरदिनविषयत्वमेवेति सर्वं समञ्जसम् । एकादश्यां तु मानस्येव पूजा,

सूतकेऽपि नरः स्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते ॥
मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः ।

इति वाराहोक्तेः ।

माधवीये तु पक्षान्तरमुक्तम्। तथा च एकादशीं प्रकृत्य,

मात्स्ये,— सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम्।

दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते ॥ इति।

सूतके मृतके चैव चिरश्शौचं न विद्यते।

यज्ञे विवाहकाले च देवयागे तथैव च ॥

इति वाक्यात् प्रारब्धशरत्कालीनदुर्गोत्सवादिव्रतेषु नाशौचम्।

अशौचिद्रव्यस्य पूजानर्हत्वेऽपि तदर्थपूर्वसञ्चितद्रव्यैः पूजा।

बृहस्पतिः,— विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके।

पूर्वसङ्कल्पितं द्रव्यं न दुष्यति कदाचन ॥

लैङ्गे,— सूतकान्मृतकात्पूर्वं धर्मार्थं यत्प्रकल्पितम्।

द्रव्यं तेन यजेद्धीमांस्तथैवोत्पादितैरपि ॥

पैठीनसिः,— विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि।

न तत्र सूतकं तद्वत् कर्म यज्ञादि कारयेत् ॥

विष्णुः,— व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे।

प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इतीदं सहस्रनामादिस्तवोपलक्षणम्।

सर्वसङ्कल्पितेऽर्थे च तस्मिन्नाशौचमुच्यते।

इति यमोक्तेः। तस्मादुक्तानां तत्तत्कर्मसु नाशौचम्। किन्तु बहु-दिनसाध्यानि प्रारब्धस्तवपाठजपहोमादिकर्माणि कालप्रतीक्षासहानि चेत्तर्हि अशौचमध्येऽपि प्रत्यहमनुष्ठायाशौचान्त एव समाप्यानि।

दुर्भिक्षप्राणरक्षाशमकरणविपत्त्यादिदेशादिभङ्गा-

दिष्वारम्भः समाप्तिः स्तवपठनजपादेर्भवेतां न दोषः।

पूर्वारब्धे विवाहव्रतमदनजलाधारदेवप्रतिष्ठा-

दानश्राद्धादिकृच्छ्रादिकमघपतने स्यात्समाप्यं तदापि ॥

नाशौचम् क्वचिदित्यनुवृत्तौ ब्राह्मे,—

अकालमृत्योः शान्त्यर्थं महादाने च रोगिणाम्।

दुर्भिक्षप्राणरक्षार्थं क्षतयज्ञस्य देहिनः ॥

राष्ट्रभङ्गे स्थितस्याथ पुत्त्रदारांश्च रक्षतः।

ग्रहोपतापशान्त्यर्थं क्रियमाणे च कर्म्मणि ॥

तथोपसर्गात्स्वं देहं रक्षमाणस्य नो भवेत्।

महादानपदं शान्तिमात्रोपलक्षणम्।

दक्षः,— स्वस्वकालं त्विदं सर्व्वम् शौचन्तु परिकीर्त्तितम्।

आपद्गतस्य सर्व्वस्य सूतकेपि न सूतकम् ॥

विष्णुः,—"न देवप्रतिष्ठाविवाहयोः पूर्व्वसम्भृतयोः" देवप्रतिष्ठा-
पदं सर्व्वप्रतिष्ठोपलक्षणम्, विवाहपदं व्रतादेरुपलक्षणम्।

याज्ञवल्क्यः,— ऋत्विजां दीक्षितानाञ्च यज्ञे कर्म्मणि कुर्व्वताम्।

सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥

दाने विवाहे यज्ञे च संग्रामे देशविप्लवे।

आपद्यपि च कष्टायाम् सद्यःशौचं विधीयते ॥

ब्राह्मे,— निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्म्मणि।

देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥

छन्दोगपरिशिष्टे,— न दीक्षणात् परं यज्ञे न कृच्छ्रादि तपश्चरन्।

आदिपदम् प्रारब्धकर्म्मोपलक्षणम्, तस्मादेतेषाम् प्रारब्धे-
ऽशौचस्याबाधकत्वात् यागवत् समाप्तिरित्यभियुक्ताः।

कृच्छ्राद्यन्तङ्गहोमद्विजभुजिकरणे दातृभोक्त्रोर्न दोषो
नित्यासक्तस्य कृच्छ्रादिकविधिषु समारम्भणे नापि दोषः।
आरम्भो नाम यज्ञे वरणमुपयमादौ तु नान्दीमुखं स्यात्
श्राद्धादौ पाकसिद्धिर्व्रतविधिषु च सङ्कल्प उक्तोऽपि सद्भे॥
अशौचं नो भवेदित्यनुवृत्तौ,

ब्राह्मे,— नित्यं व्रतपरस्यापि कृच्छ्रचान्द्रायणादिषु।
निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने॥

तथाच सन्ततकृच्छ्रचान्द्रायणाद्याचरणशीलस्य कृच्छ्राद्यारम्भेऽप्यशौचं नास्ति। कृच्छ्रहोमादिसमाप्तौ ब्राह्मणभोजनकर्मणि दातृभोक्त्रोश्च नाशौचम्।

विष्णुः,— आरम्भो वरणं यागे सङ्कल्पो व्रतसत्रयोः।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया॥
निमन्त्रणं तु श्राद्धेऽपि आरम्भः स्यादिति स्मृतिः।

व्रतजापयोरिति पाठान्तरम्। निमन्त्रणपक्षस्यास्मद्देशे नादर एव। "श्राद्धादौ तु पचिक्रिया" इत्यादि स्मृत्यन्तरे केवलपाकसिद्धेरेवोक्तत्वात्।

आशौचघ्नं सपिण्डानृत इतरजना दातुरन्नं दयोर्वा-
शानेऽन्नोयुम्भं कामादननुषितनयाणुर्यदा वा समाघाः।
भुक्तेऽपि तु दातः पतति सति तदन्नामुनी मन्यजेयु-
र्यांगोदाहादिमध्ये सति तु यदपरे दद्युरन्नं तदद्युः॥

मनुः,— उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानाद्यमस्ति नेषान्तु दशाहेन विशुध्यति॥

उभयत्र सूतके मृतके चेत्यर्थः। अपि दात्वशौचोस्तेत्यादि पुराणवाक्याद्दातुरज्ञानेऽन्नस्यादुष्टत्वेऽपि,

उभाभ्यामपरिज्ञाने सूतकं नैव दोषकृत्।
एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत्॥

इति षट्त्रिंशन्मतवाक्याद्दोषः।

या तु,— सूतकेऽपि कुलस्यान्नमदोषं मनुरब्रवीत्।

इति यमोक्तिः। सा ज्ञातीनां स्ववंश्यान्नभुक्तिपरा,

अशौचमध्ये यत्नेन भोजयेच्च सगोत्रजान्।

इति ब्राह्मोक्तिः।

आदित्यपुराणे,—

विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात्।

विष्णुः,—ब्राह्मणानामशौचे यः सकृदेवान्नमश्नाति तस्य तावदेवाशौचं यावत्तेषामशौचं, अशौचव्यपगमे प्रायश्चित्तं कुर्यात्। इति।

एवं च सकामाशौचान्नभोजने प्रायश्चित्तोक्तेस्तन्निषिद्धमेव। अकामभोजने तु अशौचिसमाशौचाचरणम्।

आदित्यपुराणे,— भोजनार्द्धे तु सम्प्राप्ते विप्रे दातुर्विपद्यते।
यदा कश्चित्तदोच्छिष्टशेषं त्यक्त्वा समाहितः॥
आचम्य परकीयेन जलेन शुचयो द्विजाः।

विपद्यत इति जायत इत्यस्याप्युपलक्षणम्।

तथा च षट्त्रिंशन्मते,—

भुञ्जानेषु च विप्रेषु त्वन्तरा मृतसूतके।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः॥

पुनः आदित्यपुराणे,—

विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा ।

शेषमन्नं परैर्दद्यात् दाता भोक्तुंश्च न स्पृशेत् ॥

दद्यात् दापयेत् इत्यर्थः । न स्पृशेत् अशौचप्रयुक्तदोष इति शेषः ।

विवाहयज्ञयोरिति सर्वोत्सवोपलक्षणम् ।

तथा षट्त्रिंशन्मते,—

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।

परैरन्नं प्रदातव्यं भोक्तव्यञ्च द्विजोत्तमैः ॥

प्रेतान्नं सूतिकान्नं यदि परसदने क्वापि सूते तदाद्या-

घोत्थानं नान्नमाद्यं परशवपतनेऽप्याश्मानिर्हृतेर्नं ।

उत्थान्नं जन्मतः स्याद्दहनि तु दशमेऽथाग्निमत्सन्निदाचो-

रामान्नं मृत्यशौचेऽखिलवचनपरतः सूतके त्वादितोऽद्यात् ॥

न भुञ्जीतेत्यनुवृत्तौ,

मनुः,— उग्रान्नं सूतिकान्नञ्च पर्याचान्तमनिर्दशम् । इति ।

पर्याचान्तं आचमनस्थानस्थम् ।

यमः,— प्रेतान्नं सूतिकान्नञ्च द्वादशाहं यवान् पिबेत् ।

इति यमोक्तौ प्रायश्चित्तोक्तेः तदन्नयोरभक्ष्यता ।

प्रेतान्नं प्रेतमुद्दिश्य शुचिनापि दत्तम् ।

सूतिकान्नं सूतिकामुद्दिश्य पक्वम् ।

आपस्तम्बः,—

अनुत्थितायां सूतिकायामन्तःशवेन च ।

अस्यार्थः, अशौचानधिकारिणोऽपि यस्य गृहे सूतिका,

ग्रानपर्यन्तं तद्गृहे न भोक्तव्यमिति। एवं परगोत्रे शावे गृहे तावत्कालं न भोक्तव्यं इति। "उत्थानं जन्मतोद्दशमदिने" नामकरणप्रस्तावे पारस्करसूत्रं लिखितम्। ननु अन्तःसूतके त्थानादाशौचं सूतकवदिति पारस्करसूत्रान्तरे एकादशदिने नपदं प्रयुक्तमिति चेत्? उच्यते। आउत्थानादित्यत्र आङो विध्यर्थता। तथा च उत्थानदिनमभिव्याप्याशौचमिति। एका-दिने अशौचापगम इति न कश्चिद्विरोधः।

राः,— न दोषस्त्वग्निहोत्रिणाम्।

सूतके शाव आशौचे लक्षिसञ्चयनात्परम्।
अन्नसत्रप्रवृत्तानामाममन्नं विगर्हितम्॥
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत्।

अग्निहोत्रिणां सदान्नदानशीलानाञ्च सूतकाशौचे पञ्चदिन-।मान्नग्रहणे सूतके आद्यदिनतोऽपि आमान्नग्रहणे च न :। पक्वान्नभक्षणे प्रायश्चित्तम्।

अग्नीषोमीयपर्यन्तमपि न हि मतं दीक्षितस्यान्नमाद्यम्,
किन्त्वापद्येव सोमक्रयण इह कृते भोज्यमेवं विपत्तौ।
यज्ञेऽपेक्ष्यं हि यद्यद्द्रविणमिदमवस्थाप्य वाद्यं तदन्यत्,
चातुःप्राश्ये तु भक्ष्यं न हि निगदितमाधानकर्माङ्गभूते॥

यः,— ब्रह्मोदने च सोमे च सीमन्तोन्नयने तथा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्॥

ब्रह्मोदनं आधानाङ्गभूतं चातुःप्राश्यं, अत्र चत्वारः ऋत्विजः अश्नीति विधिः। सोमोऽग्नीषोमीयपशुपर्यन्तम्। "अग्नीषोमीय-

संस्थायां यजमानस्य गृहे न भोक्तव्यम्”इति श्रुतेः । “क्रीतराजको भोज्यान्नः” इति आथर्वणश्रुतिरापद्विषया । क्रीतो राजा सोमो येन स तथोक्तः । आपस्तम्बः,—“यज्ञार्थे वा विनिर्दिष्टे भोक्तव्यम्”। अस्यार्थः, यज्ञार्थम् यावद्द्रव्यमपेक्षितं तावति द्रव्ये पृथक्कृते अवशिष्टाद्दीक्षितस्यान्नं भोक्तव्यमिति एतदप्यापद्विषयमेव ।

दुग्धेदध्याज्यतैलाञ्जनफललवणक्षौद्रमांसेषु मूल-
कादौ काष्ठे च मूलौषधतृणसुमनःशस्यशाकेषु पण्ये ।
पक्के सक्थौ यवादौ पचनविरहिते तण्डुलादौ न दोषः,
किन्त्वाशौची न दद्यात् पर उत वितरेदाददीत स्वयं वा ॥

मरीचिः,—लवणे मधुमांसे च पुष्पमूलफलेषु च ।
शाककाष्ठतृणेष्वेवं दधिसर्पिःपयोऽम्बु च ॥
तैलौषधाञ्जने चैव पक्कापक्के स्वयङ्गृहे ।
पण्येषु चैवं सर्वेषु नाशौचं मृतसूतके ॥

अत्र पयःपदं दधिसाहचर्यात् दुग्धपरं । पक्कं सक्थुमोदकगुडादि अपक्कं तण्डुलादि ।

स्मृत्यन्तरे,— लवणं सर्पिर्मांसञ्च पुष्पमूलफलानि च ।
काष्ठं शाकं तृणं तोयं दधिक्षीरं घृतं तथा ॥
औषधं तैलमञ्जनं शुष्कमन्नञ्च नित्यशः ।
अशौचिनां गृहाद्ग्राह्यं स्वयं शस्यञ्च मूलकम् ॥

एतत् सर्वमशौचिगृहगतमपि स्वयं गृह्यमाणं न दोषावहम् । अशौचिना चेद्दीयेत तर्हि दुष्टमेव। तथा च अशौचीतरदीयमान-

मपि न दोषावहम् । अत्र वाक्ये शुष्कान्नपदेन तण्डुलादेर्ग्रहणम्[1] ।
ननु वाक्यद्वयेऽपि अशौचिगृहस्थितजलस्यापि ग्राह्यत्वमिति चेत्, न।
तस्य लब्धन्तासम्भवे लयाचितविषयत्वात् ।

अन्यथा,— सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः ।

पिबेत्पानीयमज्ञानात् सम्यक् स्नायात् स्पृशेत वा ॥

पानीयपाने कुर्वीत पञ्चगव्यस्य भक्षणम् ।

इत्याद्यङ्गिरःप्रभृतिवाक्यमनर्थकं स्यात् । "भोजनकाले अशौचपाते तु अन्यस्य गृहाज्जलमानीय आचमनीयं" इत्याद्यपि व्यर्थं स्यात् ।

विप्रादाशौचयुकाद्दलनप्रभृतिभिः संस्क्रियाभिर्विशोध्यम्,
धान्याद्यं ग्राह्यमामं गदितमपि विपत्तौ तु पक्वान्नवर्ज्जम् ।
विप्रैः सत्शूद्रजातेः परमिह तु पणाः कर्षिकास्ताम्रिकाख्या,
ग्राह्या उक्ता अतोऽस्मिन् रजतमपि हिरण्यादिकं ग्राह्यमाहुः ।

अङ्गिराः,— संस्कारैः शुध्यति ह्यामं धान्यं तेन शुचि स्मृतम् ।

तस्माद्धान्यं ग्रहीतव्यं स्मृतिमूलान्तरेष्वपि ॥

पक्वान्नवर्ज्जं विप्रेभ्यो गौर्धान्यं क्षत्रियात्तथा।

वैश्येभ्यः सर्वधान्यानि शूद्रात् ग्राह्याः पणास्तथा ॥

संस्कारैः दलनादिभिः । "एतच्चापद्गतस्य" इति कल्पतरुकाराः । ताम्रिकाः कर्षिकाः पणाः, पणानां ग्राह्यत्वोक्तेः । रजतादीनामपि ग्राह्यत्वमित्यभियुक्ताः ।

पूर्वाशौचेऽपि तातः सुतजनुषि विलोक्यास्यमस्यापद्दृष्ट्वा,

---

(१) तण्डुलसक्त्वादेर्ग्रहणम् ।

त्वम्। नपुंसकोत्पत्तावपि भूयसः स्त्रीधर्मस्य दर्शनात् स्नानाभावः। तथा च जैमिनिसूत्रं "विरोधिधर्मसमवाये भूयसां स्यात् सधर्मत्वं" इति। अतएव एतत् सर्वं विविच्य कालिदासचर्यिनिभिरप्युक्तं "पुत्रीमज्जनतोऽथ सर्वजननीस्पर्शे दशाहात् शुचिः" इति। पुत्री (पुत्रवान्) न तु तातादिशब्दः प्रयुक्तः गृहपतेर्वक्ष्यमाणस्वगृहस्थितदुहितृप्रसवनिमित्तादिसंसर्गाशौचे पुत्रादिद्वारैव वैश्वदेवादिकरणम्। सर्वार्थत्वादैश्वदेवक्रियादीनामलोपः।

तथाचाङ्गिराः,—अशौचं यस्य संसर्गाज्जायते गृहमेधिनः।

क्रियास्तत्र न लुप्यन्ते गृह्याणां न च तद्भवेत्॥

गृह्याणां गृहभवपुत्रादीनां, गृहद्रव्याणां च इत्यर्थः।

स्मार्त्ताग्नौ कर्म किञ्चिन्न भवति तु सतः पौर्णमास्यस्यचे,-

दारम्भलात् समाप्तौ भवति किल तदाशौचपातेऽपि दर्शे।

श्रौताग्नावग्निहोत्राहुतिमुखमखिलं नित्यकर्माप्यशौचे,

स्नानान्तत्कर्मशुद्धैः स्वयमपि कुलजैरन्यगोत्रैश्च कार्य्यम्॥

यद्यपि,— अक्षतं हावयेत् स्मार्त्ते तदभावे कृताकृतम्।

तथा,— कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्।

व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः॥

इति छन्दोगपरिशिष्टे उक्तम्।

जावालिनापि,—जन्महानौ वितानस्य कर्मत्यागो न विद्यते।

शालाग्नौ केवलो होमः कार्य्य एवान्यगोत्रजैः॥

इत्युक्तम्। शालाग्निः स्मार्त्ताग्निः केवलशब्दात् पञ्चादिपिण्डपितृयज्ञनिषेधः।

पितृयज्ञं चरुं होममसगोत्रेण कारयेत् ।

इति जातुकर्णवाक्यात् चरुपिण्डयज्ञयोर्विकल्प इति। तथापि,—

सूतके मन्त्रवत् कर्म स्मार्त्तं नैव समाचरेत् ।

इति स्मृतेर्न किञ्चित् स्मार्त्ताग्नौ कुर्वन्ति । किन्तु स्मार्त्ताग्नावपि पौर्णमासचरौ कृते त्वमावास्यायामशौचपाते त्वारब्धत्वात् समापनमेव ।

पौर्णमास्यादिदर्शान्तमेकं कर्म प्रचक्षते ।

इत्युक्तेः । श्रौताग्नौ तु पारस्करः,— नित्यानि विनिवर्त्तेरन् वैतानवर्ज्जम् । वैतानिकानि नित्यान्यत्र दर्शपौर्णमास्याग्रयणाग्निहोत्रचातुर्मास्यादीनि ।

व्याघ्रपादः,— "श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्" ।

अशौचमध्येऽपि स्वत्विक् यजमानश्चेत्यर्थः ।

मनुः,— "न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत्" । सनाभ्यः सपिण्डः । तत्कर्म श्रौतेष्वार्त्विज्यं असगोत्रालाभे कर्म कुर्वाणो नाशुचिर्भवेदित्यपि शब्दार्थः ।

नित्यः सोमोऽपि तद्वत् पशुरुपरि तयोः पर्वसत्वान्न कार्या,-
वन्ते पर्वण्यशौचं यदि पतति नवान्नेष्टिरत्रागते स्यात् ।
नाशौचे स्थाप्रवासो न च भवति निजस्यार्त्त्वेस्यादिपत्नौ,
सोऽप्यत्राथ प्रवेशो न च भवति भवेत् पर्वपाते तु सोऽपि ॥

निरूढपशुवत्सोमयोर्नित्ययोरपि पर्वान्तरसावकाशत्वात् नाशौचेऽनुष्ठानम् । आग्रयणमपन्तिमपर्वगतमनन्यगतिकत्वात् अन्तेकार्य्यम् ।

सूतके मृतके चैव यस्य भार्या रजस्वला।
प्रवासे गमने तस्य पुनराधानमिष्यते॥

इत्यशौचे पत्न्या रजस्यपि प्रवासः निषिद्ध एव। तथाप्यात्यायिके कार्ये शुद्धिविधानादेव विपत्तौ तु प्रवासे कार्ये अग्न्युपस्थापनं कार्यम्। तथा प्रवेशोपस्थापनस्य पर्वसन्निधावावश्यकत्वात् कार्यमेव।

पित्रोर्मध्ये दशाहं यदि भवति सुतः साग्निको दर्शपाते,
त्यक्तास्मिन् पैत्रयज्ञं सकलमनुचरेच्छ्रौतदर्शोक्तकृत्यम्।
अस्मिंस्तावत्सपिण्डीकरणमृषिगिरा यन्निषिद्धं विना तत्,-
नो युक्तः पिण्डयज्ञस्तदितरविहितश्रौतलोपः कुतः स्यात्॥

स्मृतिसंग्रहे,— दशाहाभ्यन्तरे यस्य सपिण्डीकरणं भवेत्।
प्रेतत्वं सर्वदा तस्य यावदाभूतसंप्लवम्॥

कार्ष्णाजिनिः,—

सपिण्डीकरणं कुर्यात् पूर्ववच्चाग्निमान् सुतः।
परतो दशरात्राच्चेत् कुह्वन्दोपरीतरः॥

इतरोऽनग्निः।

जाबालिः,— नासपिण्ड्याग्निमान् पुत्रः पितृयज्ञं समाचरेत्।
पापी भवत्यकुर्वन् हि पितृहा चोपजायते॥

"असपिण्डी सपिण्डनमकृत्वा" इति कल्पतरुकाराः।

एवं च दशाहमध्ये दर्शपाते सपिण्डीकरणाचरणस्य निषिद्धत्वात् सपिण्डीकरणं विना च पिण्डपितृयज्ञानुष्ठानस्य निषिद्धत्वात् तमेव विना श्रौतमन्यद्दर्शकर्म कार्यमित्यभियुक्ताः। मातुः पिण्डपितृयज्ञे प्रवेशाभावेऽपि,

एकादशाहं निर्वर्त्य अर्वाग्दर्शाद्यथाविधि ।
प्रकुर्वीताग्निमान् पुत्रो मातापित्रोः सपिण्डनम् ॥

इति वाक्यान्मातुरपि सपिण्डीकरणं कृत्वैव पिण्डपितृयज्ञ-करणमिति । मातृदशाहमध्येऽप्येवम् । विमातुस्तु स्वकाल एव सपिण्डनमिति वक्ष्यते ।

साग्निस्त्वेकादशाहे यदि पतति कुहूर्दादशाहेऽथवान्या-
शौचे कृत्वा सपिण्डीकृतिमपि तनुयात् श्रौतदर्शाद्यकृत्यम् ।
यागोऽशौचे समाप्तो यदि भवति रजो योषितो यागमध्ये,
तच्छुद्धौ तत्समाप्तिस्त्वघविगमभवे पर्वके जातकेष्टिः ॥

वृहस्पतिः,— दादशैकादशे वाह्नि साग्निः कुर्यात्सपिण्डनम् ।
शावाशौचस्य मध्येऽपि कुर्यादेवाविशङ्कयन् ॥

इति पुत्रस्य साग्निकत्वे द्वादशाहे दर्शपातेऽशौचेऽपि द्वादशाहे सपिण्डीकरणम् । एकादशाहदिने दर्शपाते तु एकादशाह एव । अशौचानन्तरं दर्शपाते तु अशौचापगमदिने सपिण्डनम् । दैवे पितॄणामित्युक्तेः ।

ब्राह्मे,— गृहीत मधुपर्कास्य यजमानस्य चर्त्विजः ।
पश्चादशौचे पतिते न भवेदिति निश्चयः ॥
तद्वद्गृहीतदीक्षस्य चैविद्यस्य महामखे ।
स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते ॥

ऋत्विजां मधुपर्कग्रहणानन्तरं यजमानस्य दीक्षायाः पश्चात् पतितमशौचं तत्कर्मसमाप्तिपर्यन्तं न भवतीत्यर्थः । तथाचाशौचेऽपि यागसमाप्तौ न दोषः । यागस्य मध्ये पत्नीरजोदर्शने तत् शुद्धावेव

यागसमाप्तिः। 'यस्य पत्नी अनालम्बुका स्यात् तामवरुध्य यजेत'' इति श्रुतेः।

अनालम्बुका (रजोवती) औतमपि जातेष्ट्यादिकं अशौचाप-गमपतिते आद्ये पर्वणि कार्य्यं, नाशौचमध्ये। तथाच पूर्व-मीमांसायां चतुर्थाध्यायतृतीयपादोनविंशाधिकरणस्य संग्रहकारिका माधवीये,—

जातकर्मानन्तरं स्यादशौचापगतेऽथवा।

निमित्तसन्निधेराद्यः कर्त्तृशुद्ध्यर्थमुत्तरः॥

इति। अशौचानन्तरकार्या जातेष्टिरशौचानन्तरपतिते पर्वण्येव। "य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायाम् पौर्णमास्याम् वा यजेत" इति श्रुतेः। सामान्यतः सर्वासामिष्टीनां पर्वण्येव विधानात्।

अङ्गाशौचं समये भवति हि मृतके स्याच्च तुर्याहमस्मिन्,

खण्डे भागं तृतीयं न तु जनुषि कुले स्नानमस्मिंस्तु बन्धुः।

मातुः सूत्यन्तमेव स्पृशति यदि पिता तां तदन्तः ससूत्या-

शौचोऽङ्गाशौचयुक्ता अपि कुलजमना[१] ह्यादिसर्वाघयोगे॥

सम्वर्त्तः,— ततः सञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते।

ततः पूर्वमङ्गाशौचमित्यर्थः।

अङ्गिराः,— चतुर्थेऽहनि कर्त्तव्यः संस्पर्शो ब्राह्मणस्य तु।

वैश्यस्य पञ्चमे ज्ञेयः सप्तमे च तथा विशः॥

शूद्रस्य दशमेऽप्येवं खण्डाशौचं विभागतः।

---

(१) कुलजजना।

चत्वस्य पञ्चम इत्यादि तु चत्रियादीनां द्वादशाहाद्यशौचपचे, अस्मद्देशे तु सर्ववर्णानां दशाहाशौचपचाश्रयणात् चतुर्थेऽहन्येवाग्नि-चयनमङ्गाशौचं च तावत् ।

देवल,—अशौचकालात् विज्ञेय स्पर्शनन्तु विभागत ।

सूतके तु सूतिकां विना कुलेऽङ्गाशौचाभाव ।

तथाचाङ्गिरा,—सूतके सूतिकावर्जं संस्पर्शो नैव दुष्यति ।

ब्राह्मे तु विशेष,—

अन्यास्तु मातर स्पृशत् तद्गृहं न प्रजन्ति चेत् ।

सपिण्डाश्चैव संस्पृश्या सन्ति सर्वेऽपि नित्यश ॥

शङ्खलिखितौ,—"स्नानोपस्पर्शनादेव पिताशुद्ध, नाडीच्छेदनात् पर दशरात्रपर्यन्तं मातुरप्यङ्गाशौचम्" ।

तथा च हारीतसूत्र,—"अत ऊर्द्धमसमालम्भनमादशरात्रा-दिति" ।

देवलोऽपि,—"माता शुध्येद्दशाहेन" । इति ।

यदि पत्न्यां प्रसूतायां नर सम्पर्कमृच्छति ।

सूतकन्तु भवेत्तस्य यदि विप्र षडङ्गवित् ॥

पारस्कर,—"स्पर्शतस्य पितुर्नेतरेषाम्" । इत्यनेन षडङ्गविदपि ब्राह्मण पिता सूतिकास्पर्शे दशरात्रपर्यन्तमङ्गाशौचीत्यर्थ । अन्यथा तु तत्स्पर्शे स्नानमात्रम् ।

तथाचाङ्गिरा,—संस्पर्शे सूतिकायास्तु स्नानमात्रं विधीयते ।

ज्ञातीनामपि द्वित्रिचतुरादियत्किञ्चिदशौचसन्निपाते लघ्वशौ-चापगमान्तमङ्गाशौचम् ।

तथा च श्राद्धे,— सर्वमङ्गमसंस्पृश्यं तत्र स्यात्सूतके मति ।
सूतकमध्ये सूतके नितरां मृतकमध्ये मृतके ।

पित्रोर्मृत्यां शरीरं गृहमशुचि भवेदर्धमेकं न दैवम्,
पित्र्यं कर्मापि काम्यं परगृहपचनचौद्रमांसाशनं च ।
स्वाध्यायान्याब्दिकाद्युत्सवशुभकरणं चेत्तीर्थादि न स्यात्,
किन्तु स्युर्नित्यनैमित्तिककरणपरप्रेतकृत्यान्यपीह ॥
षण्मासान् स्यादिमातुर्मरण इदमघं स्याच्च भार्याविनाशे,
त्रीन् मासान् स्यादशौचङ्कदितमपि सुतभ्रातृनाशे त्रिपक्षान् ।
तन्मध्ये चेत्सपिण्डीकरणमपि कृतं काम्यकृत्येऽपि वृत्ते,
द्रव्यादानादिरूपेऽधिकृतिरपि मता पूर्त्ते इष्टेऽपि तत्र ॥
दानं नित्यव्रताङ्गं ग्रहणमिहिरसङ्क्रान्तिदाने च पैत्रो,
यज्ञस्थारामनीराश्रयसुरसदनान्यन्नदानञ्च पूर्त्तम् ।
इष्टं त्वातिथ्यमुक्तं श्रुतिपठनतपःश्रौतशालाग्निकार्या,—
न्त्वर्वेदीदानमुक्तं स्मृतिषु निगदितं वैश्वदेवोऽपि सत्यम् ॥
नोद्वाहे दारसत्त्वे त्वधिकृतिरितरान्नादिभुक्तौ महे नो,
दर्शादौ दीपदाने निवपन इह न प्रेतपक्षे गयायाम् ।
नान्येषां तर्पणेनाब्दिक इव जननीवार्षिके नाधिकार,—
स्ताताब्देऽथास्ति ताताब्दिक इह जननीवर्षमध्येऽधिकारः ॥

इति चतुर्भिः कुलकम् । अन्याब्दिकादि इत्यनेन पितृव्यादि-तर्पणस्यापि संग्रहः । इतरान्नादि इत्यनेन मांसमाक्षिकयोः संग्रहः । महे उत्सवे । दर्शादित्यनेन अष्टकान्वष्टकायुगाद्यादीनां संग्रहः । निवपनं, निवापः श्राद्धमिति यावत् । दीपदाने प्रदीपामावा-

स्नायां दीपदाने । गयायामित्यत्रापि निवपन इत्यन्वयः । अन्येषां पितृव्यादीनां इवशब्देन यथा पित्रोर्वर्षमध्ये पितृव्यादितर्पणश्राद्धे न कार्यं, तथा जनकवर्षे जननीवार्षिकमपि न कार्यमित्यर्थः । जननीवर्षे तु जनकसांवत्सरिकं कार्यमितीयान् मातृतः पितुर्भेदः इति सूचनार्थं अथशब्द उपात्तः ।

विश्वामित्रः,— पिता चोपरमेद्यस्य गृहं तस्याशुचिर्भवेत् ।

पितेति मातापुपलक्ष्यते । गृहमिति देहोऽपि ।

तथा च देवीपुराणे,—

प्रमृतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि पित्र्यं स्याद्यावत्पूर्णो न वत्सरः ॥
महागुरुनिपाते च सर्वकर्माणि वर्ज्जयेत् ॥

महागुरुः मातापितरौ ।

पुनर्विश्वामित्रः,—

स्नानं चैव महादानं स्वाध्यायञ्चान्यतर्पणम् ।
प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥

स्नानमिति तीर्थस्नानम् । "तीर्थस्नानं महादानं" इत्येतत् समानम्, यमोक्तेः । स्वाध्यायो वेदपाठः । अन्यतर्पणमिति पितृव्यादिश्राद्धमुपलक्ष्यते ।

शातातपः,— अन्यश्राद्धं परान्नञ्च मधु मांसञ्च मैथुनम् ।
वर्जयेदब्दमेकञ्च महागुरुनिपातने ॥

मधु चौद्रं । मैथुनं विवाहः । यमः,— "माङ्गल्यमुत्सवं काम्यम्" इति निषेधं प्रक्रम्योवाच । इति सामान्यतोऽशौचप्रकरणेऽपि "तथैव

काम्यम् यत्कर्म वत्सरात् प्रथमादृते" इति व्याघ्रोक्तेः काम्येष्वनधिकारो न नित्यनैमित्तिकयोः।

तथा,— अन्येषां प्रेतकार्याणि महागुरुनिपातने।

कुर्युः संवत्सरात् पूर्वं नैकोद्दिष्टं न पार्वणम्॥

इति वृद्धमनूक्तेः।

पितृव्यादीनां प्रेतकार्याणि "नैकोद्दिष्टं न पार्वणं" इति कुलभेदेन द्विविधमप्याब्दिकं न कार्यम्।

विमात्रादिविषये वृद्धमनुः,—

पित्रोरब्दमशौचं स्यात् षण्मासान् मातुरेव च।

मासत्रयन्तु भार्यायास्तदर्द्धं भ्रातृपुत्रयोः॥

मृताविति शेषः। मातुरिति विमातुः पित्रोरिति पूर्वमुक्तत्वात्।

कनिष्ठमातुः षण्मासान् मातापित्रोश्च वत्सरम्।

इति वाक्यान्तरात् अपकृष्य सपिण्डीकरणे कृते काम्येष्वप्यधिकारः। तथा प्रतिग्रहादिष्वपि। तथा च मात्स्ये,—

सपिण्डीकरणादूर्द्ध्वं प्रेतः पार्वणभाक् भवेत्।

वृत्तपूर्त्तेष्टियोग्यस्य गृहस्थस्य ततो भवेत्॥

वृत्तं प्रतिग्रहादि इष्टं यागादि गृहस्थो भवेदित्यनेन पुनः स्वविवाहं कुर्यात्। गृहस्थपदस्य संगृहीतदार एव मुख्यार्थत्वात्। ननु गृहस्थाश्रमविहितकर्मानुष्ठानयोग्यतापरत्वमस्तु? इति चेत् न। लक्षणाप्रसक्तेः मुख्यार्थसम्भवे लक्षणाया अनङ्गीकारात्। अत्र पूर्त्तेष्ट्योः परिगणनं पूर्वाचार्य्यैः कृतम्।

तथाचाग्नेयपुराणे,— वापीकूपतड़ागादिदेवतायतनानि च।

अन्नप्रदानमारामाः पूर्त्तधर्मं च मुक्तिदम् ॥

तथा,— ग्रहोपरागे यद्दानं सूर्यसङ्क्रमणेषु च ।

द्वादश्यादौ च यद्दानं पूर्त्तं तदपि नाकदम् ॥

कात्यायनः । आहिताग्नेः पितृर्च्चनं पिण्डैरेव, तथा ब्राह्मणानपि भोजयेत् पूर्त्तैरिति ।

इष्टलक्षणं महाभारते,—

एकाग्निहोत्रवहनं त्रेतायां यच्च हूयते ।

अन्तर्वेद्याञ्च यद्दानमिष्टं तदभिधीयते ॥

जातुकर्णः,— अग्निहोत्रं तपः शौचं वेदानाञ्चानुपालनम् ।

आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥

द्वादश्यादीत्यादिपदेन जन्माष्टम्यादिव्रताङ्गदानसंग्रहः । एतेन चैत्रतीर्थादियानादीनां अत्रानुक्तेर्न तत्करणं समाचारश्चैवमेव ।

तथा वचनबलात् भार्य्यायां विद्यमानायां विवाहान्तरकरणाभावः । एवं मातापित्रोर्वर्षे सपिण्डीकरणे कृते पितृव्यादितर्पणश्राद्धादिकं न कार्य्यम् ।

यमः,— माङ्गल्यमुत्सवं चैव परपाके च भोजनम् ।

प्रथमेऽब्दे न कुर्वीत योजनेऽपि कृते सति ॥

मधु मांसं परान्नञ्च मैथुनं चान्यतर्पणम् ।

प्रथमेऽब्दे न कुर्वीत सपिण्डीकरणे कृते ॥

वृद्धमनुः,— दीपदानं गयाश्राद्धं श्राद्धञ्चापरपाक्षिकम् ।

प्रथमेऽब्दे न कुर्वीत योजनेऽपि कृते सति ॥

मैथुनमत्र विवाहः, विवाहं विना मिथुनलाभसम्भवात् । ननु

"गृहस्थश्च ततो भवेत्" इत्युक्तौ विवाहः कार्य इत्युक्तम्। अत्र च निषेध इत्युभयोः कथं सङ्गतिरिति चेदुच्यते। विद्यमानपत्नीकेन पत्न्यन्तरस्वीकारो न कार्य्य इत्युभयोर्न्न विरोधः। तथा च पूर्व्वम-विवाहितो मृतपत्नीकश्च विवहेदिति निष्कर्षः। तदेतत् विविच्य "नोद्वाहेदारसले" इत्यस्मात्कारिकायां निविद्धम्। इद्धमनूक्तौ अपरपाचिकमिति अपरपचे विहितामावास्याश्राद्धम्। एतदष्ट-काम्बष्टकायुगाद्यादीनामुपलचणम्। अतएव प्रेतपचश्राद्धमपि न कार्य्यम् तस्य नित्यकाम्यत्वात्। "पितर्य्युपरते" इति वक्ष्यमाणोक्तेः। मातापितृविषये वृहन्मनुः,—

पितर्य्युपरते पुत्रो मातु' श्राद्धान्निवर्त्तते।
मातर्य्यपि च वृत्तायां पितुः श्राद्धादृते समाः॥

समाः सांवत्सरिकं वर्जयित्वा इत्यर्थः। इदं सन्निहितवाक्येन सम्बध्यते, न पूर्व्ववाक्येनापि।

मातर्य्यपि च वृत्तायां श्राद्धं कुर्व्वीत पैतृकम्।
तस्या न वत्सरं कुर्य्यात् प्रेते पितरि च क्वचित्॥

इति शङ्खोक्तेः, इति कृत्यकौमुदीकारादय। कुर्य्यादिति पुनरुपादानात् नञ्च पूर्व्ववाक्ये सम्बन्धशङ्का नास्त्येवेति तन्मत समी-चीनम्। तस्मात् जनकमरणाब्दे मातृवार्षिकमपि न कार्य्यम्। मातृमरणाब्दे तु पितृवार्षिकश्राद्धमात्रं कार्य्यमितीयानेव भेदः। अमावास्यादिनित्यश्राद्धानि उभयोरप्यब्दे न कार्य्याणीति सिद्धान्तः। अत्र विप्रमिश्रैः "वृते समाः" इत्युभयत्रापि योजयित्वा अस्मद्देशे निर्विशान मातृसांवत्सरिकानुष्ठानाद्यसम्बद्धव्यवायाभावादनुसङ्गाधि-

कल्पनायामन्यतरदुभयोः संवत्सरे उभयोः मातृमासिकं कार्यमिति यल्लिखितं तन्न विचारसहम् इत्यलमतिविस्तरेण ।

तथाहि,—

अनुषङ्गाधिकरणेषु असम्बद्धव्यवायाभावो नानुषङ्गनिमित्तम् । किन्तु आकाङ्क्षादिसद्भाव एव तन्निमित्तमिति विचारितं "पितर्युपरते" इति वाक्ये आकाङ्क्षादिविरहान्नानुषङ्गप्रसङ्गोऽपि । अनेनैवाशयेन "मातर्यपि च" इति वाक्यस्य प्रामाण्ये मातृसांवत्सरिके विकल्प इति तैरप्युक्तम् । मूलस्मृतौ तद्वाक्यस्योपलम्भादप्रामाण्यशङ्का दूरापास्तैव । यच्चोक्तं विकल्प इति तत्रापि प्रष्टव्यम् । किं वाक्ययोर्विरोधाद्विकल्प इति कल्पनीयम्? अथवा स्मृत्याचारयोरिति? तत्र न प्रथमः, उभयोर्वाक्ययोरपि संवत्सरे मातृसांवत्सरिकानुष्ठानाभावस्य स्पष्टमभिहितत्वेन विरोधाभावात् तस्माद् द्वितीयः पक्ष आश्रयणीयः । सोऽप्ययुक्तः । तथाचारस्य कृत्यकौमुद्यादिषु अलिखितत्वेन अनादृतत्वात् । स्मृत्यपेक्षयाचारितप्रामाण्येनाचारस्य दुर्बलत्वमिति सिद्धान्ताच्चेत्यलमतिविस्तरेण । विस्तरस्तु अस्मत्कृते शुद्धिसारे द्रष्टव्यः इति चतुरस्रम् ।

अथ बान्धवाशौचशुद्धिः ।

सर्वे वर्णा अहोभिर्दशभिरिह गतैः सङ्कराश्चानुलोम्योत्पन्नाः शुध्यन्त्यथो तेऽभिपवणशुचयः प्रातिलोम्योद्भवाश्चेत् ।
विंशत्या स्त्री शुचिः स्यात् सुतजनुषि दिनैस्त्रिंशता स्त्रीप्रसूतौ,
योषित्पुंसोर्यमलाख्यजनुषि गुरुसदृग्भागतस्त्रिंशतैव ॥

— शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।

| | Rs | As |
|---|---|---|
| Muntakhabu t Tawarikh (Text) Fasc 1-15 @ /6/ each | Rs n | 10 |
| Muntakhabu t Tawarikh (English) Vol I Fasc 1-7, Vol II Fasc 1-5 and 3 Indexes, Vol III Fasc 1 @ /12 each | 12 | 0 |
| Muntakhabu l Lubab (Text) Fasc 1-19 @ /6/ each | 7 | 2 |
| Ma as r i Alamgiri (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Nukhbatu l Fikr (Text) Fasc 1 | 0 | 6 |
| Nizami s Khiradnamah i Iskandari (Text) Fasc 1 2 @ /12/ each | 1 | 8 |
| Riyazu s Salatin (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Tabaqat i Nasir (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Ditto (English) Fasc 1-14 @ /12/ each | 10 | 8 |
| Ditto Index | 1 | 0 |
| Tarikh i Firuz Shahi of Ziyau d din Barni (Text) Fasc 1-7 @ /6/ each | 2 | 10 |
| Tarikh i Firuzshahi of Shams i Siraj Aif (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Ten Ancient Arabic Poems Fasc 1 2 @ 1/8/ each | 3 | 0 |
| Wis o Ramin (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Zafarnamah Vol I Fasc 1-9 Vol II Fasc 1 8 @ /6/ each | 6 | 6 |
| Tuzuk i Jahangiri (Eng ) Fasc 1 | 0 | 12 |

## ASIATIC SOCIETY S PUBLICATIONS

| | | Rs | As |
|---|---|---|---|
| 1 | ASIATIC RESEARCHES Vol VII Vols XI and XVII and Vols XIX and XX @ 10/ each | 50 | 0 |
| 2 | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl @ /6/ per No and from 1870 to date @ /8/ per No | | |
| 3 | JOURNAL of the Asiatic Society for 1843 (12) 1844 (12) 1845 (12) 1846 (5) 1847 (12) 1848 (12) 1866 (7), 1867 (6) 1868 (6) 1869 (8) 1870 (8) 1871 (7) 1872 (8), 1873 (8) 1874 (8) 1875 (7) 1876 (7) 1877 (8) 1878 (8) 1879 (7) 1880 (8) 1881 (7) 1882 (6) 1883 (5) 1884 (6), 1885 (6) 1886 (8) 1887 (7) 1888 (7) 1889 (10) 1890 (11) 1891 (7) 1892 (8) 1893 (11) 1894 (8) 1895 (7) 1896 (8) 1897 (8) 1898 (8) 1899 (8) @ 1/8 per No to Members and @ 2/ per No to Non Members | | |
| | *N B —The figures enclosed in brackets give the number of Nos in each Volume* | | |
| 4 | Centenary Review of the Researches of the Society from 1784-1883 | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan by R B Shaw (Extra No *J A S B* 1878) | 4 | 0 |
| | Theobald s Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No *J A S B* 1868) | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah by E Blyth (Extra No *J A S B* 1875) | 4 | 0 |
| | Introduction to the Maithili Language of North Bihar by G A Grierson Part II Chrestomathy and Vocabulary (Extra No *J A S B* 1882) | 4 | 0 |
| 5. | Anis ul Musharrahin | 3 | 0 |
| 6 | Catalogue of Fossil Vertebrata | 3 | 0 |
| 7 | Catalogue of the Library of the Asiatic Society, Bengal by W A Bion | 3 | 8 |
| 8 | Inayah a Commentary on the Hidayah Vols II and IV, @ 16/ each | 32 | 0 |
| 9 | Jawamiu l ilm ir riyazi 168 pages with 17 plates 4to Part I | 2 | 0 |
| 10 | Khizanatu l ilm | 4 | 0 |
| 11 | Mahabharata Vols III and IV @ 20/ each | 40 | 0 |
| 12 | Moore and Hewitson s Descriptions of New Indian Lepidoptera Parts I-III with 8 coloured Plates 4to @ 6/ each | 18 | 0 |
| 13 | Sharaya-ool Islam | 4 | 0 |
| 14 | Tibetan Dictionary, by Csoma de Körös | 10 | 0 |
| 15 | Ditto Grammar | 8 | 0 |
| 16. | Kaçmiraçabdāmṛta Parts I & II @ 1/8/ | 3 | 0 |
| 17. | A descriptive catalogue of the paintings statues &c in the rooms of the Asiatic Society of Bengal by C R Wilson | 1 | 0 |
| 18 | Memoir on maps illustrating the Ancient Geography of Kasmir by M A Stein Ph D, Jl Extra No 2 of 1899 | 4 | 0 |

| | Rs | As |
|---|---|---|
| Notices of Sanskrit Manuscripts Fasc 1 29 @ 1/ each | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr R. L. Mitra | 5 | 0 |

N. B.—All Cheques Money Orders &c., must be made payable to the "Treasurer, Asiatic Society," only

20-6-1901

**Books are supplied by V-P P**

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1026.



# GADĀDHARA PADDHATAU KĀLASĀRA

BY

GADĀDHARA RĀJAGURU

EDITED BY

SADĀÇIVA MIÇRA

OF PURĪ.

VOL. I, FASCICULUS IV.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1902.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS LUZAC & CO,
46, GREAT RUSSELL STREET, LONDON, W C, AND MR OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY

*Co plete cop es of those works marked with an asterisk * annot be supplie l—s me of the F scic l s being ou t of stock.*

## BIBLIOTHECA INDICA

### *Sanskrit Series*

| | | Rs | |
|---|---|---|---|
| Advaita Brahma Siddhi (Text) Fasc 1-4 @ /6/ each | | 1 | 8 |
| Advaitachinta Kaustubhe Fasc 1 | | 0 | 6 |
| *Agni Purana (Text) Fasc. 4-14 @ /6/ each | | 4 | 2 |
| Aitareya Brahmana Vol I Fasc 1-5 and Vol II, Fasc 1-5 Vol III Fasc 1 5 Vol IV, Fasc 1 5 @ /6/ | | 7 | 8 |
| Anu Bhasyam (Text) Fasc 1-5 @ /6/ each | | 1 | 14 |
| Aphorisms of Sandilya (English) Fasc 1 | | 0 | 12 |
| Astasahasrika Prajnaparamitā (Text) Fasc 1-6 @ /6/ each | | 2 | 4 |
| Açvavaidyaka (Text Fasc 1 5 @ /6/ each | | 1 | 14 |
| Avadana Kalpalata (Sans and Tibetan) Vol I, Fasc 1-5, Vol II Fasc 1 5 @ 1/ each | | 10 | 0 |
| *Bhamati (Text) Fasc 4-8 @ /6/ each | | 1 | 14 |
| Bhatta Dipika Vol I, Fasc 1-3 | | 1 | 2 |
| Brhaddevata (Text) Fasc 1-4 @ /6/ each | | 1 | 8 |
| Brhaddharma Purana (Text) Fasc 1-6 @ /6/ each | | 2 | 4 |
| Bodhicaryavatara of Cantidevi Fasc 1 | | 0 | 6 |
| Catalogue of Sanskrit Books and MSS Fasc 1-3 @ 2/ each | | 6 | 0 |
| *Çatapatha Brahmana Fasc 1-6 | | 2 | 4 |
| Catasahasrika Prajnaparamita (Text) Fasc 1-4 @ /6/ each | | 1 | 8 |
| *Caturvarga Chintamani (Text) Vols II 1-25; III Part I Fasc 1-18 Part II Fasc 1-10 @ /6/ each | | 19 | 14 |
| Catasahasrika prajna paramita Part I Fasc 1-3 @ /6/ | | 1 | 2 |
| Çlokavartika, (English) Fasc 1-3 | | 2 | 4 |
| *Çrauta Sutra of Āpastamba (Text) Fasc 4 16 @ /6/ each | | 4 | 14 |
| Ditto Çankhayana (Text) Vol I Fasc 1-7 Vol II Fasc 1-4 Vol III Fasc 1-4 @ /6/ each | | 5 | 10 |
| Çri Bhashyam (Text) Fasc 1 3 @ /6/ each | | 1 | 2 |
| Gadadhara Paddhati Kalasara Vol I Fasc 1-4 | | 1 | 8 |
| Kala Madhava (Text) Fasc 1-4 @ /6/ each | | 1 | 8 |
| Kala Viveka Fasc 1-4 | | 1 | 8 |
| Katantra (Text) Fasc 1-6 @ /12/ each | | 4 | 8 |
| Katha Sarit Sagara (English) Fasc 1-14 @ /12/ each | | 10 | 8 |
| Kurma Purana (Text) Fasc 1-9 @ /6/ each | | 3 | 6 |
| Lalita Vistara (English) Fasc 1-3 @ /12/ each | | 2 | 4 |
| Madana Parijata (Text) Fasc 1-11 @ /6/ each | | 4 | 2 |
| Maha bhasya pradipodyōta (Text) Fasc 1 9 & Vol II Fasc 1 6 @ /6/ each | | 5 | 10 |
| Manutika Sangraha (Text) Fasc 1-3 @ /6/ each | | 1 | 2 |
| Markandeya Purana, (English) Fasc 1 6 @ /12 each | | 4 | 8 |
| *Mimamsa Darçana (Text) Fasc 7-19 @ /6/ each | | 4 | 14 |
| Narada Smrti (Text Fasc 1-3 @ /6/ | | 1 | 2 |
| Nyayavartika (Text) Fasc 1-5 @ /6 | | 1 | 14 |
| *Nirukta (Text) Vol. III Fasc 1 6; Vol IV, Fasc 1-8 @ /6/ each | | 5 | 4 |
| Nityacarapaddhati Fasc 1-6 (Text) @ /6/ | | 2 | 4 |
| Nyayabindutika (Text) | | 0 | 10 |
| Nyaya Kusumañjali Prakarana (Text) Vol I Fasc 1-6 Vol II Fasc 1-3 @ /6/ each | | 3 | 6 |
| Padumawati Fasc 1-4 @ 2/ | | | |

वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥

इति मनुनोक्तम् ।

तथापि,—सर्वेषामेव वर्णानां सूतके मृतके तथा ।

दशाहाच्छुद्धिरथ वा इति शातातपोऽब्रवीत् ॥

इत्यङ्गिरोवाक्यात् असद्देशे सर्वेषां वर्णानां दशाहाशौचममाचारः । दशाहेन इत्यादौ शतेनेति शेषः । अनुलोमसङ्कराणामपि दशाहाशौचम् ।

तथा च ब्राह्मे,—शौचाशौचं प्रकुर्वीरन् शूद्रवद्वर्णसङ्कराः ।

इति । प्रतिलोमसङ्कराणान्तु मूत्रपुरीषोत्सर्गवत् मलापकर्षस्नानमात्रम् । "प्रतिलोमा धर्महीनाः" इति गौतमोक्तेस्तेषां विध्यनधिकारात् । यत्तु,—

एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ।

त्र्यहात्केवलवेदज्ञो निर्गुणो दशभिर्दिनैः ॥

तथा,—सम्पर्कविनिवृत्तानां न प्रेतं नैव सूतकम् ।

इति पराशरवाक्यं तत्कलीतरयुगविषयम् ।

दशाह एव विप्रस्य सपिण्डमरणे सति ।

कल्पान्तराणि कुर्वाणः कलौ स्यान्मोहकिल्विषी ॥

इति हारीतोक्तेः । तेन गुणतारतम्यादिनाप्यशौचसङ्कोचो न कलौ । मरणग्रहणं जननोऽप्युपलक्षणं, विप्रग्रहणं क्षत्रादेरपि । पैठीनसि.,—"सूतिकां पुत्रवतीं स्नातां विंशतिरात्रेण कारयेत् मासेन स्त्रीजननीम्" इति पुत्रवतीं, पुरुषजननीमित्यर्थः । मासोऽत्र सावनः, अशौचे तन्मासस्यैवोक्तत्वात् ।

तथा च शङ्खव्यासौ,—

सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा ।

मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिताः ॥ इति ।

ननु पुत्रकन्ययोर्यमलतया जनने तु मातुः केन शुद्धिरिति चेत्? अत्र केचित् यमलतया पुत्रकन्ययोर्जनने प्रथमतो यज्जन्म स्त्रियाः पुंसो वा, तज्जननेनैव मातुरशौचम् प्रथमतस्तस्यैव प्रवृत्तत्वात्, द्वितीयस्य तन्नान्तरीयकत्वात् तदननुबन्धत्वेन पृथगशौचप्रयोजकत्वाभावात् द्वयोरप्येकसंप्रयोगजन्यशुक्रशोणितजन्यत्वेन एकत्वाच्च । तन्मन्दमेवेति अस्मत्पितृचरणाः । तथा,—

गुरुणा लघु बाध्येत लघुना नैव तद्गुरुः ।

इति वक्ष्यमाणवृद्धमनुवचनेन लघुनः पुत्रजननाशौचस्य गुरुणा स्त्रीजननाशौचेन बाधात् मासेनैव मातुः शुद्धिः ।

अथोच्यते,—

न वर्द्धयेदघाहानि निमित्तादागतान्यपि ।

इति वचनात् पुत्रजननाशौचस्य बलवत्त्वमिति । तदपि मन्दम् । लघुगुरुविचारस्य उच्छेदापत्तेः । "न वर्द्धयेत्" इत्येतस्य तु अशौचस्य दशाहप्रभातश्रवणे त्रिदिनवृद्धिनिषेधपरत्वमिति वक्ष्यते । तथाच कन्यापुत्रयोर्यमलतया जनने स्त्रीजननेनैव मातुरशौचमिति सिद्धान्तः ।

योषित् मासमहतौ स्यावछुचिरभिषवणात् सर्गेने शौचकृत्ये,

तुर्याहे पञ्चमाहे स्वविरहवती चेदृतौ सार्त्तकार्ये ।

षण्मासात् मासषष्ठेरपि गतदिवसैः सर्वथोर्द्धं प्रसूत्या—

शौचोऽयो सर्वसूतौ दृशादिवमपरं श्रौतकृत्स्यशंयोग्या ॥

वशिष्ठः,—"चिरात्रे रजखला शुचिर्भवति" चिराचे गते इति शेषः।

शङ्खः,— शुद्धा भर्त्तुश्चतुर्थेऽह्नि न शुद्धा दैवपित्र्ययोः ।

दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥

भर्त्तुरपि पादसम्वाहनादिव्यापार एव शुद्धा, न स्मार्त्तकर्मणि। किन्तु श्रौतकर्मसु शुद्धा। तथाच कात्यायनसूत्रम्,— "पत्न्या उदक्याया दीचारूपाणि विहाय इत्युपक्रम्य चिरात्रान्ते गोमयमिश्रेण उदकेन स्नापयित्वा परिधानादि करोति" इति । पञ्चमेऽहनि तु स्मार्त्तकर्मसु अभिगमने चाधिकारवतीति सिद्धम्। चतुर्थदिनरात्रौ अभिगमने चाधिकारोऽस्त्यायुर्गुणरहितपुत्रोत्पत्तिरूपदोषसद्भावो-रिति पूर्वं लिखितम् ।

अत्र यद्यपि केचित्,—

एकाकिन्यो विवाहादौ देशभङ्गेऽथवापदि ।

उपोषणेन शुध्यन्ति सद्यो नार्यो रजखलाः ॥

अत्रिः,— रजखला यदा जाता पुनरेव रजखला ।

अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥

एकोनविंशतेरर्वागेकाहं विंशतेर्द्व्यहम् ।

यस्यास्तु नियमेनाष्टादशदिनमध्ये भूयो रजोदर्शनम्, तस्याः स्यादेव चिरात्राशौचमिति विज्ञानेश्वरा व्यवस्थापयामासुः। तथापि एकाकिन्यादीनामपि तथाचारो न दृश्यत इत्यस्माभिः तत्किञ्चिन्न निवद्धम्। यद्यपि स्मृत्यन्तरे वर्णविशेषे त्र्यशौचविभिन्नत्वमुक्तम् ।

ऋतौ तु न पृथक् शौचं सर्ववर्णेष्वयं विधिः ।

इति मनूक्तेः, सर्व्ववर्णस्त्रीसाधारणोऽयं विधिः ।

तृतीयमासमारभ्य षण्मासान्तं तु व्यवस्था ब्राह्मे,—

षण्मासाभ्यन्तरे यावत् गर्भस्रावो भवेद्यदि ।

तदामाससमैस्तासां दिवसैः शुद्धिरिष्यते ॥

अत ऊर्द्धं स्वजात्युक्तमशौचं तासु विद्यते ।

तासामिति बहुवचनात् स्वजात्युक्तमिति लिङ्गाच्च सर्व्ववर्णस्त्रीसाधारणमिदम्। अत ऊर्द्धमित्युक्तेः सप्तमादिसमस्तमासेषु जातमृतौ मृतजनेन च सर्वथा मातुः सूतकाशौचमेव । "प्रजातायाश्च दशराचाशौचम्" इति कात्यायनसूत्रात् सूतिकाया दशराचादूर्द्धं श्रौतेऽधिकारः ।

यत्तु,— ब्राह्मणी चत्रिया वैश्या प्रसूता दशभिर्द्दिनैः ।

गतैः शूद्रा च संस्पृश्या चयोदशभिरेव च ॥

इति ब्राह्मवचनम्। तदनूढापरम्। यद्वा शूद्राणाम् मासाशौचपचाभिप्रायम्।

दशाहमेवाशौचन्तु सर्व्वेषामपरे विदुः ।

इति दशराचाशौचपचस्य असहेशे सर्व्ववर्णानामादृतत्वात् ।

सूतिका सर्व्ववर्णानां दशाहेन विशुध्यति ।

इति वचनान्तरेण च सर्व्वस्त्रीणामपि दशराचात्परं स्पर्शयोग्यत्वमेव ।

स्रावः स्याच्चतुर्यमासावधिरथ कथितः पात आषष्ठमासम्,

सद्यःशौचं कुले स्यात् स्रवनमिह पितुः स्याद्दयापप्रसूतिः ।

षष्ठोर्द्धे मासयुग्मे स पितृकुलभुवां जातमृत्यां मृतस्योत्-

पत्नौ तिस्रो निशाः स्युः श्वसिति यदि शिशुः पूर्णमत्राप्यशौचम् ॥

स्मृतिः,— आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।

अत ऊर्द्ध्वं प्रसूतिः स्यात्सप्तमाष्टममासयोः ॥

स्रावपातयोः सपिण्डानां सद्यःशौचम् । षण्मासाभ्यन्तरमिति ब्राह्मोक्तौ वाक्यशेषे,—

सद्यःशौचं सपिण्डानां गर्भस्य पतने सति ।

इत्युक्तेः । गर्भस्रावे पितुः स्नानमात्रम् । "सप्तमाष्टममासयोस्तु जाते मृते मृते जाते कुलस्य त्रिरात्रम्" इति हारीतोक्तौ जातशब्द-लिङ्गात् सपिण्डानां त्रिरात्राशौचमेव । पितुरप्यनयोर्मासयोस्त्र्यहाशौचम् ।

जीवन् जातो यदि प्रेयान् मृतो वा यदि जायते ।

सूतकं मातुरेव स्यात् पित्रादीनां त्रिरात्रकम् ॥

इति वृहन्मनुवचनात् हारीतोक्तकुलशब्दस्य पित्रादिपरत्वेन व्याख्यानाच्च। मातुरशौच तु पूर्वश्लोके लिखितम्। सप्तमाष्टममास-योरपि बालजीवने सपिण्डानां समानोदकानां यथायोग्यं सम्पूर्णा-शौच उत्सर्गसिद्धमेव ।

सर्वेषां प्रेतजाते भवति हि नवमाद्येषु मासेषु पूर्णं,

जातप्रेते तु वप्तुर्जनुरवधि दशाहाघमङ्गाशुचित्वं ।

ज्ञातीनां नाघमात्रं यदि तु शिशुमृतिः सूतिमध्येऽपि नाडी-

छेदोर्द्धं तत्र ताते जनुरवधि दशाहाघमन्येषु नाघम् ॥

नवमादिमासे मृतजाते, पारस्करः,—

गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत् ।

नवमादिमासजातमृतौ तु कौर्मे,—

जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः ।
मातुश्च सूतकं तत् स्यात् पिता त्वस्पृश्य एव च ॥
सद्यः शौचं सपिण्डानां कर्त्तव्यं सोदरस्य च ।

तत् सूतकं जननाशौचमित्यर्थः । तथाचात्र पित्रोर्जननावधि-दशरात्रम् । सपिण्डानां सद्य इति वचनात् पितुरप्यङ्गाशौचं दशाहान्तं इत्यसद्देशे व्यवस्था सुस्थिरा । अन्यप्रकारा व्यवस्था यथा वृद्धप्रचेताः,—

मुहूर्त्तं जीवितो बालो यदि पञ्चत्वमृच्छति ।
मातुः शुद्धिर्दशाहेन सद्यःशौचास्तु गोत्रिणः ॥

मुहूर्त्तमपि नाड़ीच्छेदोपलक्षणम् । या चापन्या व्यवस्था, नाड़ीच्छेदात् पूर्वं बालमरणे पुनर्हारीतः,— "जाते मृते मृते जाते पुनर्वादशाहं सपिण्डानां"। इदं नवमदशमादिमासविषयम् । पुनर्हारीतवचनस्य सप्तमाष्टममासयोः व्यहाशौचविषयत्वेन व्याख्यानात् ।

दशाहाभ्यन्तरे बाले प्रस्थिते तस्य बान्धवैः ।
शावाशौचं न कर्त्तव्यं सूत्यशौचं विधीयते ॥

इति वृद्धमनुवचनाच्च सपिण्डानां दशाहमेव । जातमात्रस्येति कौर्मवचनात् नाड़ीच्छेदात् पूर्वमपि सद्यःशौचम् । इति व्यवस्था असद्देशे नाद्रियते । धर्मसन्देहे "स्वस्य च प्रियमात्मनः इति याज्ञवल्क्येन आत्मतुष्टेर्धर्मे प्रामाण्यस्य सिद्धान्तितत्वात् । "यस्मिन् देशे य आचारः" इति मनूक्तेश्च । यत्तु विज्ञानेश्वरैः पञ्चमषष्ठ-मासयोर्गर्भपाते कुलस्य त्रिरात्रं, सप्तमादिषु जातमृते मृतजाते वा

विशेषाद्दशरात्रं, दशरात्रान्तर्बालमरणेऽपि कुलस्य सूतिकाशौचं स्मृत्यन्तरसम्वादेन व्यवस्थापितम् तदपि नास्मद्देशे आद्रियते। अथ "प्रकृतं जातमात्रस्य" इत्यादिवचनात् सर्वत्र जातशब्दानां जातमात्र परत्वम् तथाच नाडीच्छेदोत्तरं दशाहमध्ये बालमरणे मातापित्रो-रित्यनुवृत्तौ पारस्कर. "अन्तः सूतके चेदोत्थानादाशौचं सूतकवत्" इति। अस्यार्थः। आ उत्थानादिति पदद्वयम्। तथा पित्रो-र्जननावधिदशरात्रावसानपर्यन्तमेव अशौचं इत्यर्थः।

ज्ञातिविषये तु शङ्खः,—

वालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति।
सद्यःशौचं सपिण्डानां न प्रेतं नैव सूतकम्॥

एकः प्रेतः परस्त्विच्छसिति यमजयोस्तदद्दैकोऽत्र जात-
प्रेतोऽन्यः प्रेतजातस्तदिह जनिमनादृत्य मृत्योर्वलित्वात्।
सद्यःशौचाः सपिण्डा जनुरवधिदशाहं पिताङ्गाशुचिः स्यात्
सद्यः शौचे तु शिष्टाविदधति सकले स्नानमात्रं न चान्यत्॥

यमलजननेऽप्येकस्य जीवने अन्यस्य मृतौ, तथैकस्य मृतजननेऽन्यस्य जातमृतौ जातमात्रस्य "वालस्त्वन्तर्दशाहे तु" इत्यादिवाक्येभ्यो जननापेक्षया मृतेर्वलियस्त्वस्य वक्ष्यमाणत्वाच्च ज्ञातीनां सद्यः शौचम्। पित्रोर्दशरात्राशौचं अङ्गाशौचं च। मातुः सम्पूर्णशौच-मुक्तमेव। अस्मद्देशे "दिसन्ध्यं सद्य इत्याङ्कः" इत्युक्तिमनादृत्य सद्यःशौचे स्नानसमाचारः। "सद्यःशौचे स्नानमात्रं पाकत्यागो न विद्यते" इत्यपि शिष्टाः।

पुत्रे पित्रो रदाभाङ् मृत उदितमहस्त्र्याहं तु व्रतात् प्राक्,

ज्ञातेः सद्योऽह्नरेकं त्र्यहमुदितमधोदन्तचूड़ाव्रतेभ्यः ।
सर्वेषां पूर्णमूर्द्ध्वं लघमपि रदनचौरकर्म व्रतोक्तं,
काले तेषामभावेऽप्यध उत भवने तत्तदुक्तं ह्यशौचम् ॥
एकादशाहादुत्तराशौचविचारः कौर्मे,—
अजातदन्तमरणे पित्रोरेकाऽहमिष्यते ।
जातदन्ते त्रिरात्रं स्यादिति शास्त्रविनिश्चयः ॥
सपिण्डानां तु याज्ञवल्क्यः,—
आदन्तजन्मनः सद्य आचूड़ान्नैशिकी मता ।
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥
अत्र दन्तजननादयः कालोपलचका इति कल्पतरुकारादयः ।
तथाच दन्तजन्मकाले दन्तानुत्पत्तावपि बालमृतावहरशौचम् ।
एवं चूड़ाकाले चूड़ाया अभावेऽपित्र्यहाशौचम् ।
अत एव तृतीयाब्दे चूड़ाकरणाभावे अङ्गिराः ।
यद्यप्यकृतचूड़ोऽपि जातदन्तश्चसंस्थितः ।
दाहयित्वा तथाप्येन मशौचं त्र्यहमाचरेत् ॥ इति ।
एवं उपनयनकाले उपनयनाभावेऽपि सम्पूर्णाशौचमेव ।
तथाच ब्राह्मे,—
अनुपनीतो विप्रस्तु राजा चैवाधनुर्द्धरः ।
अगृहीतप्रतोदस्तु वैश्यः शूद्रस्त्ववस्त्रधृक् ॥
म्रियते यत्र तत्र स्यादशौचं त्र्यहमेव च ।
द्विजन्मनामयं कालस्त्रयाणां च षड़ाब्दिकः ॥
पञ्चाब्दिकस्तु शूद्राणां स्वशात्युक्रमतः परम् ।

अत्र हि गर्भाष्टमवर्षे ब्राह्मणादित्रयाणां उपनयनधनुर्ग्रहण-प्रतोदग्रहणकालः । शूद्रस्य षष्ठेऽब्दे वस्त्रग्रहणकालः । ततः पूर्वं बालमृतौ त्रिरात्रम्। तदूर्द्ध्वं बालमृतौ सम्पूर्णाशौचं इत्युक्तं भवति। एवं चोपनयनस्य कालोपलक्षकत्वमुक्तम्। एवं दन्तजन्मादिषु बोध्यम्। यत्तु,— चतुर्थे पञ्चमे मासे दन्तजन्म सुदृश्यते ।

एवं ब्रह्मवर्च्चसकामस्य पञ्चमेऽब्दे उपनयनम् । प्रथमेऽब्दे चूडा-करणं तत्र दन्तजन्माद्युक्ताशौचमेव । तथाच जावालिः,—

ब्रतचूडाद्विजानान्तु प्रतीतिषु यथाक्रमम् ।

दशाहस्त्र्यह एकाहः शुध्यन्त्यपि हि निर्गुणाः ॥

द्विजानां (दन्तानां) अत्र प्रतीतिपदोपादानादकालेऽपि तद्दर्शने यथोक्ताशौचम् । अन्यथा ब्रतचूडादिकेष्वित्युक्तं स्यात् ।

पित्रोः पुत्रीमृतावारदनमहरतः सर्व्वदोर्द्ध्वं त्र्यहं स्यात्,

भ्रातुः स्नानं तथाहस्त्र्यहमपि रदनात् चौरतः प्राक्विवाहात् ।

ज्ञातेः सद्यः क्षुरात् प्रागहहपरि च वाग्दानकाले त्र्यहं स्यात्,

वाग्दानेऽलुप्तिते तु त्र्यहमुभयकुले चेत् विवाहो न पित्र्ये ॥

कन्याशौचे कौर्म्मे,—

अजातदन्तमरणे पित्रोरेकाहमुच्यते ।

दन्तजन्मोर्द्ध्वं स्मृत्यन्तरे,—

अप्रत्तासु च प्रत्तासु संस्कृतासंस्कृतासु च ।

मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥

कन्यामरणाधिकारे पुनः कौर्म्मे,—

आदन्तात्सोदरे सद्य आचूडादेकरात्रकम् ।

आप्रदानात्त्रिरात्रं स्यादिति शास्त्रविनिश्चयः ॥

सपिण्डानां तु ब्राह्मे,—

आजन्मनस्तु चूडान्तं सद्यःशौचं विधीयते ।
ततो वाग्दानपर्यन्तं यावदेकाहमेव च ॥
अतःपरं प्रवृद्धानां त्रिरात्रमिति निश्चयः ।
वाग्दाने तु कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ॥
पितुर्वरस्य च ततो दत्तानां भर्त्तुरेव च ।
स्वजात्युक्तमशौचं स्यात् सूतके मृतके तथा ॥

अस्यार्थः । चूड़ानन्तरं वाग्दानपर्यन्तं सपिण्डानामेकाहम् । वाग्दानकालानन्तरं वाग्दानकर्मानुष्ठानपर्य्यन्तं त्र्यहम् ।

तथाच मनुः,— स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः ।

असंस्कृतानां अविवाहितानां ।

तथाच विष्णुः,— "स्त्रीणां विवाहः संस्कारः" । इति ।

"त्र्यहात् शुद्ध्यन्तिबान्धवाः" इत्यनुवृत्तौ, शङ्खोऽपि,— "अनूढ़ानां तु कन्यानां" इति । वाग्दानकर्मण्यनुष्ठिते तु विवाहपर्यन्तं पितृकुले भाविभर्त्तृकुले त्र्यहम् । पितुर्वरस्य चेति पूर्वेणान्वयः । उभयत इत्युक्तावपि पितुर्वरस्य चेत्युक्तिः स्पष्टार्था । विवाहानन्तरं भर्त्तृकुल एवाशौचं, न पितृकुले । वृहस्पतिः,—

पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः ।
भर्त्तृगोत्रेण नारीणां देयं पिण्डोदकं ततः ॥

एवं सप्तपदीकरणानन्तरम्,—

नोदकेन न वाचा वा कन्यायाः पतिरुच्यते ।

पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥

इति यमोक्तेः । तत्पूर्वं त्रिरात्रमुभयत्र । यद्यप्यादिपुराणे,—

सापिण्ड्यं स्यात्तु कन्यानामदत्तानां त्रिपूरुषम् ।

इत्युक्तम्,

*तथापि मन्वर्थविरोधात् तन्नानादरसमाचारः । ततो दत्ताना-*
मिति मन्वाक्यात् पितृकुले सप्तपदानन्तरं नाशौचमित्यर्थः ।
केवलं तदुत्तरमपि पित्रोः त्र्यहं वच्यते च ।

षष्ठो मासो रदेषु क्षुरकरण इहाब्दस्तृतीयोऽब्दषट्कात्-

मासद्वन्द्वाधिकात्स्यात्पर उपनयने वाक्प्रदाने च कालः ।

अब्देऽतीते द्वितीये दशनमथ पुनः शूद्रजातेरशौचे,

भेदोऽयं षष्ठवर्षः परिणयसमयस्तत्तमारभ्य पूर्णम् ॥

ब्राह्मे,— अजातदन्तो वा मासे मृतः षड्भिर्गतो वहिः ।

इति षण्मासस्य दन्तजन्मकालत्वं । "दन्तजन्म सप्तमे मासि"
इति रुद्रधरलिखनं तु बहुनिबन्धविरोधात् सर्वथा नादेयम् ।
मनुः,— चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।

प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥ इति ॥

तत्र "चूडा कार्या यथाकुलं" इति याज्ञवल्क्योक्तेरसद्देशे
तृतीयवर्ष एव चूडाकाल इति सिद्धान्तितम् । यद्यपि,—

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।

राज्ञामेकादशे त्वेके विशामेके यथा कुलम् ॥

इति याज्ञवल्क्यविश्वामित्रौ । तथापि अशौचाधिकारे,

द्विजन्मनामयं कालः स्त्रीणां चैव षडाब्दिकम् ।

पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतः परम् ॥

इति शाङ्खोक्तौ त्रैवर्णिकदशाहाशौचपक्षाश्रयणेन त्र्यहाशौचस्य षष्ठवर्षाधिकत्वस्य उक्तत्वात्, गर्भाष्टमपक्षाश्रयणेन द्विमासाधिकवर्षषट्कानन्तरं उपनयनकाल इति सिद्धम्। वाग्दानकालविषये शुद्धिगुत्त्वकारैः,—

'अष्टवर्षा भवेत् गौरी'।

गौरीं वा वरयेत्कन्यां नीलं वा वृषमुत्सृजेत्।

अष्टवर्षोऽष्टवर्षां वा" इत्यादिवाक्यैः वाग्दानं प्रत्यष्टवर्षस्य मुख्यकालत्वावगमादित्युक्तम्। पञ्चाननस्तु वाग्दानकालस्य मुनिभिरनुक्तत्वात् उपनयनकालस्य वाक्प्रदानकालत्वेन प्रमाणसम्भव इत्याह। वस्तुतस्तु द्विमासाधिकषड्वर्षानन्तरं विवाहकाल इति विवाहप्रस्तावे प्रमाणान्युक्तानि। यत्तु शुद्धिगुत्त्वकृता उक्तं, तन्न रुचिरम्। "अष्टवर्षोऽष्टवर्षां वा" इत्यस्य गर्भाष्टमपरत्वम्। "अष्टवर्षा भवेद्गौरी" इति वाक्यं तु कन्याया गौरीत्वप्रतिपादकम्, न तु विवाहकालप्रतिपादकम्। गौरीं वेतिवाक्ये फलातिशय उक्तः, न तु विवाहकाल इति व्याख्यानात्।

स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राग्विधीयते।

इति नारदोक्तेः वाग्दानस्य विवाहप्राक्कालीनत्वसिद्धेः। सुतरां मासद्वयाधिकवर्षषट्कानन्तरं वाक्प्रदानस्य काल इति सिद्धम्।

अथ बालमरणे दाहकालविचारः।

द्विवर्षमध्ये बालमरणे निखननम्, याज्ञवल्क्यः,—

ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः।

मानवीये तु,— ऊनद्विवर्षकं प्रेतं निदध्युर्बान्धवा वहिः।
नास्य कार्योऽग्निसंस्कारो नास्य कार्योदकक्रिया॥
अरण्ये काष्ठवत् त्यक्त्वा क्षिपेयुस्त्र्यहमेवहि। इति।

"अरण्ये काष्ठवत् त्यक्त्वा" इत्यनेन दृष्टान्तेनापूर्णद्विवर्षं भूमौ निधाय[१] श्रौर्द्धदेहिकेषु उदासीनै र्भवितव्यमिति विज्ञानेश्वरादयः। त्र्यहाशौचोक्तिस्तु संवत्सरचूड़ाभिप्राया इति।

यद्यप्यकृतचूड़ोऽपि जातदन्तस्तु संस्थितः।
दाहयित्वा तथाप्येनमशौचं त्र्यहमाचरेत्॥

इत्यङ्गिरोवाक्यं वर्षत्रयोर्द्धं चौलोत्कर्षे ज्ञेयं इति च। एवं "ऊनद्विवर्षस्य दाहक्षेपौ पाक्षिकौ" इति केषाञ्चिल्लिखनं न सम्यगित्यवधेयम्। "अद्विवर्षं मातापित्रोरेकरात्रं त्रिरात्रं वा शरीरमदग्ध्वा निखनन्ति" इति पारस्करसूत्रे त्वजातदन्ते एकरात्रं, जातदन्ते त्रिरात्रमिति वाशब्दो व्यवस्थावाची। तथाच तृतीयादिवर्षे मरणे चूड़ायां कृतायामकृतायामपि दाह एवेति सिद्धम्। शूद्राणां सर्वत्राशौचे ब्राह्मणशाम्येऽपि षष्ठवर्षस्य विवाहकालत्वं, तदवधि पूर्णाशौचं च इत्येव भेदः। तत्र प्रमाणवाक्यं प्रागलिखितम्।

सूतौ सूतिः समा चेत् मृतिरपि मृतके पूर्वजाशौचशेषा-
द्दैः शुद्धिर्दीर्घमाद्यं परमपि लघुनो बाधकं स्यात् सदृक् चेत्।
दीर्घं चान्त्यं पुरोजं परमपि मृतकं शोधकं सूतकस्य
त्यक्त्वोदक्यां क्रियाकृत्मृतपतिवनितासूतिकाः पुत्रवध्वौ॥

समानजातीयाशौचसन्निपाते विष्णुः,—"जननाशौचमध्ये यद्य-

---

(१) निखाय।

"न वर्द्धयेदघाहानि" इत्येतेन निषिद्धत्वात् वैकल्पिकानि यथा-देशाचारं व्यवस्थितानीति नास्मद्देशे विचार्य्यन्ते।

अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्।

इत्यादिमन्वाद्युक्तमपि अस्मद्देशे समाचाराभावात् न व्यवस्था-प्यते। अतएव विज्ञानेश्वरैर्नानादिवसशोधकवाक्यान्युदाहृत्य" "स-माचाराभावान्न व्यवस्थाप्यते" इत्युक्तम्। अन्तरङ्गगुणवह्नावेन शुद्धि-विचारो न कलावस्तीत्यप्याहुः। अथ सजातीयविषये उशनाः,—

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि।

न च पूर्वेण शुद्धिः स्यात् स्वकालेनैव शुध्यति॥

वृहन्मनुरपि,— गुरुणा लघु बाध्येत लघुना नैव तद्गुरुः।

अतएव अल्पकालीनमरणाशौचस्य दीर्घकालीनसूतकं बाध-कम्। इति हारलताकृता यदुक्तं तन्नादेयमिति। तयोर्विजा-तीयत्वात् स्मृतेर्वलीयस्त्वाच्च।

अङ्गिराः,— अनिर्दशाहे मरणे पश्चात् स्यान्मरणं यदि।

प्रेतमुद्दिश्य कर्त्तव्यं तत्राशौचं स्वबन्धुभिः॥

देवलः,— मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्।

षट्त्रिंशन्मते,—

शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी।

हृद्धात्रिः,— सूतकात् द्विगुणं शावं शावात् द्विगुणमार्त्तवम्॥

आर्त्तवात् द्विगुणा सूतिस्ततोऽधिशवदाहकः॥

शवदाहको दाहादिप्रेतकर्मकर्त्ता पुत्रादन्योऽपीत्यर्थः। पूर्वस्माद्-त्तरोत्तरमशौचं वलवदित्यर्थः। ततोऽपीति पाठे सूतितोऽपीत्यर्थः।

वृद्धमनुः,—

ग्गावस्योपरि शावे तु सूतकोपरि सूतके ।

शेषाहोभिर्भवेत् शुद्धिरुदक्यां सूतिकां विना ॥

श्रीरामायणे सीतां प्रति, अनुसूयावाक्यम्,—

नातोविशिष्टं पश्यामि वान्धवं वै कुलस्त्रियाः ।

पतिर्वन्धुर्गतिर्भर्त्ता दैवतं गुरुरेवसः ॥

तथाच क्रियाकर्त्तारं सूतिकां म्रियमाणपतिकां रजस्वलां च स्त्रियं त्यक्त्वा अन्येषां पूर्वाशौचेन शुद्धिः । पुत्रं प्रति पितृशौचस्य बलवत्त्वेन वच्यमाणत्वात् तस्य क्रियाकर्त्तृत्वेऽपि अकर्त्तृत्वेऽपि पितृ-मरणेनैव शुद्धिः । तत्समानधर्मत्वात् तद्भार्य्याया अपि । तथाच पुत्रवध्वोरपि पूर्वाशौचशेषेण न शुद्धिरितिस्थूणानिखननन्यायेन उक्तम् । चतुर्भिः कुलकम्,—

पित्रोर्मृत्युं दशाहात्परमपि शृणुयाद्दूरगोऽप्यात्मजश्चेत्

स्नात्वोपोष्यार्द्रवासास्तदवधि च दशाहान्यशौची नियम्य ।

नित्यं स्नात्वाम्बु दद्यादथ न यदि कृत प्रेतपिण्डाद्यतीते

ऽप्यब्दे कुर्यादशौचे स्थितवति विदिते शेषघस्रैर्विशुध्येत् ॥

पित्रोराशौचमाद्यं परमपि सकलाशौचसंशोधकं स्यात्

तत्रादौ मातृमृत्यौ पितुरुपरितने नाप्यशौचेन शुद्धिः ।

तातस्यैकादशाहे भवति तदुभयोः सर्वमेकादशाहो-

क्तं कर्माथो तयोः स्वस्वमृतितिथिदिनाद्येव कर्मापरं स्यात् ॥

माता ताताघमध्ये यदि भवति मृता तत्समाप्यादशाहा-

न्तं सर्वं कर्म चतुर्दशदिनपरतः पक्षिणीं वर्द्धयित्वा ।

तत्राद्यत्रीन् द्वितीयेऽहनि च वितनुयात् सप्तपिण्डानथास्याः,
पित्रोरेकादशाहोदितविधिमपराह्णे परं स्वस्मृत्योः॥
मध्येऽब्दं चेद्विमातुः मरणनिशमनं मज्जनं चोपवासः
पुत्रस्य स्यादशौचं दशदिवसमतीते तु वर्षे त्रिरात्रम्।
पक्षिण्यन्तर्निशैकाभित उभयदिने चाहरुक्तं त्रिसन्ध्यं,
यावत् सूर्योदयं यन्निशि मृतकरजःसूतयोऽहस्तदेकम्॥

पित्राद्यशौचे विशेषः।

पैठीनसिः,—पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः।
श्रुत्वा तद्दिनमारभ्य दशाहं मृतकी भवेत्॥

आग्नेये,—

पितृमात्रुपघाते तु आर्द्रवासा ह्युपोषितः।
अतीतेऽब्दे प्रकुर्वीत प्रेतकार्यं यथाविधि॥

अतः पुत्रः पित्रोर्दशाहोत्तरमरणश्रवणे स्नात्वोदकं कृत्वार्द्रवासाः तदवधि दशाहोक्तनियमान् कृत्वा नित्यं स्नानोदके च कृत्वा दशाहमशौचमाचरेत्। वर्षान्तरमपि मरणश्रवणे तथैव सर्वं कुर्यात्। केनचित् क्रियायामकृतायां तु सर्वं पिण्डादिकं कर्मापि कुर्यात्। दशाहमध्ये श्रवणे तु "प्रोषितश्चेत् प्रेयात् श्रवणप्रभृति कृतोदकाः कालविशेषमासीरन्" इति सर्वसाधारण्येन पारस्करोक्तेः। केनचित् क्रियायामारब्धायामपि सर्वनियमवान् शेषदिनैः शुध्येत्। एवं पित्रोर्देशान्तरमरणे वर्षेऽतीतेऽपि दशाहाद्यशौचविधानादवक्ष्यमाण-नानानियमविधेश्च सर्वाशौचापेक्षया पितृशौचं गुरुतरमेव। तस्मात् तदशौचं पूर्वं परमपि सर्वाशौचसंशोधकमेव।

अत्रापि विशेषः स्मृत्यन्तरे,—

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।

पितुः शेषेण शुद्धिः स्यात् मातुः कुर्यात्तु पक्षिणीम् ॥

इति मातरि मृतायां पश्चात् पितृमरणे उत्तरभाविनापि पितृमरणेन एव शुद्धिः। द्वयोरेकादशाहकृत्यं पितुरेकादशाहदिने कार्यम्। "पितृमरणाशौचमध्ये पश्चान्मातृमरणे तु पितुरशौचं समाप्य पश्चात् पक्षिणीं प्रक्षिप्य शुद्धिः, न पूर्वशेषमात्रेण, दशाहानन्तरं पक्षिणीं समाप्य द्वयोरेकादशाहकृत्यं कार्यं" इति विज्ञानेश्वराः। एतदन्येऽप्यस्मद्देशीया निबन्धकृतः संमेनिरे। अत्र यत् केचित् "पूर्वां वा परतोऽप्येवमनयोर्मातुः पिताशोधकः"। इति कारिकां निबध्य पितृवियोगमध्ये यत्र कुत्रापि दिने मातृवियोगे मातृवियोगमध्ये यत्र कुत्रापि दिने पितृवियोगे चोभयथापि पितृवियोगदिनमारभ्य दशाहोरात्रैः शुद्धिः।

तथाच महाभारते,—

माता भस्त्रा पितुः पुत्रो येन जातः स एव सः।

भस्त्रा चर्मपुटिका, एतेन पितृपुत्रयोरेकात्मत्वप्रदर्शनेन मातुरपेक्षया पितुरेव परमान्तरङ्गत्वं सूचितं इति युक्तिमूचुः। तन्न रुचिरम्। "मातुः कुर्यात्तु पक्षिणीं" इति वाचनिकेऽर्थे न्यायावतारस्यानुचितत्वात् युक्तिविरुद्धत्वाच्च। तथाच माता, भस्त्रा, इति नाशौचप्रकरणेऽभिहितम्। तथापि पितुराधिक्योक्तिर्यद्यप्यशौचप्रयोजिका च स्यात्। श्रीरामायणे, स्मृतौ, च, "उपाध्यायादृशपिता" इत्याद्युक्ता,

गर्भधारणपोषाभ्यामेभ्यो माता गरीयसी ।

इत्यादिना,

उपाध्यायाद्दशाचार्य्या आचार्य्याणां शतं पिता ।

सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ।

इति मानवभविष्यपुराणवाक्येन च वन्दनादौ मातुराधिक्यदर्शनेन च मातृशौचं किमिति बलवत्तरं न स्यात् ।

किञ्च "अन्तरङ्गभावेन शुद्धिविचारो न कलौ" इत्ययुक्तं किञ्च पितृदशमेऽहनि पितृकर्मसमाप्तौ स्वल्पावशिष्टायां एव मातृमरणे मातुर्दशदिनविहितकर्मणां स्वल्पकालेन कर्त्तुमशक्यत्वेन पक्षिणीप्रक्षेपं विनाऽनिर्वाहात् पितृवियोगमध्ये मातृमरणे पक्षिणीप्रक्षेपो युक्ततमः । सर्वत्राप्यशौचपाते एकादशाहकर्मानुष्ठानस्य अशौचान्तदिने सिद्धान्तितत्वात् पक्षिण्यनन्तरदिने द्वयोरप्येकादशाहकृत्यं कार्य्यमिति विज्ञानेश्वराभिप्रायः । मासिकादीनि तु स्वस्वमरणतिथ्यवध्येव कार्य्याणि । त्रैपक्षिकं स्वमरणदिनावध्येव ।

अत्र विमातुर्विशेषो दक्षेणोक्तः,—

पितृपत्न्यामतीतायां मातृवर्जं द्विजोत्तमः ।

संवत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेत् ॥

इति संवत्सरात् पूर्वं दशरात्रमित्यर्थः । विमातुर्मातृसमत्वात् श्रवणदिने स्नानोपवासावुत्सर्गसिद्धौ ।

अङ्गिराः,— दिवसन्ध्यं सह इत्याऊस्त्रिसन्ध्यमहरुच्यते ।

एका रात्रिर्दिने द्वे च पक्षिणीत्यभिधीयते ॥

पक्षिण्यां यथा पिण्डव्यवस्था, सा पूर्वपक्षे निबद्धा ।

तत्र स्मृतिः ग्रहाशौचे,—

प्रथमेऽह्नि त्रयः पिण्डा द्वितीयेऽह्नि चतुष्टयम्।
तृतीयेऽह्नि त्रयः पिण्डाः पश्चिमायां प्रथमे त्रयम्॥
द्वितीयेऽह्नि च सप्तम्युरिति खण्डाशुचौ विधिः।

सद्यःशौचे स्नानमात्रमाचारात् पद्येऽस्माभिर्न निबद्धम्, त्रिसन्ध्यमहरित्युक्तम्। तत्र रात्रौ सूतकादिपाते गणनं कथं स्यात्? इत्यपेक्षायां जावालिः,—

रात्रावेव समुत्पन्ने मृते रजसि सूतके।
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः॥

चतुर्णां प्रमाणानि।

पत्नी पत्या सहाग्निं प्रविशति यदि वाशौचमध्येऽनुगच्छेत्
भेदेऽप्यत्रोभयत्रोभयमृतदिनयोः पत्यशौचेन शुद्धिः।
आशौचे चेदतीतेऽप्यनुगमनमिहाशौचमेव त्रिरात्रम्
विप्रानेवानुगच्छेत्तदितरवनिता अन्त्ययुः क्षत्रियाद्याः॥

व्याघ्रपादः,— मृतं पतिमनुव्रज्य पत्नी चेत् ज्वलनं गता।
तत्रापि दाहस्तन्त्रेण पृथगस्थिक्रिया भवेत्॥
नवश्राद्धं सपिण्डान्तं समाप्यं स्यात् सकृद्‌द्वयोः।
अत्र मृत्यहभेदेऽपि नवश्राद्धानि यद्दिने॥
भर्तुर्यत् क्रियते पत्या अपि तत्रैव तत्क्रिया।

चतुर्थ्यादिश्राद्धं, नवश्राद्धमिति पूर्वमुक्तम्।

वैशम्पायनः,— एकचित्यां समारूढौ दम्पती निधनं गतौ।
पृथक् पिण्डं च श्राद्धं च ओदनं न पृथक् पृथक्॥

एकपात्रे अन्नं पक्का द्विधा विभिज्य दद्यात् इत्यर्थः।

एकचित्यां समारूढौ म्रियेते दम्पती यदि।

तन्त्रेण श्रपणं कृत्वा पृथक् पिण्डं समापयेत्॥

इति वाक्यान्तरात्। अत्रापि पिण्डपदं पूर्ववाक्यात् श्राद्धोपलक्षकम्।

एकां चितिं समासाद्य भर्त्तारं यानुगच्छति।

तद्भर्त्तुर्यः क्रियाकर्त्ता स तस्याश्च क्रियां चरेत्॥

इत्यादिवाक्यैर्मरणदिनभेदेऽपि सपिण्डान्तत्वयस्य पत्न्या सहोक्तौ पत्यशौचेन शुद्धिः कैमुतिकन्यायसिद्धा। पूर्वेद्युः स्वल्पावशिष्टायां रात्रौ भर्त्तृमृतौ परेद्युर्दाहारम्भे सहगमनेऽपि दिनभेदः सम्भवति। एवमग्निप्रवेशं विना पत्न्या दाहाद्यापन्मरणेऽप्यन्नमेकभाण्डे सम्पाद्य पृथक् दद्यात्।

एकाहे तिथिभेदे तु नवश्राद्धेषु तन्त्रता।

श्राद्धानि मासिकादीनि मृततिथ्योर्द्वयोः पृथक्॥

इति वाक्यात्। सहगमनानुगमनयोरेकविधित्वात् दशाहमध्येऽनुगमने पत्यशौचेन शुद्धिः। दशाहोत्तरमनुगमने तु पुत्रादीनां त्रिरात्रमशौचम्।

अन्विताया: प्रदातव्यो दशपिण्डास्त्र्यहेन तु।

स्वाम्यशौचे व्यतीते तु तस्याः श्राद्धं विधीयते॥

इति पैठीनस्युक्तेः। अन्विताया अनुगमनकर्त्र्याः।

पुनः पैठीनसिः,—

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्।

इतरेषां तु वर्णानां स्त्रीधर्मोऽयं परः स्मृतः ॥

पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति ।

अन्यासां चैव नारीणां स्त्रीधर्मोऽयं व्यवस्थितः ॥

श्रौताग्नेः पर्णदाहो यदि भवति दशाहान्तरे वा तदूर्द्ध्वं,

ज्ञातीनां चात्मजानां तदवधि तदघं सर्वथैव त्रिरात्रम् ।

पर्णो दाहो निरग्नेर्यदि भवति दशाहान्तरे शेषघस्रैः,

शुद्धिः स्यान्न त्र्यहैः स्यात् यदि भवति तदूर्द्ध्वं तदैव त्र्यहैः स्यात् ॥

छन्दोगपरिशिष्टे "अस्थ्नामलाभे" इति वाक्ये "ततः प्रभृति सूतकं" इति यदुक्तं, तत् आहिताग्निविषयम् ।

एतत् तु,— यस्य तु चयमग्नीनां तस्योर्द्ध्वं दाहकर्मणः ।

इत्यस्यैवानुवादः । यद्यपि ब्राह्मे आहिताग्नेरित्युपक्रम्य,

"अनाहिताग्नेर्देहस्तु" इत्युक्त्वा,

एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।

इति साग्निनिरग्निसाधारण्येन दाहावधि त्रिरात्राशौचमुक्तम् । तथापि श्रौताग्नेर्दशाहावध्येवाशौचमित्युक्तत्वात् दशाहमध्येऽपि पर्णदाहे तदुक्तराशौचस्य समानविषयत्वेन बाधकत्वम् । निरग्नेस्तु दशाहमध्ये पर्णदाहे मरणज्ञानावधिकस्य अशौचस्य भिन्नविषयतया पर्णदाहनिमित्ताशौचेन न बाधः । प्रत्युत दीर्घकालीनेन दशराशौचेन अल्पकालीनस्य पर्णदाहनिमित्तत्रिरात्राशौचस्य बाधः । ननु निरग्नेरपि पर्णदाहनिमित्तत्रिरात्राशौचं दशराशौचस्य बाधकमस्त्विति चेन्न । तस्य दशाहोर्द्ध्वपतितपर्णदाहमात्रकालत्वेन भिन्नविषयतया बाधकत्वासम्भवात् ।

साग्नेरेवास्थिदाहो भवति चयिनिनः कालिदासा अवोचन्
तत्राशौचं त्र्यहं स्यादिति निगमविदोऽन्ये दशाहं ब्रुवन्ति।
ऊढ़ा पुत्री प्रसूते यदि पितृसदने तत्त्रिरात्रं तु पित्रोः,
तस्या मृत्यां तयोर्वा त्रिदिनमपि मृतौ यत्र कुत्रापि वासे ॥

विदेशस्थेत्यादि पूर्वोदाहृतकात्यायनोक्तौ "पात्रन्यासादिपूर्ववत्" इत्युक्तत्वात् पात्रन्यासार्थमेव पुनर्दाहप्रवृत्तेः। साग्नेरेवास्थिदाहः त्रिरात्राशौचानुवृत्तौ कालिदासचयिनिनः "दग्धेऽस्थिपार्णनरे" इति। तत्र टीकायाम् "एवं पर्णनरं दग्ध्वेति," पर्णनरदाहे त्र्यहाशौचविधानात् तत्सन्नियोगशिष्टास्थिदाहे त्र्यहाशौचमेव इति व्याख्यातं तदन्ये न सहन्ते। पर्णदाहापेक्षया मुख्येऽस्थिदाहे पर्णदाहोक्तस्य त्रिरात्राशौचस्य कथमतिदेशः स्यादिति। तस्मादस्थिदाहे दशाहमेवाशौचं। तथाच वशिष्ठः, "आहिताग्निश्चेत् प्रवसन् म्रियेत, पुनः संस्कारं कृत्वा शव इवाशौचं" इति। तत्र पुनः संस्कारपदोपादानादस्थिदाह एव न पर्णदाह इति। पर्णदाहविचारः पूर्वोक्तः।

कौर्मे,— दत्ता नारी पितृगेहे प्रधाने सूयतेऽथवा।
म्रियेत वा तदा तस्याः पिता शुध्येत्त्रिभिर्दिनैः॥

प्रधाने सपर्गे, पितेति मातुरुपलक्षणम्। वशिष्ठः "प्रत्तानां तु स्त्रीणां त्रिरात्रमशौचं विज्ञायते" इति पित्रोरिति शेषः।

वृहस्पतिः,—
ग्रावाशौचं त्रिरात्रं स्यान्मरणागुरुनिपातने।
दुहितृणां तु विप्राणां सर्ववर्णेष्वयं विधिः॥

दुहितृपदममभिव्याहारात् महागुरू पितरौ विज्ञानां विवाहितानां, तत्र स्मृत्य इत्युपादानाभावात् यत्र कुत्रापि स्थितौ दुहितॄणां पित्रोश्च मृतावन्योऽन्यं त्र्यहं, रदोत्पत्त्यनन्तरं यदाकदाचिद्दुहितृमरणे पित्रोः चिराचाशौचस्य प्राप्तावेऽपि पुनरुपादानं स्फुटत्वार्थं "यत्र कुत्रापि" इत्यस्य प्राप्त्यर्थश्च ।

सन्यासी प्रेति चेत्तत्रिगमयति सुतस्तद्दिने स्नानपूर्वं,
नीरं दत्वैव सद्यः शुचिरथ यतिनोऽप्यातुरस्याभियुक्ताः ।
मृत्यौ केचित्तथेति ब्रुवत इह परे तत्रिरस्यैव पूर्णा-
शौचं दाहादिकृत्यं परमितरगृहस्थाविशेषं वदन्ति ॥

"अग्निजलसंग्रामदेशान्तरस्थसन्यास्यनशनमहाध्वनिकानामुदकदानं कार्य्यम्" इति सुमन्तुवाक्यात् । "सन्न्यस्ते सद्यःशौचं विधीयते" इति ब्रह्मवाक्याच्च सन्न्यासिमृतौ पुत्रस्यापि तद्दिने उदकदानमात्रम् । श्रवणे सद्यःशौचमेव । अनुक्तोऽप्युपवासः कार्यः । यत्तु वक्ष्यमाणप्रचेतोवाक्ये जलदानस्य निषिद्धत्वं तत्प्रथमदिनव्यतिरिक्तविषयम् । एवं आतुरसन्न्यासिमरणेऽपि सद्यःशौचमिति केचित् । वस्तुतस्तु सुमन्तूक्तौ सन्न्यासिपदोपादानेऽपि "सन्न्यस्ते सद्यः शौचं विधीयते" इति वाक्ये सन्न्यस्तपदे च निष्ठान्ते साङ्गप्रधानक्रियोपरमप्रतीतेर्दीक्षितनियमे[१] साङ्गदीक्षाव्यापारोपरमप्रतीतिवत्सर्वेतिकर्त्तव्यतायुक्तस्य सन्न्यासस्य अपवर्गे सन्न्यस्तत्वं दीक्षितत्ववदिति । तदुक्तं पूर्वमीमांसापञ्चमाध्यायतृतीयपादे । "परेणावेदनात् दीक्षितः स्यात् सर्वे दीक्षाभिसम्बन्धादिति" । प्रैषोच्चारणमात्रेण सन्न्यस्तत्वा-

(१) प्रतीतेर्दीक्षोपरमे ।

भावात् सन्न्यस्ते सद्यःशौचमित्यस्यापवादस्याभावात् दशाहाशौचमेव। एवं च सुमन्तूक्तौ सन्न्यासिपदं सन्न्यस्तपरं। किञ्च आतुरसन्न्यासिनो दैवाज्जीवने,

अग्नीन् परिचरेत् सम्यक् न त्यजेद्दाहकारणात्।

इति श्रीधरस्वामिवाक्यात् सर्व एव मरणोत्तरसंस्कारा गृहस्थाविशेषाः।

सद्यःशौचे हि वर्णी बहुभिरभिमतस्योपकुर्वाणको यः,
कैश्चित् सोऽपि व्रतेऽस्मिन् गतवति गदितोऽशौचवान् वा त्रिरात्रम्।
पित्रोर्मृत्यौ तु दाहादिकमखिलविधिं सोऽपि कुर्वीत किन्तु,
प्रेतान्नं नैव खादेद्विजनियमयुतो ज्ञातिसम्पर्कहीनः॥

छन्दोगपरिशिष्टे,—

न त्यजेत् सूतके कर्म ब्रह्मचारी स्वकं क्वचित्।
न दीक्षणात्परं यज्ञे न कृच्छ्रादितपश्चरन्॥
पितर्यपि मृते नैषां दोषो भवति कर्हिचित्।
अशौचं कर्मणोऽन्ते स्यात् त्र्यहं तु ब्रह्मचारिणाम्॥

सूतकेऽशौचे स्वकं ब्रह्मचर्य्याश्रमविहितम्।

मनुरपि,—

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्।
संप्राप्ते तु दकं कुर्य्यात् त्रिरात्रमशुचिर्भवेत्॥

आदिष्टं व्रतं अस्यास्तीति आदिष्टी ब्रह्मचारी।

याज्ञवल्क्यः,—

आचार्य्यपितृपाध्यायान्निर्हृत्यापि व्रती व्रती।

सकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥

अत्र विज्ञानेश्वराः, माता च पिता च पितरौ, एतन्निर्हृत्यापि व्रती ब्रह्मचारी भवेत्, न पुनरस्य व्रतभङ्गः । कटशब्देन अशौचं लच्यते । कटसहितमन्नं सकटान्नं ब्रह्मचारी नाश्नीयात् नचाशौचिभिः सह संवसेत् एवं वदता याज्ञवल्क्येन आचार्य्यादिव्यतिरिक्तप्रेतनिर्हरणे ब्रह्मचारिणो व्रतभङ्ग इत्युक्तं ।

अतएव वशिष्ठः, "ब्रह्मचारिणः शवकर्मणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः", इति विज्ञानेश्वराणामयमभिप्रायः । पिता माचेत्येकशेषः । कटशब्दः शववाची, तचाशौचे लचणेति । अस्मद्देशे आचार्य्योपाध्यायाशौचव्यानादृतत्वात्तद्विषये न किञ्चिन्निबद्धं "पितर्य्यपि मृते नैषां" इति वाक्यं हि ब्रह्मचारिणः पितृमातृमृतावपि तदाश्रमविहितकर्मप्रतिपादकम् । न तु पितृमातृप्रेतकर्मनिवारकम्, अन्यथा याज्ञवल्क्यवशिष्ठवाक्यविरोधः स्यात् ।

ब्रह्मचारी द्विविधः,—

द्विविधो ब्रह्मचारी स्यादाद्यो ह्युपकुर्वाणकः ।
द्वितीयो नैष्ठिकश्चैव तस्मिन्नेव व्रते स्थितः ॥

इति दचोक्तेः ॥

एकाहं स्यात् प्रयाते मरणमनुपनीतासपिण्डेऽथ सद्यः-
शौचास्तचादिशिल्पिद्विजनिचयव्रतौ सूपकारादिकारुः ।
अन्यानिर्वाह्यकार्य्येष्वपतिषु च निजेष्वेकभूमीपतीष्टौ,
वैद्यः सत्री च भूपानुचरनृपतयो दासदास्यावमात्यः ।

हारीतः "एकाहमसपिण्डतः" इदमनुपनीतासपिण्डपरम् ।

सद्यःशौचे विष्णुः,— नाशौचं राज्ञां राजकर्मणि, न व्रतीनां व्रते, न सत्रिणां सत्रे, स्वकर्मणि च राजाज्ञाकारिणां, न कारूणां कारुकर्मणि।

प्रचेताः,— कारवः शिल्पिनो वैद्या दासदास्यस्तथैव च।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः॥

कारवः सूपकारादयः। शिल्पिनो वर्द्धकिचित्रकारशौचिक-चेलनिर्णेजकतन्तुवायादयः।

दासस्तु,—अधिकारी तु यो यस्य स दासस्तस्य कीर्त्तितः।

इति लघुहारीतोक्तलक्षणः।

व्यासः,— चिकित्सको यत् कुरुते तदन्येन न शक्यते।
तस्मात् चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः॥

पराशरः, "यस्य चेच्छन्ति ब्राह्मणाः। बहवो ब्राह्मणाः सम्भूय यस्य शुद्धिमिच्छन्ति तस्य सद्यःशौचमित्यर्थः।

याज्ञवल्क्यः,—"यस्य चेच्छन्ति भूमिपः" अतएव "यस्य चेच्छन्ति नरेन्द्राः" इति शातातपोक्तौ बहुत्वमविवक्षितम्। तस्मादेकेनापि मूर्द्धाभिषिक्तेन यस्य इष्यते, तस्य सद्यःशौचम्। पराशरः, "वैद्यामात्यास्तथैव च"। अशौचेऽपि शिल्पादिकर्मणामन्यानिर्वाहे तैरेव शिल्पिप्रभृतिभिर्यज्ञपात्रादिलक्षणादिकं कारयित्वा तत् कर्म कार्यं, इति तेषां तत्कर्मसु तात्कालिकी शुद्धिरित्यर्थः। एवं सति श्रीपुरुषोत्तमक्षेत्रे श्रीजगन्नाथादिमूर्त्तिनिर्माणादौ तच्छिल्पिनां अशौचाभावसमाचारः तन्मूल एव॥

कोपादिः स्वेच्छयाशीविषभृगुपतनोद्बन्धनैर्वैद्युताम्य-

म्लाम्याद्यैर्दीपिदंष्ट्रिश्वपचभुजगगोशृङ्गिदंष्ट्रादिहिंस्रैः ।
राज्ञा विप्रेण नष्टेऽनशनमृतमहापापिनोश्चाभिशस्ते,
सद्यःशौचं तु पूर्णे त्वनवहिततया दुर्मृतौ स्याच्च वैध्याम् ॥

कोपादेरिति अपमानादेः संग्रहः । वैध्यां दुर्गतावपि विधि-विहिते दुर्मरणेऽपीत्यर्थः ।

पराशरः,—

अपमानादथ क्रोधात् स्नेहात् परिभवात् भयात् ।
उद्बध्य म्रियते नारी पुरुषो वा कथञ्चन ॥
पूयशोणितसंपूर्णे अन्धेतमसि दारुणे ।
षष्टिसहस्रवर्षाणि[1] हत्वात्मानं वसेन्नरः ॥

गौतमः,—

प्रायोऽनशनशस्त्राग्निविषोदकोद्बन्धनपतनैश्चेच्छताम् ।

शङ्खः,— आवन्धनशनाम्भोभिर्मृतानामात्मघातिनाम् ।
पतितानाञ्च नाशौचं शस्त्रविद्युद्धताश्च ये ॥

तथा,— व्यापादयेदथात्मानं स्वयं योऽग्न्युदकादिषु ।
विहितं तस्य नाशौचं नाग्निनाप्युदकक्रिया ॥

विष्णुपुराणे,—

बाले देशान्तरस्थे च पतिते च मुनौ मृते ।
सद्यः शौचं तथेच्छातो जलाग्न्युद्बन्धनादिषु ॥

स्मृत्यन्तरे,— स्वेच्छया मरणे विप्राच्छृङ्गिदंष्ट्रिसरीसृपैः ।
अन्यान्त्यज[2]विषोद्बन्धैरात्मना चैव ताडनैः ॥

---

(१) चान्यान्त्यज । (२) षष्टिवर्षसहस्राणि ।

संपूर्णं सर्वगात्राणां विषाद्याकर्षणेऽपि वा ।
विषाग्निगर्भपातैश्च रोहारोहादिभिस्तथा ॥
येषामेव भवेत्ते वै कथिताः पापकर्मिणः ।
पाषण्डमाश्रिताश्चैव महापातकिनस्तथा ॥
स्त्रियश्च व्यभिचारिण्य आरूढ़पतितास्तथा ।
न तेषां स्नानसंस्कारौ न श्राद्धं न सपिण्डता ॥

सद्यःशौचे मनुः,—

डिम्भाहवहतानाञ्च विद्युता पार्थिवेन च ।

आहवे हतस्येति पराङ्मुखहतस्येति बोध्यम् ।

अन्यथा, महाभारते, महता प्रबन्धेन उक्ता उदकादिक्रिया व्यर्था स्यात्। इदं सद्यःशौचं क्रोधादिना बुद्धिपूर्वतया यत्र मरणशङ्का, तत्रावस्थितं भवति । प्रमादेन यदा विधिवाक्येन विहितभृगुपातादिना दुर्मरणेऽपि सम्पूर्णाशौचमेव।

तथाच शङ्खाङ्गिरसौ,—

अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिषु ।
तस्याशौचं विधातव्यं कार्या चाप्योदकक्रिया ॥
दुश्चिकित्सैर्महारोगैः पीड़ितश्च पुमानपि ।
प्रविशेत् ज्वलनं दीप्तं करोत्यनशनं तथा ॥

तथा,— स्वयं देहविनाशे तु काले प्राप्ते महामतिः ।
उत्तमानाप्नुयाल्लोकान् नात्मघाती भवेन्नरः ॥

यत्तु,— वृद्धश्चैव क्रियालुप्तप्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेत् यस्तु भृग्वग्न्यनशनाम्बुभिः ॥

तस्य त्रिरात्रमाशौचं द्वितीये तस्थिसञ्चयः ।
तृतीये तूदकं दत्वा चतुर्थे श्राद्धमाचरेत् ॥

इति शातातपवाक्यं, तस्य सगुणनिर्गुणत्वविचारस्य कलीतर-विषयत्वात् कलियुगेतरविषयत्वम् । एवं कालिदासचयिनिभिर्युद्धे पराङ्मुखहतस्यापि कालान्तरे मृतौ पक्षरद्दाशौचं लिखितं, अन्यत्रापि यद्व्यवस्थापितं, तत्सर्वं कलीतरविषयमेवेति ज्ञेयम् ॥

नष्टे मातामहे तु श्वशुरगुरुषु वा मातुलेऽशौचमुक्तं,
त्यक्त्वा स्नानोपवासौ विदधति सुधियस्तत्प्रियाणां च नाशे ।
नाशौची ब्रह्मवित्स्यात् सकल इह यतिर्नैष्ठिकब्रह्मचारी,
वानप्रस्थोऽप्यहन्तिर्हरिभजनपरः त्यक्तसद्यापि शूद्रः ॥

यद्यपि स्मृतिषु मातामहश्वशुरगुरुमातुलानां मातामहीश्वश्रूगुरुपत्नीमातुलीनां त्र्यहपक्षिण्याद्यशौचमुक्तम् । तथापि तदनादृत्य स्मार्ता तन्मरणेऽपि वार्ताश्रवणेऽपि वा स्नानोपवासावेव समाचरन्तीति शिष्टाः । पूर्वं तत्तत्कर्मणां तत्तत्कर्मिषु अशौचाभावमुक्त्वा इदानीं यतिप्रभृतीनां नैवाशौचमित्याह नाशौचीत्यादिना ।

यद्यपि,— सतीव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥

इति याज्ञवल्क्याद्युक्तिषु व्रतिप्रभृतीनामपि सद्यःशौचं साधारणेनोक्तम् । तथापि,—

नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं कीर्त्यते सद्भिः—

इत्यादिवाक्यादेकदण्ड्यादिसकलसन्न्यासिनां नैष्ठिकब्रह्मचारि-

शौचब्रह्मविदां प्रतिपद्दनिष्टत्त्ववानप्रस्थानां च सर्वथा नाशौचम्।
नाशौचं विद्यते क्वचिदित्यनुष्टतौ, वानप्रस्थस्य सर्वदा,—

प्रतिपद्दाधिकाराच्च नित्यस्य न विद्यत इति

छन्दोगपरिशिष्टोक्तेः। प्रतिपद्दनिवृत्तत्वं वनस्थाश्रमिणि वाक्ये-
ष्यन्येति। तथाच सद्वृत्तिवानप्रस्थे नाशौचं कुर्यात्। उपकुर्वाण-
कब्रह्मचारिणोऽशौचाभावेऽपि पितृविषयेऽशौचस्योक्तत्वात् नैष्ठिक-
ब्रह्मचारिण एवाशौचाभाव उक्तः। यदि शूद्रोऽपि पुत्रकलत्रादिकं
त्यक्त्वा वैष्णवो भवति तदा तस्यापि यतिवदशौचाभावः।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।

इति सर्ववर्णाश्रमसाधारण्येन श्रीभगवदुक्तेरिति वदन्ति। हरि-
पदस्य उपलक्षणत्वात्, हरादिसर्वदेवैकभक्तानां त्यक्तगृहाणां
नाशौचम्।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥

इत्यादिभगवदुक्तेः।

सर्वदेवनमस्कारः केशवं प्रति गच्छति।

इति पुराणान्तरोक्तेश्च॥

दाहे वाहे शवस्यानुगमनकरणे स्नानप्राणायमाद्या
द्रौस्विस्पर्शे सजातेरिदमपि रुदिते यावदस्थिस्थितिः स्यात्।
ऊर्द्धं चाचममात्राद्भवति हि शुचिताऽथो न शूद्रस्य विप्रा
दाहं वाहं शवस्यानुगममपि तथा रोदनं जातु कुर्युः॥

सजातीयशवस्य दहनवहनानुगमने च केवलस्पर्शे च सजाती-

यादृग्नित्यसर्गे च अस्थिसञ्चयावधि(१) रोदने च ज्ञातिभिन्नानां निर्हरणाद्यशौचापगमार्थं स्नानं प्राणायामाद्य ।

तथाच याज्ञवल्क्यः,—

प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।

इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥

संयमात् प्राणायामात्, परेषां ज्ञातीनां ।

अङ्गिराः,—प्रेतसंसर्गसंस्कारे ब्राह्मणो नैव दूष्यति ।

अथ वाप्यग्निदाता च सद्यः स्नात्वा शुचिर्भवेत् ॥

तत्राग्निदातुः स्नानेन सद्यःशौचं तत्कर्मण्येव नान्यतः ।

बौधायनः,— शवोपस्पर्शनेऽनभिसन्धिपूर्वे सचेलोऽपः स्पृष्ट्वा सद्यः शुचिर्भवति, अभिसन्धिपूर्वे चिरात्रमृतुमत्याश्च । अभिसन्धिः धानादिकेच्छा, सचेलोऽपः स्पृष्ट्वा स्नात्वेत्यर्थः ।

असपिण्डं द्विजं प्रेतं विप्रोनिर्हृत्य बन्धुवत् ।

विशुध्यति चिरात्रेण मातुराप्तांश्च बान्धवान् ॥

यद्यन्नमत्ति तेषाञ्च दशाहेनैव शुध्यति ।

अनदन्नन्नमह्नैव न चेतस्मिन् गृहे वसेत् ॥

इति मनूक्तिस्तु कालान्तरविषया ।

अनुकम्पेच्छया प्रेतं ज्ञातिमज्ञातिमेव वा ।

स्नात्वा सचेल स्पृष्ट्वाग्नि घृत प्राश्य विशुध्यति ॥

इतिवाक्यान्तराच्च नाशौचाधिकारादर इत्यादिशौचाः ।

(१) अस्थिसंचयनावधि ।

याज्ञवल्क्यः,—

नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।

आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्षते ॥

एतत् सजातीयास्थिविषयम् ।

ब्राह्मे,— मृतस्य यावदस्थीनि ब्राह्मणस्याहृतान्यपि ।

तावत्तद्बान्धवस्तत्र रौति चेद्बान्धवैः सह ॥

ततः स्नात्वा भवेच्छुद्धिस्तत्स्पृष्ट्वाचमनं चरेत् ॥

ऊर्द्धमाचमनमिति । यावदस्थिसञ्चयनं न क्रियते, तावद्बान्धवः उदासीनोऽपि रौति चेदित्यर्थः। सजातीयविषयञ्चैतत् । क्षत्रिय-वैश्ययोः कलियुगेऽभावात्तच्छवस्य विचारो न कृतः। शूद्राणां वहनदहनादिकं ब्राह्मणैः सर्वथा न कार्य्यम् ।

ब्राह्मणो न दहेत् शूद्रं मित्रं वाप्यन्यमेव वा ।

मोहाद्दग्ध्वा ततः स्नातः स्पृष्ट्वाग्निं प्राशयेद्घृतम् ॥

उपवासरतः पश्चात्त्रिरात्रेण विशुध्यति ।

इति प्रायश्चित्तोक्तेः,

ब्राह्मणो नानुगन्तव्यो न तु शूद्रो कथञ्चन ।

इति याज्ञवल्क्योक्तेः ।

विप्रैर्दग्धाश्च ये शूद्रा गतिं तेषां न जानाम्यहम् ।

इति जैमिनीयरामायणे भरतवाक्ये दोषोक्तेश्चेत्यलमति विस्तरेण ॥

प्रेतस्पर्शी दिवा चेन्निशि निशि तु दिवा याम उक्तः प्रवेशो यद्वादाय द्विजाज्ञामतिविपदि पुनः सोऽवधिर्न प्रतीक्ष्य ।

पुत्राणामाकुरेके श्रवनमिति परे सर्वमापिण्डभाजां
केचित् प्रेतावराणां मृतिदशमदिनेऽथ स्त्रियस्त्विषिद्धम् ॥

पारस्करः,— "प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनात्, रात्रौ चेदादित्यस्य"। प्रेतस्पर्शानुवृत्तौ हारीतः,— "ब्राह्मणानामनुमत्या वा" तथाच यदा ग्रामप्रवेशं विना आत्यन्तिकः कार्यनाश आपद्यते[१], स्पर्शिनोऽशक्तिर्वा, तदा ब्राह्मणाज्ञां गृहीत्वा पूर्वोक्तावधिमुल्लंघ्य ग्रामप्रवेशेऽप्यदोषः।

स्मृत्यन्तरे,—

गङ्गायां भास्करे क्षेत्रे मातापित्रोर्गुरोर्मृते।
मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥
वर्जयित्वा कुरुक्षेत्रं विशालं विरजां गयां।

मृते मरणे नैमिषं पुष्करं गयां इति पाठान्तरम्। अत्र यन्मुण्डनमुक्तं तन्मातापित्रोर्मरणावधिदशमाह एव। उपवासो मृताह एवेत्यस्मद्देशसमाचारः। पितृमातुपघात इति आग्नेयोक्तेः। देशविशेषे तु गङ्गायामिति वाक्ये मातापित्रोर्मृतेऽहनि इति पठित्वा मातृपितृमरणदिनेऽपि चौरं कुर्वन्ति।

अस्मद्देशे तु,—

आर्द्रवासास्तु मलिनः श्मश्रुलो दशभिर्दिनैः।
मातापित्रोः क्रियां कुर्यात् ज्ञातिबन्धुसमन्वितः ॥

इति वृद्धस्मृत्युक्तौ श्मश्रुलः क्रियां कुर्यादित्यभिधानात् क्रियाकर्त्तुर्दशमदिनात् पूर्वं चौराभावसमाचार इति। क्रियाकर्त्तुर्वपनम्।

(१) आपद्येत।

पारस्करः,—"वपनश्चानुभाविनां" अनु पश्चाद्भवन्तीति अनुभाविनः, प्रेतकनीयांसस्तेषां तथाच प्रेतज्येष्ठानां न वपनमित्यभिप्रायः।
केचित्तु,— तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च।
इति याज्ञवल्क्योक्तेः सर्वसपिण्डानां क्षौरमिति। पक्षत्रयेऽपि स्त्रीणां नैव क्षौरम्।

प्रायश्चित्ते समुत्पन्ने प्रेतकृत्ये तु योषिताम्।
निषिद्धं वपनं केचित् तीर्थेष्वपि यथेच्छया॥

इति स्मृतेः।

न स्यादाचार्यमातापितृमरणदिनात् द्वादशाहानधीति,
र्न स्यात् शिष्ये गुरौ ऋत्विजि च मृतिमति त्रीणि न स्युर्दिनानि।
ग्रामान्तस्थे शवे नाध्ययनमभिहितं नीयमाने च दृष्टे,
स्वग्रामीणे मृते नाग्रनमतिनिकटग्रामगेऽपि प्रमीते॥

अनध्यायानुवृत्तौ आपस्तम्बः,— "वैरमरणं गुरुष्वष्टाख्ये त्र्यहम् तथा मातरि पितर्याचार्ये च द्वादशाहं" इति। वीरमरणमेव वैरमरणमिति अध्ययननिवृत्तिरित्यर्थः। गुरुषु प्रेतेष्वित्यनुषङ्गः। अष्टाख्ये (अष्टकायां)।

उपनीय वदेद्वेदं आचार्यः स उदाहृतः।

इत्युक्तलक्षणे आचार्ये। "ऋत्विक् यज्ञकृदुच्यते" इत्युक्तलक्षणे ऋत्विजि।
याज्ञवल्क्यः,— त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु।
तथा,— अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके॥
अनध्ययनानुवृत्तौ नारसिंहे,— "नीयमानं शवं दृष्ट्वेति"।

मनुः,— स्वग्रामे ग्रामतो वापि सन्निकृष्टे मृतेऽपि वा ।
न भुञ्जीताशनं धीमाना धर्मशोककारणात् ॥

स्वग्रामे (स्वग्रामीणे)। ग्रामतः सन्निकृष्टे सन्निकृष्टग्रामीणे इत्यर्थः ।

वर्षान् पञ्चोत्तरांश्चेत् पितरि दश गते नागतिर्नापि वार्त्ता,
त्वन्येषु द्वादशाब्दान् तदुपरि निखिलं प्रेतकर्मादि कार्य्यम् ।
जीवंश्चेत् कश्चिदायात्तमपि घृतघटे प्राश्य चोद्वास्य कार्य्यम्,
जाताद्यं कर्म नेहाजिनधृतिवपने मेखलादण्डभिक्षाः ॥
इत्येवं संस्कृतः सोऽप्यचल उपवसेत् द्वादशाहं त्र्यहं वा,
तस्मादागत्य पूर्वां स्त्रियमपि विवहेत्तद्दिनाशे तथान्याम् ।
साग्नेरायुष्मतीष्टिस्त्विह भवति पुरोडाशकोऽष्टाकपाल,
ऐन्द्राग्नेयो निरग्नेश्चरुरिह तु मतः सोऽयमायुष्मताख्यः ॥

प्राश्य घृतकुम्भे क्षिप्त्वा, अचले (पर्वते) जाताद्यं कर्म, जातकर्मादि-पुनःसंस्कार इत्यर्थः ।

मार्कण्डेयः,—

गतस्य न भवेद्वार्त्ता यस्य द्वादशवार्षिकी ।
प्रेतावधारणं तस्य कर्त्तव्यं सुतवान्धवैः ॥
पिता प्रवसितो यस्य न च वार्त्ता न चागमः ।
ऊर्द्धं पञ्चदशाद्वर्षात् कार्या पिण्डोदकक्रिया ॥

सुततुल्या वान्धवाः सुतवान्धवाः इति मध्यपदलोपिसमासः । अन्यथा पितेत्यादितदनन्तरवाक्यस्यासंलग्नता स्यात् ।

तथाच जातुकर्णः,—

पितरि प्रोषिते यस्य न वार्त्ता नैव चागतिः ।

ऊर्द्धं पञ्चदशाद्वर्षात् कृत्वा तत् प्रतिरूपकम् ॥
कुर्य्यात्तस्य च संस्कारं यथोक्तविधिना ततः।
तदानीमेव सर्वाणि प्रेतकार्याणि सञ्चरेत् ॥

हारीतेन तु,— प्रोषितस्तु पिता पुत्रैः प्रतीक्ष्यो विंशतिः समाः।
तीर्णः पञ्चदशाद्वापि पश्चान्मृतवदाचरेत् ॥

इति विंशतिवर्षपक्ष उक्तः। स पक्षो नाद्रियते इति।
विहितक्रियस्य जीवतः तस्य दैवादागमने, वृहन्मनुः,—

जीवन् यदि समागच्छेद् घृतकुम्भे नियोज्य तम्।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतं कुर्य्यात्त्रिरात्रमथवास्य तु।
स्नात्वोद्वहेत्ततो भार्य्यामन्यां वा तदभावतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्।
तथैवेन्द्राग्निपशुना गिरिं गत्वा च तत्र तु ॥
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्तथा।

इदं साग्नेः। निरग्नेस्तु चरुरेव स चैन्द्राग्नेयः। तदुक्तं गृह्यप्रायश्चित्ते,—"आहिताग्नेः पुरोडाश एव अनाहिताग्नेश्चरुर्भवति, इति"।
पुनरुपनयने वर्ज्यान्याह मनुः,—

वपनं मेखलादण्डौ भैक्ष्यचर्या व्रतानि च।
न वर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥

तत्र वृहन्मनूक्तवचनस्यार्थकमः कालदर्शकारिकायां स्फुटमुक्तः।

यदा गच्छेत् पुमान् जीवन् स पैत्र्येऽधिकसंस्कृतः।
घृतकुम्भे स्नापयित्वा तमुद्धृत्य शुभे क्षणे ॥

संस्कृतं जातकर्माद्यैरुपनीतं विधानतः ।
द्वादशाहं चिरात्रं वा विहितोपोषणं मतम् ॥
गिरावागत्य पूर्वां वा तदभावे परां स्त्रियम् ।
उद्वहन्तं च संस्कुर्यात् चरुणायुष्मतेन च ॥

इति कारिकयोः । इत्यशौचकारिका ।

अथ कृतानशनादिप्रतिज्ञापूर्वकान्तर्जलस्य दैवाज्जीवने गृहाश्रमं कर्त्तुकामस्य प्रायश्चित्तं अनशनमधिकृत्य आग्नेयवाराहयोः,—

कारयेत् त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि वा ।
जातकर्मादिसंस्कारैः संस्कुर्यात् तं तथा पुनः ॥

अनुगमनेऽशौचस्य उक्तत्वात् तत्प्रसङ्गादनुगमनं विचार्य्यते ।
अग्निप्रवेशं प्रकृत्य व्यासः,—

यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः ।
संप्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः ॥
तिष्ठते विवशो दीनो वेष्ट्यमानः स्वकर्मभिः ।
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ॥
तद्वद्भर्त्तारमानीय दिवं याति च सा बलात् ।

अङ्गिराः,— मृते भर्त्तरि या नारी समारोहेत् हुताशनम् ।
सारुन्धतिसमाचारा स्वर्गलोके महीयते ॥
तिस्रकोट्योऽर्द्धकोटी च यानि लोमानि मानुषे ।
तावन्त्यब्दानि सा स्वर्गे रमते चोमया सह ॥

व्यालग्राहीत्यादि ।

तथा,— मातृकं पैतृकं चैव यत्र कन्या प्रदीयते ।

पुनाति त्रिकुलं नारी भर्त्तारं यानुगच्छति ॥
तत्र सा भर्त्तृपरमा परा परमलालसा ।
क्रीड़ते पतिना सार्द्धं यावदिन्द्राश्चतुर्द्दश ॥
ब्रह्मघ्नो वा पितृघ्नो वा कृतघ्नो वापि मानवः ।
तं वै पुनाति सा नारी इत्याङ्गिरसभाषितम् ॥
साध्वीनामेव नारीणामग्नौ प्रतपनादृते ।
नान्यो धर्म्मो हि विज्ञेयो मृते भर्त्तरि कर्हिचित् ॥
यावच्चाग्नौ दहेत्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात् कथञ्चन ॥

साध्वीनामिति सर्व्ववर्णसाध्वीनामित्यर्थः ।

महाभारते,—

आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥

इति सर्व्ववर्णसाधारण्येन तल्लक्षणोक्तेः । तत्र बालापत्यादिस्त्रीणां नाधिकारः ।

तथाच व्याघ्रपादः,—

न म्रियेत समं भर्त्रा ब्राह्मणी शोकमोहिता ।
प्रव्रज्यागतिमाप्नोति मरणादात्मघातिनी ॥

अन्यत्र,— उपकारं चरेद्भर्त्तुर्जीवन्ती न तथा मृता ।
करोति ब्राह्मणी श्रेयो भर्त्तुः शोकवती सती ॥

तथा,— स्वैरिणीनाञ्च नारीणां पतितानाञ्च योषिताम् ।
नास्ति पत्याग्निसम्वेशः पतितौ हि तथा हि तौ ॥

पतिद्विट् स्वैरिणी नारी नानुगच्छेत् कदाचन ।
बालापत्याश्च गर्भिण्यो ह्यदृष्टरजसस्तथा ॥
रजस्वला राजसुते नारोहन्ति चितां शुभे ।

पारस्करः,— बालसंवर्द्धनं त्यक्त्वा बालापत्या न गच्छति ।
रजस्वला सूतिका च रक्षेद्गर्भञ्च गर्भिणी ॥

अन्यत्र,— तृतीयेऽह्नि उदक्याया मृते भर्त्तरि वै द्विजाः ।
तस्यानुमरणार्थाय स्थापयेदेकरात्रकम् ॥

तथाच,— "रजस्तुर्थदिने सहगमनेऽधिकारः" ब्राह्मणस्त्रीणां पतिदेहदाहकाले एकचितावेव सहगमनं नान्यचितौ। तत्र "मृतानुगमनं नास्ति" इति पैठीनसिवाक्यं लिखितम् ।

पुनस्तद्वाक्यमपि,—
या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् ॥

पृथक् चितिमिति उशनोवाक्यमपि लिखितम् । तथाच क्षत्रियादिस्त्रीणामेव पतिदाहानन्तरं यदा कदाचिदपि चिह्नानि गृहीत्वानुगमनमिति सिद्धं ।

तद्विधिश्च ब्राह्मे,—
देशान्तरगते तस्मिन् साध्वी तत्पादुकाद्वयम् ।
निधायोरसि तच्चित्ता प्रविशेत् जातवेदसम् ॥

यत्तु केश्चिदुक्तम्,— "स्वःकामा प्रेयादिति श्रुतेः", अतिप्रवृद्धस्वर्गाभिकामाया[१] एव अयमनुगमनोपदेश इति

(१) स्वर्गादिकामाया एव ।

पुरुषाणामिव स्त्रीणामप्यात्महननस्य प्रतिषेधादात्महत्याप्रायश्चित्तं कार्य्यमित्याशङ्कितं, तन्न, स्त्रीणामनुगमनस्य प्रायश्चित्तत्वात् । तथाच प्रायश्चित्तप्रकरणे, गारुड़े,—

ब्रह्मघ्नं वा कृतघ्नं वा महापातकदूषितम् ।
भर्त्तारमुद्धरेन्नारी प्रविष्टा सहपावकम् ॥
एतदेव परं स्त्रीणां प्रायश्चित्तं विदुर्बुधा. ।

प्रचेताः— चितौ परिष्वज्य विचेतनं पतिम्,
प्रयाति या मुञ्चति देहमात्मनः ।
कृत्वा हि पापं शतलक्षमप्यसौ,
पतिं गृहीत्वा परलोकमाप्नुयात् ॥

सत्यनुगमने आत्महत्यादोषाभावः स्फुटमुक्तो ब्राह्मे,—

ऋग्वेदवादात् साध्वी स्त्री न भवेदात्मघातिनी

सहगमननियुक्तमन्त्रलिङ्गादित्यर्थः ।

तथाच मन्त्रः,—

"इमा नारीरविधवाः सपत्नीराञ्जनेन सर्पिषा संविशन्तु, अनश्रवो[१] अनमीवाः सुरत्ना आरोहन्तु जनयो योनिमग्रे" इति। इमाः नारीः नार्य्यः अविधवाः भर्त्तृवियोगरहिताः सम्विशन्तु संशेरतां किंविशिष्टाः सपत्नीः पतिव्रताः। आञ्जनेन अञ्जनसंबन्धिना सर्पिषा विशिष्टा इति शेषः कृताञ्जनादिप्रसाधना इत्यर्थः। अनश्रवो अकृतरोदनाः शोकमोहरहिताः संहृष्टा इति यावत् । अनमीवाः अरोगाः, सुरत्नाः शोभनाभरणाः । किमर्थमारोहन्तु इत्याशङ्क्याह

(१) अनस्रवो ।

अप्येयोनिसुत्तमयोनि जनयो जनयन्य आरोहन्तु, आरोहण-मत्रानुयानम्। एवं रजस्वलादिव्यतिरिक्तानां सर्वासां सहमरणे-ऽधिकारः।

ननु कार्यकारणयोः सामानाधिकरण्यस्य शास्त्रसिद्धत्वात् कथं पत्नीगतानुगमनेन पतिगतदुरितापूर्वस्य चय इति चेन्न। पति-पत्न्योः सहकर्तृत्वेन अग्निहोत्रादिसाध्यस्वर्गादिवदुपपत्तेः। आर्त्ता-त्यादिवाक्ये पत्यनुकूलायाः पतिव्रतात्वात् सहमरणे तस्या एवाधि-कारे सिद्धेऽपि,—

> अवमन्ति च याः पूर्वं पतिं दुष्टेन चेतसा।
> वर्त्तन्ते याश्च सततं भर्तॄणां प्रतिकूलतः॥
> भर्त्रानुमरणे काले याः कुर्वन्ति तथाविधाः।
> कामात् क्रोधात् भयान्मोहात् सर्वाः पूता भवन्त्युत॥
> आदिप्रभृति या साध्वी भर्त्तुः प्रियपरायणा।
> ऊर्द्धं गच्छति सा नारी भर्त्रानुमरणे गते[1]॥

इति उतशब्दश्रवणात् पत्यवमाननकर्त्त्र्यादीनामपि परलोक-प्राप्तिः पापक्षयश्चेति तत्साधकत्वेन चारितार्थ्यमिति। पत्यौ मृते या म्रियते सा पतिव्रतेत्यनेन सहगमनस्य नित्यत्वाद्रोगगर्भादिना पतिव्रताया अपि सहगमनाभावेऽपि ब्रह्मचर्य्याचरणाच्च व्रतक्षतिः।

तथाच विष्णुः,— "मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वेति" इत्यन्तरे, सर्वविधवाधर्मानुक्त्वा,—

> एवं धर्मसमायुक्ता विधवापि पतिव्रता।

---

(१) मते।

पतिलोकमवाप्नोति न भवेत् क्वापि दुःखिता ॥

तथा,— प्रेतकृत्यं समाप्यैव ब्रह्मचर्य्ये व्यवस्थिता ।

प्रव्रज्यागतिमाप्नोति हरिं स्वामिवदाचरेत् ॥

इत्यग्निप्रवेशविचारः ।

अथैतत् प्रासङ्गिकतया सर्व्वे दाहभेदा लिख्यन्ते । तत्रादौ सन्निहितत्वादग्निप्रवेशदाहविधिः ।

नारदः,—

अग्निप्रवेशे नारीणां किं कर्त्तव्यं महामुने ।

स्नानमङ्गलसंस्कारभूषणाञ्जनधारणम् ॥

मङ्गलञ्च तथा सूत्रं पादालक्तकमेव च ।

शक्त्या दानं प्रियोक्तिश्च प्रशंसासत्वमेव च ॥

नानामङ्गलवाद्यानां श्रवणं गीतकस्य च ।

मङ्गलसंस्कारो नूतनवस्त्रालंकारादिः। दानं ब्राह्मणदीनानाथार्थिभ्यः, प्रियोक्तिः सर्व्वत्र प्रियभाषणम्। प्रशंसासत्वं गुणैककीर्त्तनपरम्।

मृतं पतिं समालिङ्ग्य या वह्निं प्रविविक्षते ।

सा स्नात्वा पूर्व्ववत् कृत्वा प्रायश्चित्तादिकं क्रमात् ॥

वैतरण्यादिदानानि दत्वा पाथेयकान्यपि ।

नववस्त्रयुगच्छन्ना गन्धमाल्यादिभूषिता ॥

सिन्दूरकज्जलोपेता कृतालक्तकभूषिता ।

शोकमोहादिरहिता नानावाद्यरवान्विता ॥

क्षिपन्ति पथि लाजादीन् चितायाः सन्निधिङ्गता ।

तत्र प्रेते चितारूढ़े प्राणन्यासे तु साग्निके ॥

आसीना प्राङ्मुखी तोयपात्रमादाय साचतम् ।
अद्येत्यादिदिव्यन्तं वाक्यमुच्चार्य पूर्ववत् ॥

मम सभर्तृकाया ब्रह्महत्यादिनानाविधपापक्षयपूर्वकचतुर्दशेन्द्रकालावच्छिन्नविशिष्टस्वर्गप्राप्तये पतिशरीरेण सह अग्निप्रवेशमहं करिष्ये ।

इति सङ्कल्प्य मन्त्रेण प्रार्थयेज्जातवेदसम् ।
त्वमग्निः सर्वभावज्ञ अन्तश्चारी जगद्गुरुः ॥
कर्मसाक्षी कृतवहः पावकोऽसि प्रधानतः ।
यथाहं स्वं निजं कान्तं मनसा कर्मणा गिरा ॥
अनुरक्ता तथा देव देहि जन्मान्तरे पतिम् ।

"त्वमग्ने रुद्रो असुरो महोदिवस्त्वं शर्द्धोमारुतं पृचो ईशिषे त्वं वातैररुणैर्यासिशंयं गयस्त्वं पूषा विदधतः पासित्मना"(१) ।

इति प्रार्थ्य चिताग्निं त्रिः परिक्रम्य प्रदक्षिणम् ।

"इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा संविशन्तु अनश्रवोऽनमीवाः सुरत्ना आरोहन्तु जनयो योनिमग्रे" ।

इन्द्रादयोऽष्टदिक्पालाः साक्षिणः सन्तु कर्मणि ।
इन्द्रियाणि च भूतानि मनो भूतानि पञ्च च ॥
प्रत्यागन्तुमना नाकं प्रविशामि कृताशनम् ।
सर्वेन्द्रियाणि दह्यामि प्रविशाम्यग्निमव्ययम् ॥
पत्या सहैव यास्यामि स्वर्लोकं पतिदेवता ।
पतिपावककल्पाय स्वाहेमं मम विग्रहम् ॥

(१) पासित्मना ।

इमं मन्त्रं समुच्चार्य्य पावकं प्रविशेत् सती ।
पतिद्विट् स्वैरिणी नारी नानुगच्छेत् कदाचन ॥
अथ तस्यां मृतायान्तु पुत्रो मन्त्रमनूदितम् ।
सकृत् पठित्वा मन्त्रेण[१] जुहुयादाहुतिं द्वयोः ॥
तौ पृथक्कृत्य दग्धव्यौ पृथगग्निचिते कृते ।
अन्यत्सर्व्ववाक्यानि लिखितानि । इति सहगमनविधिः[२] ॥
अथ सूतिरजस्वलयोर्दाहे विशेषः ।
स्नापयित्वा चतुर्थेऽह्नि मृतामृतुमतीं दहेत् ।
अतिक्रान्ते तु दशमे स्नापयित्वा प्रसूतिकाम् ॥
दाहेच्छा चेत्तयोर्जाता मध्ये अहदशाहयोः ।
तदा तामस्पृशस्द्भिः स्नापयित्वा घटे जलम् ॥
प्रपूर्य्य पञ्चगव्येन पुण्यर्ग्भिरभिमन्त्र्य तत् ।
स्नापयित्वा दहेत् कृच्छ्रं ततः कुर्य्युः शवस्पृशः ॥
पुण्यर्च्चस्तु,— "पावमानीः स्वस्त्ययनीः सुदुघाश्च घृतश्चुतः ।
ऋषिभिः संभृतरसो ब्राह्मणेष्वमृतं हितम् ॥
पावमानी दिशतु न इमं लोकमथोऽप्यमुम् ।
कामात् समर्द्धयन्तु नो देवीर्दैवैः समाहिताः ॥
येन देवाः पवित्रेण आत्मानं पुनते सदा ।
तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ॥
प्राजापत्यं पवित्रञ्च शतोद्यामहिरण्मयम् ।
तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥

---

(१) तन्त्रेण । (२) इति अग्निप्रवेशविधिः ।

पत्यादिना सगोत्रिणा अशौचानन्तरं प्रायश्चित्तं कर्त्तव्यम्। यथाह विष्णुधर्मोत्तरे,—

चतुर्णामिव वर्णानां गर्भिणीं प्रेततां गताम्।
दहेत् वहेच्च यस्तस्य कथं शुद्धिर्विधीयते॥
भर्त्ता तस्याः पृथक् कृत्वा गर्भस्योल्लेखनं स्वयम्।
घृतेन मधुनाभ्यक्तं शवधर्मेण दाहयेत्॥
शावाशौचेन भूतेन प्राणायामशतेन च।
उपोष्य पञ्चगव्यञ्च सगर्भाञ्चैव दक्षिणाम्॥
दत्वा ब्राह्मणमुख्याय शुध्यते नाच संशयः।

गर्भभेदकर्त्ता पतिः कृच्छ्रैकं कृत्वा अन्यश्चेत् कृच्छ्रद्वयं कृत्वा तद्दिनं उपोष्य अपरदिनप्रभाते प्राणायामशतेन पूतः पञ्चगव्य-पानानन्तरं तदङ्गदक्षिणां सगर्भां गां दत्वा शुद्धो भवति।

इति गर्भिणीदाहविधिः।

अथ अनुपनीताविवाहितकन्ययोर्दाहविचारः।

भूमिसंस्कारवन्न स्यात् हिरण्यशकलैर्विना।
असंस्कृतप्रमीतस्य दाहः कार्य्यो निरग्निवत्॥
अस्योदकक्रिया कार्य्या दशपिण्डाश्च पूरकाः।
विना दर्भैर्दशदिनैस्त्रिभिर्वा नास्थिसञ्चयः॥
सद्यःशौचे सद्य एव दशपिण्डास्त्र्यहाशुचौ।
प्रथमेऽह्नि चयः पिण्डा द्वितीयेऽह्नि चतुष्टयम्॥
तृतीयेऽह्नि चयः पिण्डाः पक्षिण्यां प्रथमे चयम्।
द्वितीयेऽहनि सप्त स्युरिति खण्डाशुचौ विधिः॥

पूर्ववत् कन्यकां दग्ध्वा पिता कृतोदकक्रियाम्।
विनास्थि सञ्चितं दद्यात् दशपिण्डान् त्रिभिर्दिनैः॥
अदिवर्षस्तं ग्रामात् वहिः प्रक्षाल्य वारिणा।
यमगाथां ततो गायन् यमसूक्तमपि स्मरन्॥
गन्धमाल्यैरलङ्कृत्य घृताक्तं निखनेद्भुवि।
वने हि काष्ठवत्[१] त्रिप्ता न कुर्वीतोदकक्रियाम्॥
अपि वा दहनं कार्य्यं पर्वेऽस्मिन्नुदकक्रियां।

इत्यसंस्कृतप्रमीतदाहः।

अत्र पुत्रस्य उपनयनकाले प्राप्तेऽप्युपनयनाभावे एवं प्रेतकृत्य-माचर्य्यते संपूर्णाशौचञ्च त्रिभिर्वेति यो विकल्प उक्तः, स चूड़ा-कालानन्तरं व्रतकालपर्यन्ताभिप्रायकः; इदानीन्तु शिष्टैरपि चूड़ाकालप्रवेशानन्तरं दाहमात्रं क्रियते न पिण्डादिकम्। एवं दुहितुर्विवाहकाले प्राप्ताशौचस्य त्रिदिनत्वादेव त्रिभिर्दिनैः पिण्डा-दिकं कार्य्यम्। इत्यसंस्कृतप्रमीतकृत्यम्॥

अथ पतितप्रेतकृत्यम्

त्रिप्ता मध्येन मरणमुद्दिश्य स्वात्मघातिनम्।
नीत्वान्त्यजा वहिर्ग्रामात् त्रिपेयुरशुचिस्थले॥
अनुद्दिश्यात्महन्तारं पतितं ब्राह्मकीर्त्तितम्।
गङ्गादितीर्थे प्रक्षिप्य तप्तकृच्छ्रं समाचरेत्॥
कर्त्ता दासीं समाहूय कुलटादन्तवेतनाम्।
अशुद्धघटहस्तां त्रिः प्रब्रूयात् प्रेतहप्तये॥

(१) काष्ठवज्जह्यात्।

इन्द्रः पुनाति सहसा पुनातु
सोमः स्वस्त्वरुणः समीत्या ।
यमो राजा प्रसूनाभिः पुनातु
मा जातवेदा मोजयन्त्या पुनातु ॥
ऋषयस्तमसस्तो[१]ऽमे सर्वे सर्वजिगीषमाः ।
तपसस्तपसे ग्रीवं पावमानी ऋचोऽब्रवीत् ॥
यन्मे गर्भे वसतः पापमुग्रं
यज्जायमानस्य च किञ्चिदन्यत् ।
जातस्य यच्चापि च वर्द्धतो मे
तत् पावमानीभिरहं पुनामि ॥
यदन्तिकाच्च[२] दूरजा भयं विदन्ति मामिह ।
पवमानस्तु सोऽद्य नः पवित्रेण विचर्षणः ॥

यः पाता स पुनातु नः । यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि नः । यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि । ब्रह्म सवैः पुनीहि नः । उभाभ्यां देवसविताः पवित्रेण सर्वेण च[३] । मा पुनीहि विश्वतः । त्रिभिष्ट्वं देव सर्वतो वर्षिष्ठैः—सोमधामभिः । अग्ने ? दक्षैः पुनीहि नः । पुनन्तु मा देवजनाः पुनन्तु मनसा धिया ।

विश्वेदेवा पुनीत मा जातवेदः पुनीहि माम् ।
हिरण्यवर्णाः शुचयः पावकाः प्रचक्रमुर्हित्वा वन्द्यमापः ॥

---

(१) तपसस्तापे । (२) यदन्ति यच दूरके ।
(३) सवेन ।

शतं पवित्रा वितता ह्य[1] सुनाभिः त्वा देव सविता पुनातु।
हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो या स्वग्निः।
या अग्निं गर्भं दधिरे सुवर्णास्तास्ता आपः शंस्योना भवन्तु।
यासां राजा वरुणो जातिमध्ये सत्यानृते अवपश्यं जनानाम्।
यासां देवादि विक्षयन्ति भिचया अन्तरीचे वज्ञधा निविष्टाः।
या अग्निं गर्भं दधिरे सुवर्णास्तास्ता आपः शंस्योना भवन्तु।
शिवेन वा चक्षुषा पश्यन्त्या शिवया तन्वोपस्पृशन्तु त्वचन्ते। घृत-
श्चुतः शुचयो याः पावकाः तास्ता आपः शंस्योना भवन्तु।
आपोहिष्ठेति ऋकुत्रयम्,—

वस्त्रान्तरवृतं कृत्वा दाहयेद्विधिपूर्वकम्।
उदक्यां वा प्रसूतां वा यद्यशौचां दहेन्मृताम्॥
कृच्छ्रमेकं प्रकुर्वीत पञ्चगव्येन शुध्यति।

दाहकर्त्ता कृच्छ्रैकं प्रायश्चित्तं कुर्य्यात्।

इति सूतकोदक्यादाहविधिः॥

अथ गर्भिणीदाहविधिः।

गर्भिण्याश्च मृतायाश्च गर्भजीवनशङ्कया।
विमोच्य गर्भं दग्धया निक्षिप्य स्रोतसां परे॥
मृतगर्भभिन्नकर्त्ता पतिः कृच्छ्रं समाचरेत्।
अन्यस्तु कृच्छ्रद्वयं कृच्छ्रैकं दाहवाहकाः॥
निक्षिप्य गर्भं स्रोतस्यां परे नद्यां परे जनाः॥

(१) ह्या।

हे दासि ! गच्छ मूल्येन तिलान्यादाय सत्वरम् ।
प्रपूर्य्य तिलतोयेन तं घटं दक्षिणामुखीम् ॥
संकीर्त्त्य पापिनो नाम विनयस्व जलं पदा ।
इति संप्रेषिता दासी ब्रह्मव्रतमुक्ताभिधा ॥
तिलोदकं पिबेति द्विरभिधाय घटीजलम् ।
सतिलं वामपादेन विनयेदशुचिस्थले ॥
समाप्तेऽब्दे क्रियाकर्त्ता मृताहे ज्ञातिभिः सह ।
दग्ध्वा पर्णनरं कुर्य्याद्दशाहविहितां क्रियाम् ॥
दशाहाद्वत्सरं यावत् स्वे स्वे काले तु षोडश ।
श्राद्धानि कृत्वा कुर्य्यात्तु नारायणबलिं ततः ॥
अब्दमध्ये यदा चैषामौर्द्ध्वदेहिकमिच्छति ।
तदा मृताहात्तत् कुर्य्यात् प्रायश्चित्तपुरःसरः ।
इह चान्द्रायणं तप्तकृच्छ्रद्वयसमन्वितम् ॥
प्रत्याम्नायविधावष्टधेनुदानं प्रकीर्त्तितम् ।
दाहेऽस्थ्नां द्विगुणं कार्य्यं तदा पर्य्युषिते शवे ॥
अभावेऽस्थ्नां (१)पर्णनरदाहश्चेत्तच्चतुर्गुणम् ।
अन्यजातिहतं तुष्णीं दग्ध्वा ह्यलोकनिष्कृतिम् ॥
मन्त्रवद्दहनं कुर्य्यात्तदस्थिषु यथाविधि ।
साग्निश्चेत् पतितः प्रेतस्तदग्निमप्सु निक्षिपेत् ।
पापाग्नि दग्ध्वा कुर्वीत प्रागुक्तपतितक्रियाम् ॥

इति पतितप्रेतकृत्यम् ।

(१) धनाभे ।

## अथ पर्णनरदाहविधिः।

छन्दोगपरिशिष्टे,—

अस्थ्नामलाभे पर्णानि [१]सकलान्यूर्णयावृता।
दाहयेदस्थिसंख्यानि ततःप्रभृति सूतकम्॥

आवृता परिपाट्या। अस्थिसंख्या तु षष्ट्याधिकं शतत्रयम्।

तथाचादित्यपुराणे,—

तदभावे पलाशोत्थैः पत्रैः कार्य्यः पुमानपि।
शतैस्त्रिभिस्तथाषष्ट्या शरपत्रैर्विधानतः॥
वेष्टितव्यस्तया यत्नात् कृष्णसारस्य चर्मणा।
ऊर्णासूत्रेण बध्वा तु प्रलेप्तव्यस्तथा यवैः॥
सपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना।

[[२]तदभावे अस्थ्नामलाभे सवृन्तपलाशपत्राणां षष्ठ्युत्तरत्रिशतैः पुरुषप्रतिनिधिं कुर्यात्।

तथाच पराशरः,—

आहिताग्निर्द्विजः कश्चित् प्रवासे कालचोदिते,।
देशनामद्युत्प्राप्ते तस्याग्निर्वर्त्तते गृहे॥
प्रेताग्निहोत्रसंज्ञेयं श्रूयतां मुनिपुङ्गवाः।
कृष्णाजिनं समास्तीर्य्य कुशैस्तु पुरुषाकृतिम्॥
पलाशानां सवृन्तानां विभागं ब्रूहि याज्ञिक।

---

(१) शकलानि।

(२) [ ] वन्धनिमध्यगता पङ्क्तयः किचयति पुस्तके न सन्ति।

चत्वारिंशच्चैवन्मूर्द्ध्नि ग्रीवायाञ्च दशैव च ॥
उरसि त्रिंशतं दद्यादुदरे विंशतिस्तथा ।
बाह्वोश्चैव शतं दद्यादङ्गुलिषु दशैव तु ॥
षड्वै वृषणयोर्दद्यादष्टाद्धं मेढ्र एव च ।
उर्वोश्चैव शतं दद्यात्त्रिंशतं जानुजङ्घयोः ॥
पादाङ्गुलिषु दश च यज्ञपात्रं ततोन्यसेत् ।
ऊर्णासूत्रेण बध्वा तु प्रलिप्य च तथा यवैः ॥
प्रपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना ।]
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स्वबान्धवैः ॥
एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥

अयं दाहः साग्निनिरग्निसाधारणः । "गतस्य न भवेदात्ती" इत्यादिवचनमध्ये तथा निर्णीतत्वात् । एवं पर्णनरं संपाद्य पूर्ववद्धस्तोदरे[१] चन्दनादिवस्त्रयज्ञोपवीतमाल्यघृतादि दत्वा आज्येन तृणमादाय प्रदक्षिणं कृत्वा मुखाग्निमन्त्रेण अपसव्यस्तमग्निं शिरःस्थाने निरग्नेर्दद्यात् । त्रिभिरश्वत्थपत्रैर्दर्भत्रयेण घृताक्तेन अग्निं प्रज्वाल्य शिरःस्थाने दद्यात् । एवं दाहे कृते तूष्णीमुदकधारां परितो दद्यात् । साग्निकानामन्यत् पात्रासादनादिकं सर्वं वक्ष्यमाणाहिताग्निविधिना कुर्यात् । एतस्मिन्नशौचे त्रिदिनाशौचवत् पिण्डव्यवस्था,

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा ॥

(१) दग्धदये ।

त्रीन् प्रदद्यात् तृतीयेऽह्नि वस्त्रादिचालनं तथा।

इति पर्णनरदाहविधिः।

अथ निरग्निदाहः।

तत्रादौ गृहाभ्यन्तरमृतस्य विशेषः। यदि गृहाभ्यन्तरे दुर्बलस्य प्राणा गतास्तदा बान्धवैर्गृहात् शीघ्रं ब्राह्मणानग्निञ्च पुरस्कृत्य धान्यपिधानसन्नपिधानं नवकपर्दांश्च गृहीत्वा शवो वहिर्नेयः। समाचारादर्द्धमार्गे शनैः शनैर्गत्वा अन्नपिधानादिकं प्रचेतव्यं ततो जलाशये कर्त्तव्यम्,

यत्र देशे जलं नास्ति सरसी वा न विद्यते।

नदीनाञ्च कथा कार्य्या वक्तव्यं वा हिमं हिमम्॥

तद्गृहस्थितभुक्ताभुक्तसर्वमृन्मयभाण्डानि त्यजेत्। इति विशेषः। दाहार्थं तृणकाष्ठादीनि सर्वथा शूद्रद्वारा न नेतव्यानि, प्रमादात् शूद्रद्वारा नयने तत्कालं ब्राह्मणैर्नेयम्। "श्लेष्माश्रुबान्धवैर्मुक्तं" इत्यादिस्मृतेः, सर्वथा रोदनं कार्य्यम्। पुत्रादिब्राह्मणद्वारा निर्यासप्रधानवनस्पतिवटप्रचोदुम्बराणामन्यतमस्य निर्यासमानीय चन्दनागुरुकर्पूरमृगमदजातिफलानि पिष्ट्वा मिश्रीकृत्य शवस्य समीपे कृत्वा मृल्लेपैः संशोधयेत्। ततः स्नात्वा घृततैलाभ्यां स्थापितनिर्यासगन्धसहिताभ्यां शवमभ्यज्य जलसमीपं नयेत्।

तत्र कुशानास्तीर्य दक्षिणशिरसं समाचारादुत्तरशिरसं वा उत्तानदेहं स्थापयित्वा,

ॐ गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः।

कुरुक्षेत्रञ्च गङ्गा च यमुना च सरिद्वरा॥

कौशिकी चन्द्रभागा च सर्वपापप्रणाशिनी ।
भद्रा च काशी सरजूर्गण्डकी पन्नगा तथा ॥
भैरवश्च वराहश्च तीर्थं पिण्डारकं तथा ।
पृथिव्यां यानि तीर्थानि चत्वारः सागरास्तथा ॥

इति पठित्वा मनसा तानि तीर्थानि ध्यात्वा गन्धमाल्यैरलङ्कृत्य नासिकाद्वयचक्षुर्द्वयकर्णद्वयेषु सप्तच्छिद्रेषु सप्तहिरण्यशलाका[१]नि क्षिप्त्वा वस्त्रेणाच्छाद्य कोलाहलवाद्यं[२] सम्पाद्य आमपात्रेणान्नमादाय अग्निपुरःसरं प्रेतमनुगम्यार्द्धपथेऽर्द्धमुत्सृज्य श्मशानं गत्वा पुत्रादिः श्मशाने आसीनो दक्षिणामुखः सव्यं जान्वाकुञ्च्य रेखाकरणावनेजनकुशास्तरणपिण्डदानप्रत्यवनेजनजलाञ्जलीन् नामगोत्राभ्यां कुर्यात् । ततः क्रियाकर्त्ता स्नात्वा ब्राह्मणद्वारा दारुसञ्चयं सम्पाद्य समे भूमिप्रदेशे वङ्कलक्षणे दूर्वादिकमुत्पाट्य गोमयेनोपलिप्ते प्राचीनावीती दक्षिणामुखः सव्यं जान्वाच्य कुशगोमयकुशोदकपात्र-[३]न्यासादिपरिसमूहनादीन् पञ्चभूसंस्कारान् सकृत् कृत्वा अग्निमुपसमाधायाग्नेर्दक्षिणभागे चन्दनादिसुगन्धिकाष्ठैन चितां रचयित्वा समाचाराच्चतुर्भिः सह शवं गृहीत्वा वारत्रयमग्निं प्रदक्षिणीकृत्य नामोच्चार्य्य वारत्रयमाहूय चितायां कुशानास्तीर्य्य उत्तानं दक्षिणशिरसमुत्तरशिरसं वा निपात्य ज्वलमानमग्निं हृत्वा,

ॐ कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता ।
मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् ॥

(१) हिरण्यशकलम् । (२) कोलाहलवाद्यम् ।
(३) ॰पात्राण्यासाद्य ।

धर्माधर्मसमायुक्तं लोभमोहसमावृतम्।
दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु स्वाहा॥
इत्युक्त्वा शीघ्रमग्निं प्रदक्षिणीकृत्य ज्वलमानमग्निं शिरःस्थाने आसीनो दद्यात्। शवसम्बन्धपरिधानोत्तरीयव्यतिरिक्तं वस्त्रं खट्वादिस्थितं एकदेशं वा श्मशानवासिभ्यश्चाण्डालेभ्यो दद्यात्। साधु दग्ध्वा ज्वलत्काष्ठचयदग्धव्यस्य शवस्य किञ्चिदवशिष्टमवस्थाप्य दाहकैः सह प्रादेशप्रमाणानि सप्तकाष्ठानि गृहीत्वा चितायां सप्तप्रदक्षिणानि कृत्वा प्रत्येकं तानि प्रक्षिप्य कुठारेणोल्मुकोपरि सप्तप्रहारान् कृत्वा "क्रव्यादाय तुभ्यं नमः" इति सप्तकृत्वः पठित्वा सव्यमावृत्य पुत्रादिदाहकाश्च सर्वे चितां पश्यन्तः पङ्क्तिक्रमेण,—
अहरहर्नीयमानोऽपि गामश्वं पुरुषं पशून्।
वैवस्वतो न तृप्यति सुराय इव दुर्मतिः॥
इति यमगाथां यमसूक्तञ्च पठन्तो वालानग्रतः कृत्वा जलाशयान्तं गच्छेयुः।

इति निरग्निदाहः।

अथ केवलस्मार्त्ताग्निमद्दाहः।

शालाग्नौ चरुमसगोत्रेण श्रपयित्वा शालाग्निं स्मार्त्तपात्राणि चरुं च पृथक् शवं च शकटे संस्थाप्य "अपेत" इत्यध्यायं जपन् दक्षिणां दिशं गच्छन्[१] अर्द्धपथे चरोरर्द्धं दत्वा श्मशाने शेषं पिण्डं दद्यात्। परिसमूहनादिसंस्कृतभूमौ वह्निं निधाय चितां विरचय्य पूर्ववत् शवं स्नानादिभिः संस्कृत्य,

(१) गच्छेत्।

चितौ प्राग्ग्रीवमजिनमास्तीर्य्योत्तरलोमकं ।
तत्र प्राक्शिरसं प्रेतं निधायोत्तानशायिनं ॥
हिरण्यशकलान्यस्य मुखे नासिकयोर्दृशोः ।
कर्णयोश्च विनिक्षिप्य सघृतामुरसि स्रुचं ॥
स्रुवं नासिकयोः साज्यं चमसं शिरसोऽन्तिकं ।
पार्श्वयोः स्रुगंसफले[१] मुष्कयोररणिद्वयं ॥
दक्षिणे च करे वज्रमूर्वोर्मध्ये उलूखलं ।
ऊर्वष्ठीं मुषलं चात्र मन्त्रं चापि विनिक्षिपेत् ॥
मृन्मयान्यप्सु निक्षिप्य अग्निं दद्याद्द्विजातये ।

चितिमध्ये सादयित्वा दक्षिणामुखः सव्यं जान्वाच्य घृताक्तां कुशमुष्टिं,

अस्मात् त्वमधिजातोऽसि त्वदयं जायते पुनः ।

"असौ स्वर्गाय लोकाय स्वाहा" इत्युक्त्वा जुहुयात् । शेषं च पूर्ववत् स्मार्त्ताग्निच्छन्दोगपत्न्यास्तु निरग्नेरिव "कृत्वा तु दुष्कृतं कर्म" इत्यनेन वराहपुराणोक्तमन्त्रेण दाहः ॥

इति स्मार्त्ताग्निमद्दाहः ।

अथ साग्निकदाहः ।

तत्र विशेषः । सायमाहुत्यां कृतायां प्रातराहुतेः प्राक् यजमानमृतिशङ्कायां तदैव प्रातराहुतिर्देया । तस्य होमस्य सायमादिप्रातरपवर्गत्वेन एककर्मणोऽवशिष्टत्वात् । जीवेत चेद्यजमानः पुन र्नप्रातर्होमं कुर्यात् । अग्निहोत्रमध्ये हविर्यद्दणादि

प्रागाधानाच्चेन्मरणशङ्का, तदा हविषो गार्हपत्ये दाहः। आसना-दूर्द्धं चेदाहवनीये दाहः। आरब्धपदार्थे चेन्मृतिस्तदा स पदार्थः समाप्यः। एवं कृते पौर्णमास्यां दर्शात् पूर्वं मरणशङ्का तदैव पिण्ड-पितृयज्ञरहितां दर्शेष्टिं कुर्यात्। पौर्णमास्यादिदर्शान्तत्वादिष्टिः। इयमन्त्येष्टिरित्युच्यते, एवं प्रारब्धचातुर्मास्यस्य सुनासिरीयान्तं समापनं, यदि साङ्गप्रधान कर्म्मसमर्थस्तदा चतुर्गृहीतेनाज्येन पुरोऽनुवाक्यायाज्याभ्यां प्रधानयागाः कार्याः, नायनयोः करण-पचस्यानादृतत्वात्, तदैककरणविचारो न क्रियते, एकस्यैव समाचारात्। दुर्बलस्य यजमानस्य गार्हपत्यपुरस्तात् स्थापनमुचित-मपि नानाशङ्कया न क्रियते तथा कल्प्यते। मरणानन्तरं पुत्रः स्नात्वा प्राचीनावीती दक्षिणामुखः सकृत् सकृत् परिसमूहनादि-पञ्चभूसंस्कारान् कृत्वा आहवनीयदक्षिणाग्नी उद्धृत्य गस्यनर्या-धाय्येषु करीषचूर्णशाल्मलीतूलपणादिगर्भास्तिस्रो उखा अधि-श्रित्य तावत् सतापयेत्, यावत्तास्वग्निरुत्पद्येत।

आवसथ्ये अन्यगोत्रेण चरुमधिश्रयेत्। ततो मृतदेहं पूर्ववत् सम्याप्य नववस्त्र परिधाप्य यज्ञोपवीतं दत्वा अलङ्कारैरलङ्कृत्य सुगन्धिद्रव्यैरुपलिप्य शकटे निवेश्य सन्तापजानग्नीन् उखास्थान् पृथक् असन्तापजौ पाचस्यौ सभ्योपासनाग्नी पृषदाज्यमाज्य कुशास्तिलान् सर्वाणि च श्रौतस्मार्त्तयज्ञपात्राणि सप्त हिरण्यशकलानि नापि क्षुरकाष्ठादिसर्वमुपयुक्तं शकटे तस्मिन्नादाय चरु तु असगोत्रेण वाहयित्वा न शकटं दक्षिणां नयन्ति।

सपिण्डाः,—अहरहर्नीयमानोऽपि गामश्व पुरुष पशुं।

चितौ प्राग्ग्रीवमजिनमास्तीर्य्योत्तरलोमकं ।
तत्र प्राक्शिरसं प्रेतं निधायोत्तानशायिनं ॥
हिरण्यशकलान्यस्य मुखे नासिकयोर्दृशोः ।
कर्णयोश्च विनिक्षिप्य सप्ततासुरभि स्रुचं ॥
स्रुवं नासिकयोः साज्यं चमसं शिरसोऽन्तिकं ।
पार्श्वयोः सूर्पसकले[१] मुष्कयोररणिद्वयं ॥
दक्षिणे च करे वज्रमूर्वोर्मध्ये उलूखलं ।
ऊर्वन्तौ मुषलं चात्र मन्त्रं चापि विनिक्षिपेत् ॥
मृन्मयान्यप्सु निक्षिप्य अग्निं दद्याद्द्विजातये ।

चितिमध्ये सादयित्वा दक्षिणामुखः सव्यं जान्वाच्य घृताक्तां कुशमुष्टिं,

अस्मात् त्वमधिजातोऽसि त्वदयं जायते पुनः ।

"असौ स्वर्गाय लोकाय स्वाहा" इत्युक्त्वा जुहुयात् । शेषं च पूर्ववत् स्मार्त्ताग्निछन्दोगपत्न्यास्तु निरग्नेरिव "कृत्वा तु दुष्कृतं कर्म" इत्यनेन वराहपुराणोक्तमन्त्रेण दाहः ॥

इति स्मार्त्ताग्निमद्दाहः ।

अथ साग्निकदाहः ।

तत्र विशेषः । सायमाहुत्यां हुतायां प्रातराहुतेः प्राक् यजमानमृतिशङ्कायां तदैव प्रातराहुतिर्देया । तस्य होमस्य सायमादिप्रातरपवर्गत्वेन एककर्मणोऽवशिष्टत्वात् । जीवेत चेद्यजमानः पुन र्नप्रातर्होमं कुर्यात् । अग्निहोत्रमध्ये हविर्ग्रहणादि

(१) सूर्पशकले ।

प्रागासादानाचेन्मरणशङ्का, तदा हविषो गार्हपत्ये दाहः । आसना-दूर्द्धं चेदाहवनीये दाहः । आरब्धपदार्थे चेन्मृतिस्तदा स पदार्थः समाप्यः । एवं कृते पौर्णमास्यां दर्शात् पूर्वं मरणशङ्का तदैव पिण्ड-पितृयज्ञरहितां दर्शेष्टिं कुर्यात् । पौर्णमास्यादिदर्शान्तत्वादिष्टेः । इयमन्त्येष्टिरित्युच्यते, एवं प्रारब्धचातुर्मास्यस्य सुनासिरीयान्तं समापनं, यदि साङ्गप्रधानं कर्त्तुमसमर्थस्तदा चतुर्गृहीतेनाज्येन पुरोऽनुवाक्यायाज्याभ्यां प्रधानयागाः कार्याः, नायनयोः करण-पचस्यानादृतत्वात्, तदेककरणविचारो न लिख्यते, एकस्यैव समाचारात् । दुर्वलस्य यजमानस्य गार्हपत्यपुरस्तात् स्थापनमुचित-मपि नानाशङ्कया न क्रियते तथा कल्प्यते । मरणानन्तरं पुत्रः स्नात्वा प्राचीनावीती दक्षिणामुखः सकृत् सकृत् परिसमूहनादि-पञ्चभूसंस्कारान् कृत्वा आहवनीयदक्षिणाग्नी उद्धृत्य शंस्यनर्या-धायेषु करीषचूर्णशाल्मलीद्रुलषणादिगर्भास्तिस्रो उखा अधि-श्रित्य तावत् संतापयेत्, यावत्ताखग्निरुत्पद्येत ।

आवसथ्ये अन्यगोत्रेण चरुमधिश्रयेत् ।' ततो मृतदेहं पूर्ववत् संस्थाप्य नववस्त्रं परिधाप्य यज्ञोपवीतं दत्वा अलङ्कारैरलङ्कृत्य सुगन्धिद्रव्यैरुपलिप्य शकटे निवेश्य सन्तापजानग्नीन् उखास्थान् पृथक् असन्तापजौ पात्रस्थौ सभ्योपासनाग्नी पृषदाज्यमाज्यं कुशांस्तिलान् सर्वाणि च श्रौतस्मार्त्तयज्ञपात्राणि सप्त हिरण्यशकलानि नापि क्षुरकाष्ठादिसर्वमुपयुक्तं शकटे तस्मिन्नादाय चरुं तु असगोत्रेण ग्राहयित्वा तं शकटं दक्षिणां नयन्तः ।

सपिण्डाः,— अहरहर्नीयमानोऽपि गामश्वं पुरुषं पशुं ।

वैवस्वतो न तृप्यति सुराप इव दुर्मतिः ॥

यमाय त्वाङ्गिरस्वते[१] पितृमते स्वाहा ।

इति च । अपेताध्यायं ऋग्वेदप्रसिद्धं यमसूक्तं च पठन्तोऽनुगच्छेयुः । अग्नीनां यथा निर्वापो न भवेत्तथा रक्षेयुः । यदि नद्यादौ मृतिः, तदा प्रागुक्तेन विधिना शकटेन दाहदेशं प्रति नयेयुः । तत आवसथ्याग्निं चरोरर्द्धभागं अन्नं दद्यात् ततो नद्यादिसमीपे शुचौ तृणबहुले उद्धृतक्षीरिणि लतौषधिकदूर्वामुञ्जाश्वगन्धापृश्निपर्णीमाषपर्णीविशाखाङ्कुणिकाध्यष्ठातके देशे पञ्चभूसंस्कारं कृत्वा गार्हपत्यं संस्थाप्य ततः अष्टप्रक्रमे पञ्चभूसंस्कारपूर्वकं आहवनीयं.दक्षिणाग्निं तृतीये दक्षिणाग्निं स्थापयेत् । सभ्यावसथ्ययोरैशान्यां निधानं । तथा च साख्यायनः[२]–"सभ्यावसथ्यावाहिताग्नेर्दहनकर्म न प्रयुञ्ज्येत" ।

इति, चितादेशात् प्रागुदिच्यां दिशि पञ्च प्रक्रमानातिक्रम्योत्सृजतीति । ततो नयशांस्वान्तरा काष्ठानुचितिं कृत्वा प्रेतस्य केशश्मश्रुनखच्छेदनं कृत्वा दध्नयातोद्धरणेन तं विपूरिषं कृत्वा प्रक्षाल्य सर्पिषान्तरभ्यज्य पुरीषकेशादीनि निखनेत् । ततस्तं, पूर्ववन्नववस्त्रादिभिरलङ्कृत्य प्राग्ग्रीवं कृष्णाजिनमास्तीर्य्यास्मिन् प्रेतं प्राक्शिरसमुत्तानं निवेशयेत् । ततः सप्त हिरण्यशकलानि[३] मुखनासिकाद्वयदृग्द्वयकर्णद्वयेषु निक्षिप्य मृतदेहे श्रौतानि यज्ञपात्राणि उत्तानानि कृत्वा सादयेत् ।

---

(१) त्वाङ्गिरस्वते । (२) शाख्यायनः ।

(३) शलाकाः ।

तद्यथा,—

घृतपूर्णां जुहूं दक्षिणकरे, करस्थपुष्करामनुवाङ्दण्डां रिक्ता-मुप[१]भृतं वामकरे। उरसि प्रत्यकदण्डां ध्रुवां। वामनासिकायाः[२] प्रत्यक्दण्डं वैकंकतं स्रुवं। कर्णयोः प्रत्यक्दण्डे प्राशित्र[३]हरणे। शिरसि प्रणीतां। स्फ्यं[४] द्विधा कृत्वा पार्श्वयोः। उदरे पृषदाज्य-पूर्णां प्रत्यग्दण्डामिडापात्रीं। शिश्ने शम्यां वृषणयोररणी। वक्षा-ग्निहोत्रहवणीखादिरस्रुवाणां आङ्गत्यर्थं स्थापनं।

अवशिष्टानां दारवपात्राणां उर्वीमध्ये सादनं मृन्मयाश्ममय-पात्राणां कपालानां च अप्सु निक्षेपः। अयोमयानां ब्राह्मणाय दानं, स्मार्त्तपात्राणामपि स्मार्त्ताग्निमत इवासादनं, दाहस्तु तेनाग्निनैव। ततो दक्षिणतोऽग्निभिरादीपनं चितायाः। तत आज्यस्थाली कुशाः स्रुवं स्रुक् आज्यमिति एतानुपकल्प्य आज्यस्थाल्यामाज्यं निरुप्य गार्हपत्ये अधिश्रित्य खादिरस्रुवाग्निहोत्रहवण्यौ संमृज्याज्यमुद्वास्य कुशैरुत्पूयावेक्ष्य[५]स्रुवेण सकृद्गृहीत्वाऽग्निहोत्रहवण्युपरि समिधं दत्त्वा वक्षोपयह आहवनीये समिधं दत्त्वा दक्षिणामुखः प्राचीनावीती सव्यं जान्वाच्य प्रेतमुखसंलग्ने वक्षावाङ्गतिं जुहुयात्।

तद्यथा,—

अस्मात्वमित्यस्य मन्त्रस्य। आदित्य ऋषिः। गायत्र्या निरुक्ति-श्छन्दः। अग्निर्देवता। अस्मात्वमधिजातोऽसि इति मन्त्रेण होम इति। इदमग्नये इति त्यागः।

---

(१) उपभृतं। (२) वामनासिकायां।
(३) प्राशित। (४) शूर्पं। (५) च।

अस्मालम्

अस्मालमन्त्रेणामाविति प्रथमान्ता पत्न्या अपि स्त्रीलीङ्गानूहेनैव होमः। शवं दृष्ट्वौ कृत्वा प्रागग्रं वज्रदक्षिणहस्ते। प्रत्यग्दण्डामग्निहोत्रहवणीं मुखे प्रत्यग्दण्डं खादिरस्रुवं दक्षिणनासायां।

एवमेषोऽग्निमान् यज्ञपात्रा[1]युधसमन्वितः।
लोकानन्दानतिक्रम्य परं ब्रह्म स विन्दति॥

एवं आहिताग्निजीवद्भर्त्तृका पत्नी यदि म्रियेत, तदा चौररहितः सर्वो विधिः कार्यः। आहिताग्न्योर्दम्पत्योरेकस्यादौ मरणे अपरस्यारण्यन्तरं निर्माय पात्रैर्दाहः कार्यः।

किन्तु पत्न्या आदौ मरणे पुमान् पत्न्यन्तरं उद्वाह्याग्निहोत्रं यदि कुर्यात्तस्य सपात्रकदाहः पूर्ववत् स्यात्[2]।

अथ दाहकाले अग्न्युपशमे दाहविधिः।

यदि वह्निर्विनश्येत दह्यमानेऽग्निहोत्रिणि।
दग्धावशिष्टारणिकवह्निना तं पुनर्दहेत्॥
सकलारणिनाशे तु शवशेषं जले क्षिपेत्॥[3]

अथ विदेशमृतसाग्निशवस्या[4]नयनाशक्तौ तत्रैव सद्दं[5] कृत्वा अस्थि आनीय पुनः सपात्रकतयाऽस्थिदाहः कार्यः।

तथा च पराशरः,—

शवस्यानयनाशक्तौ तदस्थीनि समाहरेत्।

---

(१) शा। (२) इत्याहिताग्निदाहः।
(३) इत्यग्न्युपशमविधिः। (४) अथ विदेशमृतसाग्निकदाहः।
(५) दाहं।

श्मशानभूमौ चेताग्नीन् विहृत्य रचयेच्चिताम् ॥
आस्तीर्य कृष्णमजिनं तदस्थीनि पुमाकृतिम्।
निर्मायाज्येन चाभ्यज्य सादयेदुन्नयेत् पुनः ॥
यज्ञपात्राणि विन्यस्य दहेदाहुतिपूर्वकम्।

शेषं सर्वं साग्निकदाहे उक्तम्।

इत्यस्थिदाहः ॥

स च साग्निकस्यैवेति पूर्वमुक्तम्।

अथोत्पन्नाग्निदाहः। उत्पन्नाग्निर्द्विविधः। मारणिपाचको-ऽरण्यादिरहितश्चेति, तत्र सपात्रपत्नी मरणानन्तरं पुत्रः प्राचीनावीती दक्षिणामुखो पञ्चभूसंस्कारान् पूर्ववत्कृत्वा तत्र पूर्वारणीं स्थापयित्वा अग्निं मन्थीयात्।

तत्र मन्त्रः,—

"येऽस्याग्नये जुह्वतो मा॑ग्ं सकामाः संकल्पयन्ते यजमान मा॑ग्ं संज्ञायन्तु ते हविषे सादनाय स्वर्गलोकं प्रेतमिमं नयन्तु" इति।

मथित्वा तूष्णीं गार्हपत्यं संस्थाप्य आहवनीयदक्षिणाग्न्योः पञ्चभूसंस्कारपूर्वकं तूष्णीं विहरणम्। तत आज्यस्थाली, कुशाः, स्रुवः, स्रुक्, एका समित्, आज्यं चेत्यासाद्य स्थाल्यां तदभावे शरावादिपात्रे आज्यं निरुप्य गार्हपत्ये अधिश्रित्य कुशैः स्रुवस्रुक्संमार्जनं आज्यस्योत्पवनावेक्षणं च कृत्वा स्रुचि द्विधा घृताहुतिं कृत्वा आहवनीये प्रजापतिं ध्यात्वा स्वाहेति स्रुचा जुहुयात्। ततो गार्हपत्याहवनीयदक्षिणाग्निषु शुष्ककरीषचूर्णतूलपणादिगर्भास्तिस्रः उखा अधिश्रित्य यावत्तास्वग्निरुत्पद्येत तावत् सन्तापयेत्। ततः

एतेन सर्वपुत्राणां विभक्तानामविभक्तानाञ्च मध्ये ज्येष्ठेनैव कार्यम्। दैवात्तदभावेऽन्यपुत्रस्याधिकारः।

तत्रापि विशेषः,—

द्वादशविधेषु पुत्रेषु विद्यमानेषु औरसः कनिष्ठोऽपि कुर्यात्। औरसपुत्रिकापुत्रक्षेत्रजगूढ़जकानीनपौनर्भवदत्तक्रीतकृतकस्वयंदत्त-सहोढ़ापविद्धान् द्वादश पुत्रानुक्त्वा "पिण्डदोऽशहरश्चैषां पूर्वाभावे परः परः" इति याज्ञवल्क्योक्तेः।

दैवात् पुत्राभावे, आग्नेयहारीत स्मृत्योः,—

असगोत्रोऽप्यसंबद्धः प्रेताग्निं प्रददाति यः।
उदकं पिण्डदानञ्च स दशाहं समापयेत्॥

ब्राह्मे,— असगोत्रः सगोत्रो वा स्त्री दद्याद्यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्॥

विष्णुपुराणेऽधिकारिणः,—

पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः।
सपिण्डसन्ततिर्वापि क्रियार्हो नृप जायते॥
तेषामभावे सर्वेषां समानोदकसन्ततिः।
मातृपक्षस्य पिण्डेन संबद्धो योजनेन च॥
कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप।
संघातान्तर्गतैर्वापि कार्या प्रेतस्य सत्क्रिया॥
उत्सन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः।
पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तरक्रियाः॥
त्रिप्रकाराः क्रिया ह्येतास्तेषां भेदान् शृणुष्व मे।

श्राद्धाब्दार्याद्युधादिसर्व्वादिन्तास्य याः क्रियाः ॥
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ॥
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ताः नृपोत्तराः।
*पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ॥*
तत्सङ्घान्तर्गतैर्वापि राज्ञा वा धनहारिणा।
पूर्वा क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः ॥
दौहित्रैर्वा नृपश्रेष्ठ कार्य्यास्तत्तनयैस्तथा।

अत्र कल्पतरुकाराः, मातृपक्षस्य पिण्डेन संवद्धो मातृसपिण्डः। मातृपक्षस्य जलेन संवद्धो मातृसमानोदकः। उत्पन्ना बन्धवो यस्य स तथा, तस्य रिक्थाद्धनात् तस्य क्रिया, अन्तो मरणं तत्र भवाः। मासि मासीति एकादशाहादिसपिण्डीकरणान्तपूर्वक्रियोपलक्षणम्। तत्र च पितृमातृसपिण्डाः पूर्वक्रियामेव कुर्य्युर्नोत्तराः। मध्यमक्रियायां त्वेतेषामनियमः। उत्तरक्रियायान्तु पुत्रा वा भ्रातृसन्ततिपर्य्यन्ताः। दौहित्रैस्तत्तनयैरिति पुत्रिकापुत्रविषयम्। तत अपुत्रविमातृत्रिविधक्रियायां स्वमातृकर्मणि इव सपत्नीपुत्रस्याधिकारः।

बह्वीनामेकपत्नीनां यद्येका पुत्रिणी भवेत्।
सर्वास्तेनैव पुत्रेण प्राह पुत्रवती मनुः ॥

इति मनूक्तेः। सर्वाभावे संघातान्तर्गतानां राजनियुक्तानां येषां केषाञ्चिदप्यधिकारः।

गुरुः करोति शिष्याणां पिण्डनिर्वपणं सदा।

कृत्वा तु पैतृकं शौचं स्वशातिविहितं च यत् ॥
भ्रातुर्भ्राता स्वयं चक्रे तद्भार्य्या चेन्न विद्यते ।
तस्य भ्रातुः सुतश्चक्रे यस्य नास्ति सहोदरः ॥
दत्तानामप्यदत्तानां कन्यानां कुरुतेऽपि वा[१] ।
चतुर्थेऽहनि तासेषां कुर्वीरन् सुसमाहिताः ॥
मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे ।
तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्वदा ॥
जामातुः श्वशुरास्तु कुर्युस्तेषां तेऽपि च संयताः ।
मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा ॥
भागिनेयसुतानाञ्च सर्वेषां त्वपरेऽहनि ।
श्राद्धं कार्य्यन्तु प्रथमं स्नात्वा कृत्वा जलक्रियाम् ॥
राज्ञि मृते सपिण्डे तु निरपत्ये पुरोहितः ।
सन्त्रं वा तदशौचन्तु चित्वा[२] पश्चात् करोति सः ॥
ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन ।
कामाल्लोभाद्भयान्मोहात्कृत्वा तज्जातितां व्रजेत् ॥
पुत्राः कुर्वन्ति विप्राय क्षत्रविट्शूद्रयोनयः ।
स तादृशेभ्यः पुत्रेभ्यो न करोति कदाचन ॥
स्वमाता कुरुते तेषां तेऽपि तस्याश्च कुर्वते ।

मात्स्ये,— भ्राता वा भ्रातृपुत्रश्च भागिनेयोऽथ विट्पतिः ।
दौहित्रश्चैव शिष्यश्च षडेते पिण्डदाः स्मृताः ॥

स्मृत्यन्तरे,— पुत्रो भ्राता पिता वापि मातुलो गुरुरेव च ।

(१) पिता । (२) चौ ।

एते पिण्डप्रदा ज्ञेयाः सगोत्राश्चैव बान्धवाः॥

एतदत्यन्तासम्भवविषयम्।

सम्भवे तु छन्दोगपरिशिष्टे,—

तथा,— कुर्यादनुपनीतोऽपि श्राद्धमेकोऽपि यः सुतः।

पितृयज्ञाहुतिं पाणौ जुहुयान्मन्त्रपूर्वकम्॥

न पुत्रस्य पिता दद्यान्नानुजस्य तथाग्रजः।

न जायायाः पतिः कुर्यादपुत्राया अपि क्वचित्॥

मार्कण्डेये,— सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम्।

तदभावे च नृपतिः कारयेत् स्वकुटुम्बवत्॥

सजातीयैर्नरैः सम्यक् दाहाद्याः सकलाः क्रियाः।

तथा स्त्रीणामप्येवमेवैतदिति। सर्वाभावे स्त्रिय इति पत्नी-व्यतिरिक्तावरुद्धादिस्त्रीविषयम्। भ्रातुर्भ्रातेति वाक्ये अर्वागेव पत्न्यधिकारदर्शनात्। स्त्रीणामप्येवमिति यादृशेन सम्बन्धेन पित्राद्यादीनां पुरुषाणां एकादशाहादि, तादृशेन सम्बन्धेन स्त्रीणामपि कार्य्यमिति। आचारस्तु सगोत्रादिसद्भावे पत्नी नैव करोति, "सर्वाभावे" इति मार्कण्डेयोक्तेः। स्त्रीणामपि यत्त्वमन्त्रवत्-कुर्य्यादिति विधिस्तत्र मन्त्रपाठे दोषाभाव इति और्द्धदैहिके मन्त्रवत् पाठोऽप्यविरुद्ध इति पूर्वं नीर्णीतम्। परन्तु केषाञ्चि-च्छूद्राणां गृहे विवाहितस्त्रीणां श्राद्धादिकर्त्तृत्वसमाचारो दृश्यते, सोऽपि युक्तः।

पितुः पुत्रेण कर्त्तव्याः पिण्डदानोदकक्रियाः।

तदभावे तु पत्नी स्यात्तदभावे तु सोदरः॥

इति श्राद्धोक्तेः। चय्यष्टङ्गोक्तौ बान्धवा इति बहुवचनोक्ते-स्त्रिविधा अप्यधिकारिणः।

ते च छन्दोगपरिशिष्टे,—

आत्ममातुः स्वसुः पुत्रा आत्मपितुः स्वसुः सुताः।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः॥
पितुः पितुः स्वसुः पुत्रा पितृमातृस्वसुः सुताः।
पितृमातुलपुत्राश्च विज्ञेया पितृबान्धवाः॥
मातुर्मातुः स्वसुः पुत्रा मातुः पितुः स्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥

शुनः पुच्छः,— प्रथमेऽहनि यद्द्रव्यं तदेव स्यात् दशाहिकम्।

पुत्रान्तराभावेऽनुपनीतस्यापि पुत्रस्य तृतीयाब्दकृतचूड़त्वे दशाहान्तकर्मसु मन्त्रपाठपूर्वकमधिकारः।

तथा च मनुः,— न ह्यस्मिन् युज्यते कर्म यावन्मौञ्जीनिबन्धनात्।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते॥

ब्रह्म वेदः स्वधानिनयनं प्रेतकर्म।

सुमन्तुः,— अनुपनीतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम्।
यद्यसौ कृतचूड़ः स्याद्यदि स्यात्तु त्रिवत्सरः॥

तथा,— कुर्य्यादनुपनीतोऽपि श्राद्धमेकोऽपि यः सुतः।
पितृयज्ञाहुतिं पाणौ जुह्वयान् मन्त्रपूर्वकम्॥

एवं तृतीयाब्दकृतचूड़स्य मन्त्रवदौर्द्ध्वदैहिककरणे सिद्धे कृत-पञ्चमाब्दचूड़स्य कैमुतिकन्यायेन सिद्धोऽधिकारः।

यत्तु,— कृतचूड़स्तु कुर्वीत उदकं पिण्डमेव च।

स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥

इति व्याघ्रवाक्यम्। तत्प्रथमाब्दकृतचूड़विषयमिति कालादर्शकाराः।

अथ दशाहाभ्यन्तरकार्य्यविचारः।

वशिष्ठः,— दशाहं, प्रस्तरशिलापप्रस्तरे त्र्यहमनश्नन्तः आसीरन्। क्रीतोत्पन्नेन वा वर्त्तेरन्। अपप्रस्तरः अशौचिनां शयनासनार्थं तृणमयः प्रस्तरः।

अतः चितिशयनविधिः खट्वादिनिषेधपरः।

वृहस्पतिः,— अधःशय्यासना दीना मलिना भोगवर्जिताः।

अक्षारलवणान्नाः स्युर्लम्बक्रीड़ासनास्तथा ॥

प्रथमेऽह्नि तुरीये च पञ्चमे सप्तमेऽपि च।

नवमे वाससां त्यागो नखलोम्नां तथाऽन्तिमे ॥

गौतमः,— "ब्रह्मचारिणः सर्वे"।

विष्णुपुराणे,— शय्यासनोपभोगश्च सपिण्डानामपीष्यते।

तस्मिन्निमस्त्वयादूर्द्ध्वं संयोगो न तु योषिताम् ॥

मार्कण्डेय पुराणे,—

तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनन्तु यत्।

तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः ॥

पुनर्गौतमः,—

"मांसं न भक्षयेयुरामदानात्" अन्यत्र सर्वेण मार्जयेयुर्न मांसं भक्षयेयुरामदानात्।

आग्नेये,— सङ्कस्य बन्धवः प्रेतमपसव्येन तां चितिम्।

परिभ्राम्य ततः स्नानं कुर्युः सर्वे सवाससः ॥
प्रेताय च ततो दद्युर्दर्भैस्त्रीन् चैवोदकाञ्जलीन्।
द्वार्य्यश्मनि पदं दत्वा प्रविशेयुस्ततो गृहम् ॥
अक्षतान्निक्षिपेदग्नौ निम्बपत्रं विदश्य वा।

इत्युक्ता पुत्रस्याधिकमाह्यर्थमुक्तम्।

पृथक् शयीत भूमौ च क्रीतलब्धाशनो भवेत्।

याज्ञवल्क्येनापि,— क्रीतलब्धाशनताद्युक्त्वा,—

पितृयज्ञकृता देयं प्रेतायान्नं दिनत्रयम्।

इति पुत्रेणेति शेषः। मद्भस्य दाहं कृत्वा तथा च पुत्राणां तद्भिन्नक्रियाकर्तृणां वा सर्वे नियमाः। स्नानोदकदानमांसानशन-परान्नानशनान्येव सपिण्डानामिति समाचारः।

विष्णुः,— सर्वपापविशुद्ध्यर्थमध्वश्रमविनाशनम्।
तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा ॥

दशमदिनपर्य्यन्तम्। अन्यत्र,—

प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्।

ब्राह्मे,— अशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्।

अशक्तौ मरीचिः,— प्रथमेऽह्नि तृतीये तु पञ्चमे नवमेऽपि वा।
ज्ञातिभिः सह भोक्तव्यमेतत् प्रेतेषु दुर्लभम् ॥

ब्राह्मे,— समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम्।
ग्रामादहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी ॥
अन्त्यनामाश्रितानाञ्च त्यक्ता स्नानं करोति च।
केशश्मश्रुनखानान्तु यत्त्याज्यं तन्नदात्यपि ॥

इत्यादिविधिः। प्रेतक्रियाकालस्पृष्टे प्रेतस्पृष्टे। यत्याज्यमित्य नेन वच:कचशिखोपस्थरोम्णां न वपनम्। नखानामग्रभागकर्त्तन एव। प्रथमदिने क्रियाया अनारम्भे चतुर्थादिदिनेषु अस्थिसञ्चय-नस्योक्तत्वात्तदन्यतमदिने क्रियारम्भः।

प्रथमेऽह्नि तुरीये वा सप्तमे नवमे तथा।

अस्थिसञ्चयनं कार्य्यं दिनैस्तद्गोत्रजैर्द्विजैः॥

संवत्सरे वा कर्त्तव्यं यावत्तन्न प्रदीयते।

इति संवर्त्तोक्तेः। अत एव वर्षमध्ये यदा कदापि प्राप्ते दश-माहे सुतरां क्रियाकरणसमाचारः।

सन्न्यासिनां दाहाद्यभावः।

ब्राह्मे,— चयाणामाश्रमाणाञ्च कुर्य्याद्दाहादिकां क्रियाम्।

यतेः किञ्चिन्न कर्त्तव्यं न चान्येषां करोति सः॥

महाभारते,— न दग्धव्यो न दग्धव्यो विदुरोऽयं कदाचन।

ज्ञानदग्धशरीरस्य पुनर्दाहो न विद्यते॥

किञ्चिदिति दाहादिसपिण्डान्तविषयमिति कल्पतरुकाराः।

प्रचेताः,— एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम्।

न कुर्य्यात् पार्वणादन्यत् प्रेतभूताय भिक्षवे॥

कुर्य्यादेकादशाहेऽस्य पार्वणं न सपिण्डनम्।

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह॥

सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा।

एकदण्डिसन्न्यासिनां न श्राद्धम्।

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते।

व्युत्क्रमाच्च ततो देयं येभ्य एव ददात्यमौ ॥

इत्युक्तेः,— एवमुक्तासु पूर्वमध्यमोत्तररूपासु तिसृषु क्रियासु एकेन क्रियमाणास्वपि ये केचित् पुत्रनियमा उक्तास्ते सर्वे सर्वेषां कार्य्या एव। फलसंस्काराणां फलसामानाधिकरणनियमात्। एकेनापि कृतया क्रियया सर्वेषां पृथक् पृथक् फलप्राप्तेः। अन्यथा तेषां प्रत्यवायपरिहाराभावात्। सर्वेषां अधिकारित्वेन सम्बन्धात्। यत्तु "सर्वेषान्तु मतं कृत्वा" इत्यादि। ज्येष्ठस्य कर्त्तृत्वे नियमः। अतएव तस्य यावदुक्तमाप्ति[१] ब्रह्मचर्य्यमतुल्यत्वादिति न्याये फलिसंस्कारावचनेन व्यवस्थापिताः[२] ते सर्वेषामपि फलित्वादावर्त्तन्त इत्युक्तम्। तथा च फलिसंस्कारजनकानां नियमानामकृतौ अन्येषां किञ्चित्संस्कारहानौ फलतारतम्यमेव स्यादिति। एवं यजमानस्याशक्तौ यद्यनेन येनचिच्छ्राद्धादिकं क्रियेत, तदा यजमानस्यैव पूर्वदिनोक्ततद्दिनविहितसर्वनियमकरणं, न तु कर्त्तुः, अन्यस्य कर्त्तुः फलित्वाभावात्। ननु यजमानस्याशक्तौ अन्याङ्गवदन्योऽपि नियमान् कुर्य्यादिति चेत् न। फलिसंस्काराणामन्यकृतानां यजमानयो[३]ग्यतापादकत्वात्। तथा चोक्तं षष्ठाध्याये, फलिसंस्कारास्त्वन्येन क्रियमाणा[४] यजमानस्य योग्यतां जनयन्ति इति"। ननु एवे कथं फलिशां फलिसंस्कारा इति चेत्, उच्यते। तत्र फलिसंस्कारा न तेषां योग्यतासम्पादनाय, किन्तु संस्काराणां कर्म्मसम्प्रदानतासम्पादनायेति दिक्।

---

(१) यावदुक्त्याप्तेः। (२) व्यवस्थापिताः।

(३) योग्यतासम्पादकत्वात्। (४) न।

अथ गङ्गायामस्थिप्रक्षेपविचारः।

विष्णुः,— "चतुर्थे दिवसेऽस्थिसञ्चयनं कुर्युस्तेषाञ्च गङ्गाम्भसि प्रक्षेपः।"

यावदस्थिमनुष्यस्य गङ्गाम्भसि च तिष्ठति।

तावद्वर्षसहस्राणि स्वर्गलोकेऽधितिष्ठति॥

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति।

गङ्गायां मरणे यादृक् तादृक्फलमवाप्नुयात्॥

यमः,— गङ्गातोयेषु यस्यास्थि वर्त्तते शुभकर्मणः।

न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथञ्चन॥

आदित्यपुराणे[१], तन्नयनाधिकारिणः,—

अस्थीनि मातापितृपूर्वजानां

नयन्ति गङ्गाम्भसि ये कदाचित्।

सद्बान्धवस्यापि दयाभिभूता-

स्तेषां तु तीर्थानि फलप्रदानि॥

कुलद्वयं वाप्यथ वर्जयित्वा

मातापित्रोर्जन्मभूम्याश्रयञ्च।

अस्थीनि चान्यस्य नरो वहंश्च

भाग्यक्षयं लभते दुष्कृतं च॥

सद्बान्धवस्य शुद्धभावस्य अतिसुहृद इति यावत्।

जन्मभूम्याश्रयं चेत्यनेनापि प्रायिकत्वात् सुहृदेवोच्यत इति नारायणभाष्ये।

तथा,— मातुः कुलं पितृकुलं वर्जयित्वा नराधमः।

(१) आदिपुराणे।

अस्थीन्यन्यकुलोत्थस्य नीत्वा चान्द्रायणाच्छुचिः ॥
तत्स्नानात् सकलैर्नीत्वा कदाचिन्माऋवीजले ।
कश्चित् क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः ॥

तत्स्नानात् अस्थिसञ्चयनात् ।

तत्प्रक्षेपविधिरादिपुराणे,—

स्नात्वा ततः पञ्चगव्येन सिक्त्वा
हिरण्यमध्वाज्यतिलैश्च योज्य[1] ।
ततस्तु मृत्पिण्डपुटे निधाय
पश्यन् दिशं प्रेतगणोपगूढ़ाम् ॥
नमोऽस्तु धर्माय वदन् प्रविश्य
जलं स मे प्रीत इति क्षिपेच्च ।
उत्थाय भास्वन्तमवेक्ष्य सूर्यं
स दक्षिणां विप्रमुखाय दद्यात् ।
एवं कृते प्रेतपुरे स्थितस्य
स्वर्गे गतिः स्याच्च महेन्द्रतुल्या ॥

अस्यार्थः,— गङ्गायां स्नात्वा ततोऽस्थीनि पञ्चगव्येन सिक्त्वा काञ्चनमध्वाज्यतिलैः संयोज्य मृत्पिण्डे निधाय दक्षिणामुखो "नमोऽस्तु धर्मायेति" वदन् जलं प्रविश्य "स मे प्रीतो भवतु" इति जले क्षिपेत् । ततः उत्थाय सूर्यं दृष्ट्वा वृत्ताध्ययनसम्पन्नाय ब्राह्मणाय दक्षिणां किञ्चिद्दद्यात्, इति ।

अथ श्राद्धकालो निरूप्यते ।

तत्रादौ श्राद्धस्मृतिः ।

---

(१) योज्यं ।

यमः,— ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥
दत्तानेन विधानेन लभन्ते चतुरो वरान् ।
धनमन्नं सुतानायुर्ददते पितरो भुवि ॥
आयुः पुत्रान् यशः स्वर्गं कान्तिं पुष्टिं बलं तथा ।
पशून् सुखं धनं धान्यं प्राप्नुयात् पितृपूजनात् ॥

अन्यत्र,— रतिशक्तिर्वरा कान्ता भोज्यं भोजनशक्तिता ।
दानशक्तिः सविभवा रूपमारोग्यमेव च ॥
श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः ।

हारीतः,— स सर्वकामसंयुक्तो ह्यमृतत्वं च विन्दति ।
य एवं वेत्ति मतिमान् तस्य श्राद्धफलं भवेत् ॥
उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ ।

अकरणे दोषं तु स एवाह,—
न च श्रेयोऽधिगच्छन्ति यत्र श्राद्धं विवर्जितम् ।
अपि मूलैः फलैर्वापि तथा ह्युदकतर्पणैः ॥
अविद्यमाने कुर्वीत नैव श्राद्धं विवर्जयेत् ।

श्राद्धस्वरूपं मनुः,—
विप्रस्वीकारपर्यन्तस्त्यागो द्रव्यस्य यः पितॄन् ।
उद्दिश्य मुख्यं श्राद्धं तत्तदङ्गमितरं स्मृतम् ॥

अतएवापस्तम्बः,— तथैतन्मनुः(१), श्राद्धशब्दं कर्म प्रोवाच प्रजापतिः निःश्रेयसार्थं, तत्र पितरो देवताः ब्राह्मणास्त्वाहवनीयार्थे

---

(१) अथैतन्मनुः ।

मासि मासि कार्य्योऽपरपचः । स्यादपराह्नः श्रेयानिति । श्राद्धमिति शब्दो वाचको यस्य तत् तथा । ब्राह्मणस्याहवनीयार्थ इति त्यक्तव्य[1]द्रव्यप्रतिपत्तिस्थानत्वेनेत्यर्थः। तथा च पितॄनुद्दिश्य द्रव्यत्यागो विप्रस्वीकारपर्यन्तः श्राद्धमिति लक्षणं । विष्टरब्राह्मणकश्राद्धेऽपि पश्चात् ब्राह्मणस्वीकाराल्लक्षणसमन्वयः ।

दैविकश्राद्धेऽपि,—

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः । इति स्मृतेः,

एते वै पितरो देवा देवाश्च पितरः पुनः ।

इति मन्त्रलिङ्गाच्च, देवानां पितृलोकसम्बन्धेन पितृत्वात् यमायमादीनां पितृत्वाल्लक्षणसङ्गतिः । श्राद्धानुकल्पहिरण्यदाने तु यथोक्तलक्षणत्वात् सम्यगेव लक्षणसङ्गतिः ।

एतेन श्राद्धस्य दानत्वं सिद्धमिति । गङ्गातीरेऽन्यपुण्यस्थानेषु च प्रतिग्रहस्य निषिद्धत्वाच्छ्राद्धनिमन्त्रणम् तेषु न स्वीकार्य्यम् । ननु गयाश्राद्धादौ केवलपिण्डदाने स्वस्वत्वध्वंसपरस्वत्वापत्तिफलकत्याग-रूपस्य दानस्याभावात् कथं दानतेति चेत्, उच्यते । परस्वत्वा-पत्तिर्न दानपदार्थान्तर्गता, प्रतिग्रहस्य वृत्त्यर्थत्वात् प्राप्तत्वेन विधे-यत्वाभावात् । न चैवं प्रीतिदत्तादिस्वीकार इव मन्त्रादिनियमो न स्यादिति वाच्यं । भोजनादौ दिङ्मुखादिनियमस्येवादृष्टार्थ-त्वात् । किंच, यदि परस्वत्वापत्तेर्दानपदार्थान्तर्गतत्वं स्यात्तर्हि विवाहप्रकरणे "पिता प्रत्तामादाय" इति पारस्करसूत्रे प्रत्तामित्यनेन प्रतिग्रहविहेरादायेति व्यर्थं स्यात् । किञ्च,—

---

(1) त्यक्तव्य ।

मनसा पात्रमुद्दिश्य ततो भूमौ जलं क्षिपेत्।

विद्यते सागरस्यान्तस्तस्यान्तो न हि विद्यते ॥

इत्युक्तत्यागमात्रस्य दानत्वं न स्यात्, इति प्राञ्चः। वस्तुतः प्रतिग्रहस्याङ्गत्वादङ्गानां प्रधानदेशकालान्वयित्वात् दानकाले प्रतिग्रहे समग्रफलं प्रतिग्रहाकरणे तु अङ्गवैगुण्यं। वचनात्तु परोक्षदानस्थले काम्यकर्मण्यप्यङ्गवैगुण्ये फलमिति निष्कर्षः। मैथिलास्तु यागदानहोमविलक्षणं उत्सर्गाभिधमपि त्यागमाहुः। पुष्करिण्युत्सर्गादौ आब्रह्मस्तम्बपर्य्यन्तानां स्वीकाराभावेन दानत्वाभावात्। अयमेव न्यायः परोक्षदानस्थल इति। तत्सिद्धं श्राद्धस्य दानत्वम्। तथा,—

श्राद्धं नामादनीयस्य द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्याग इति वदद्भिर्विज्ञानेश्वरैरपि दानत्वमुक्तम्। तथा,—

पितृभ्यो ददातीति प्रत्यक्षश्रुतावपि दानत्वम्। नन्वत्र पितॄणां प्रतिग्रहीतृत्वाभावात् ब्राह्मणस्य प्रतिग्रहीतृत्वेऽपि दानविधौ उद्देश्यत्वाभावादुद्देश्यत्वे सति प्रतिग्रहीतुरेव सम्प्रदानत्वात् सम्प्रदानरहिते ददात्यर्थः, कथं सङ्गच्छते इति चेत् उच्यते। उद्देश्यत्वं च तस्येदमिति ज्ञानविषयत्वं तच्च ब्राह्मणस्यास्ति।

अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम्।

द्विगुणांस्तु कुशान् कृत्वा उशन्तस्त्वेत्यृचा पितॄन् ॥

आवाह्य तदनुज्ञातो जपेदायन्तुनस्ततः।

इति याज्ञवल्क्योक्तादावाहनेन प्रतिमाया[1] देवतात्ववत् ब्राह्मणस्यापि पितृत्वादुद्देश्यत्वोपपत्ते[2]; अन्यथा मोचेत्यादिब्राह्मण-

(१) प्रतिमायाः।     (२) उद्देश्यत्वोपपत्तिः।

व्यतिपातो गजच्छाया ग्रहणे चन्द्रसूर्य्ययोः ।
श्राद्धं प्रतिरुचिश्चैव श्राद्धकाला प्रकीर्त्तिताः ।

सूर्य्याचन्द्रमसोः संक्रान्तिसाम्यं व्यतीपात इति लक्ष्मीधरः । योगविशेष इत्यर्थः । अस्य पारिभाषिकं लक्षणम् अलभ्ययोगप्रकरणे लेख्यम् । गजच्छायालक्षणं तु महालयश्राद्धप्रकरणे लेख्यम् । श्राद्धं प्रतिरुचिरित्यस्यार्थः श्राद्धं कार्य्यमिति यदा रुचिर्जायते तदैव श्राद्धकाल इत्यर्थः ।

अथ श्राद्धशब्दार्थः ।

मरीचिः,— प्रेतं पितॄंश्च निर्द्दिश्य त्याज्यं यत्प्रियमात्मनः ।
श्रद्धया दीयते यद्यत्तत्श्राद्धं परिकीर्त्तितम् ॥

बृहस्पतिरपि,— संस्कृतं भोजनार्हञ्च पयोदधिघृतान्वितम् ।
श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते ॥

तच्च श्राद्धं नित्यनैमित्तिककाम्यभेदेन त्रिविधम् । तत्र प्रतिदिनश्राद्धामावस्याष्टकान्वष्टकायुगादिश्राद्धानि नित्यानि । तत्र प्रमाणं वक्ष्यते ।

नैमित्तिकानि काम्यान्यप्याह गालवः—
प्रेतश्राद्धं सपिण्डान्तं संक्रान्तिग्रहणेषु च ।
संवत्सरोदकुम्भश्च वृद्धिश्राद्धं निमित्ततः ॥

तथा,— तिथ्यादिषु च यच्छ्राद्धं मन्वादिषु युगादिषु ।
अलभ्येषु च योगेषु तत्काम्यं समुदाहृतम् ॥

युगादीनां नित्यकाम्यत्वादत्रापि ग्रहणमविरुद्धम् । तिथ्यादिष्विति तिथिवारनक्षत्रयोगकरणेष्वित्यर्थः । तानि च वक्ष्यन्ते ।

विश्वामित्रः, श्राद्धानि द्वादशेत्याह—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्।
पार्वणं चेति विज्ञेयं गोष्ठ्यं[१] शुद्ध्यर्थमष्टमं॥
कर्म्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं पुनः॥

विवृतञ्चैतत् भविष्ये,—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम्।
वैश्वदेवविहीनन्तदशक्तावुदकेन तु॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।
तदप्यदैवं कर्त्तव्यं अयुग्मानाशयेद्द्विजान्॥
कामाय विहितं काम्यमभिप्रेतार्थसिद्धये।
पार्वणेन विधानेन तदप्युक्तं खगाधिप॥
वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते।
सर्वं प्रदक्षिणं कार्य्यं पूर्वाह्णे तूपवीतिना॥
गन्धोदकतिलैर्युक्तं कुर्य्यात्पात्रचतुष्टयम्।
अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥
ये समाना इति द्वाभ्यामेतद्ज्ञेयं सपिण्डनम्।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि॥
अमावास्यां यत्क्रियते तत्पार्वणमुदाहृतम्।
क्रियते पर्वणि यत्तु तत्पार्वणमिति स्थितिः॥

---

(१) ष्ठाः।

तुज्ञादिकमसंङ्गतं स्यात्। "पितृभ्यो रोचतां, यथासुखं वाग्यता-जुषध्व"मित्याद्यप्यसङ्गतं स्यात्। अतएव "[१]अमुकसगोत्रैतत्तुभ्यमन्नं स्वधा नमः" इति ब्रह्मपुराणोक्तौ पितृगोत्रोच्चारणमेव, न तु निमन्त्रितब्राह्मणस्य। ननु "पितॄन् यजते"[२] इति श्रुतेः श्राद्धस्य यागत्वमिति चेत्, न। तत्र यजतेर्दानार्थत्वपक्षाश्रयणात्। दानार्थत्वे तु पितॄनिति द्वितीयाविभक्तिरनुपपन्नेति चेन्न। पितॄनुद्दिश्य यजते[३] इति व्याख्यानस्याङ्गीकरणात्। "त्यागो द्रव्यस्य यः पितॄन्" उद्देश्येति मनूक्तिरेवात्र प्रमाणं। एतेन यजत इति वचनमवलम्ब्य श्राद्धस्य त्यागत्वं यागदानोभयरूपत्वं चेति युक्तिजालं वितत्य वदन्तो निरस्ता एव। तत्र ब्राह्मणभोजनं प्रधानं, उत पिण्डदानं आहोस्वित् उभयम्।

यद्वा पितॄनुद्दिश्य द्रव्यत्याग एव, इति सन्देहे। "विप्रस्वी-कारपर्य्यन्तः" इत्युक्तेर्ब्राह्मणभोजनमेव प्रधानं, पिण्डदानमिति च केचित्। अन्ये तु पङ्क्तिपावननिमन्त्रणापाङ्क्तभोजनदोषामद्रव्यक-श्राद्धदर्शनश्राद्धिकप्रतिग्रहानध्यायादिदर्शनात् ब्राह्मणभोजनं प्रधान-मिति। कर्काचार्य्यास्तु,— गयाश्राद्धभीष्मपिण्डदाने शान्तनुहस्तो-त्थानदर्शनकेवलपिण्डदानविधिभ्यः पिण्डदानं प्रधानमिति।

नारायणभट्टप्रभृतयस्तु "उभयं प्रधानं" इति।

तथा च,— अग्नौ कृतेन देवस्थाः पितृस्था द्विजतर्पणैः।

नरकस्थांश्च तृप्यन्ति पिण्डैर्दत्तैस्त्रिभिर्भुवि॥

---

(१) अमुकामुकगोत्रैतत्तुभ्यमन्न०। (२) यजेत। (३) यजेतेति।

गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानाञ्च भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥
देवानुद्दिश्य तु श्राद्धं यत्तद्दैविकमुच्यते ।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्पुनः ॥
गच्छन् देशान्तरं यत्तु श्राद्धं कुर्यात्तु सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ॥
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमेतत् विज्ञेयमौपचायिकमुच्यते ॥

उपवीतिनेत्यन्तं वृद्धिश्राद्धे योज्यम् । वृद्धिः पुत्रजन्मादि । शेषं स्यादित्यन्तं सपिण्डने योज्यम् । अधिकारेण स्त्रियाः सपिण्डनं कार्य्यं, एकोद्दिष्टपदेन वार्षिकं स्त्रियाः कार्यमित्यर्थः ।
तथा च याज्ञवल्क्यः,—

एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ।

अमावास्यामत्यन्तसंयोगे द्वितीया । स तेनामावास्यां प्राप्नोति व्याख्या । क्रियते वेत्यत्र पर्वपदेन संक्रान्त्याद्यष्टकान्वष्टकादिपरिग्रहः । गोष्ठीश्राद्धं कर्त्तृसमुदायः, सम्पत्सुखार्थं श्राद्धसामग्रीसम्पदा यत्सुखं तदर्थे बहूनां विदुषां केनापि निमित्तेन युगपत्तीर्थश्राद्धे कर्त्तव्ये देशकालादिवशात् पृथक्पाकाद्यसम्भवे सम्भूय श्राद्धसामग्री-

सम्पादनेन यत् श्राद्धं तद्गोष्ठीश्राद्धमित्यर्थः। निषेककाल इत्यादि श्रौतस्मार्त्तकर्मोपलक्षणम्। एतच्च कर्माङ्गश्राद्धं वृद्धिश्राद्धवत्कार्यम्। "कर्माङ्गं वृद्धिवत्" इति पारस्करसूत्रात्। कर्माङ्गसञ्ज्ञाकरणं प्रकरणे कर्मवैगुण्यद्योतनार्थम्। दैविकं तु नित्यश्राद्धवत्। तदनुवृत्तौ "नित्यश्राद्धवत् कुर्यादिति" पारस्करोक्तेः। गच्छन्नित्यादितीर्थयात्रार्थं देशान्तरगमनसमये, यात्रां समाप्यागमनानन्तरं गृहप्रवेशे चेत्यर्थः। सर्पिषा सर्पिःप्राधान्येन यात्राङ्गश्राद्धमित्यर्थः। शरीरेत्यत्र शरीरोपचयहेतौ रसायनादौ कर्त्तव्ये इत्यर्थः। एतद्वचनक्रमेण श्राद्धकाला विचार्य्यन्ते। तत्राष्टधाविभक्तस्य दिवसस्य पञ्चमो भागो नित्यश्राद्धकालः।

तथा च दक्षः,—

पञ्चमे च तथाभागे संविभागो यथार्हतः।
देवपितृमनुष्याणां कीटानां चोपदिश्यते॥
संविभागं ततः कृत्वा गृहस्थः शेषभुक् भवेत्।

यथार्हतो यथायोग्यम्,

संविभागो विभज्यान्नस्य प्रतिपादनम्। यद्यपि नित्यश्राद्धे "अशिलैः पाणिनैवार्घः" इत्यादिविधिरस्ति, तथापि अप्युद्धृत्येत्याद्युक्ताशक्तपक्षेनैवाश्रित्य अन्नादिकं स्थापयित्वा कुशसहितजलेन वा उत्सर्गमाचरतु नान्यत् किञ्चित्।

तथा च छन्दोगपरिशिष्टे,—

अप्येकमाशयेत् विप्रं पितृयज्ञार्थसिद्धये।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा॥

अप्युद्धृत्य यथाशक्ति किञ्चिदन्नो[१] यथाविधि ।
पितृभ्यश्च मनुष्येभ्यो दद्यादहरहर्द्विजः ॥
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् ।
हन्तकारं मनुष्येभ्यस्तदन्ते निवपेदपः[२] ॥

अन्नोत्सर्गार्थमन्ते जलं क्षिपेदित्यर्थः । तथा च सनकाद्यन्नदानमपि नित्यश्राद्धाङ्गं ।

तच्च व्यक्तं स्मृत्यन्तरे,—

नित्यश्राद्धमदैवं स्यान्मनुष्यैः सह गीयते ।

कुलविशेषे एतन्नित्यश्राद्धं एकस्मिन्नेव पक्षे षट्पुरुषात्मकतया कुर्वन्ति । केचित् पित्रादीनां एकपक्षं मातामहादीनां एकपक्षं कुर्वन्ति । अस्मदादिकुलेषु पृथक् पृथक् पक्षद्वयं, षाट्पुरुषिकं चान्यदिति पक्षत्रयं[३] कुर्वन्ति । अत्र कर्त्तुर्मांसाशित्वे मत्स्यमांसादिकं देयम् ।

देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक् ।

इति नित्यश्राद्धाभिप्रायेण मनुनाभ्यनुज्ञातत्वात् । एवं च,—

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि मांसवर्जमदैवतम् ॥

इति वाक्यं वानप्रस्थविषयम् । काम्यमांसवर्जनसङ्कल्पकर्त्तृविषयं वेति ज्ञेयम् । अस्मदादिकुलेषु तु एतदुभयवाक्यानुरोधेन त्रैपुरु-

---

(१) चान्य० । (२) निनयेत् ।
(३) पक्षत्रयात्मक० ।

पिकपत्नयोर्नैव मांसदानम्। वाट्पुरुषिकपत्ते एव मांसदानमिति समाचारः समीचीनः।

मांसमन्न तथा श्राद्धं गृहे यत्नोपसाधितम्।

इत्युक्तेश्च। एतन्नित्यश्राद्धं अपुत्रभ्रातृपितृव्यादीनां एकपुरुषात्मकं कार्य्यम्। भ्रात्रादीनामुत्तरक्रियास्वपि कर्त्तृत्वोक्तेः।

केचित्तु जीवत्पितृकस्यापि साग्निकत्वे,—

न जीवत्पितृकः श्राद्धं कुर्य्यादग्निमृते द्विजः।

येभ्यो वापि पिता दद्यात्तेभ्यो दद्यात्तु साग्निक।

इति सुमन्तूक्तेर्वैकल्पिकमिति तन्न।

"न जीवन्तमतिदद्यात्"

इति प्रत्यक्षश्रुतेः।

सपितुः पितृकृत्येषु अधिकारो न विद्यते।

इति विष्णुकृतिविरोधात्। तथा च जीवत्पितृकस्य साग्निकत्वेऽपि पत्वान्तमेव वैश्वदेवं नित्यश्राद्धाभावश्चेति समाचारः समीचीनः नित्यश्राद्धवैश्वदेवादिकं तु पितृपुत्रभ्रात्रादीनामविभक्तानामेकेन करणे सर्वेषां प्रत्यवायपरिहारात् सर्वैः पृथक् पृथक् न कार्य्यम्।

एकपाके निवसतां पितृदेवद्विजार्च्चनम्।

एकं भवेत् विभक्तानां तदेव स्याद् गृहे गृहे॥ इत्युक्तेः।

यद्यपि,—

एवं सह वसेयुर्वा पृथक् वा धर्म्मकाङ्क्षया।

पृथक् हि वर्द्धते धर्म्मस्तस्मात् धर्म्याः पृथक् क्रियाः॥

इति ब्रह्मलोकप्राप्त्यादिफलार्थं पुनः काम्यतया पृथक् पृथक्

करणं अविभक्तानां मनुनोक्तं। तथापि तथाचारः कदापि न दृश्यते। तथापि,—

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि।

इति गौतमोक्ते मातामहादिश्राद्धस्य पितृश्राद्धाधीनत्वेन अविभक्तसपत्नीभ्रातॄणामपि एकेन नित्यश्राद्धे कृते अन्येन स्वमातामहाद्यर्थं पुनः पचान्तरं न क्रियते। एवममावास्यादिश्राद्धेष्वपि पृथक्करणसमाचाराभावः।

ब्रह्मचारी भवेच्छ्राद्धे मुक्त्वा श्राद्धं तु नैमित्तकम्।

इत्युक्तेर्नित्यश्राद्धे श्राद्धदिनविहितश्राद्धनियमाभावः। गृहस्वामिनोऽनुपनीतत्वे तु नित्यश्राद्धस्यास्य पञ्चयज्ञान्तर्गतत्वात् करणाभावः। पारस्करसूत्रे समावर्त्तनमुक्त्वा,— "अथातः पञ्चयज्ञा इति" समावर्त्तनानन्तरमेव पञ्चयज्ञेष्वधिकारोक्तेः।

अपि वा वेदतुल्यत्वादुपायेन निवर्त्तेरन्।

इति षष्ठे च जैमिनीयसूत्राच्च,—

स्मृतीनां वेदतुल्यत्वादुपायेन उपनयनादूर्द्धं स्मार्त्तधर्माः प्रवर्त्तेरन्निति तस्यार्थः। अविभक्तानां प्रवासे गृहान्तरावस्थाने पृथक्पाके सत्यपि न पृथग्वैश्वदेवकरणम्।

लौकिके वैदिके वापि हुतोच्छिष्टे जले चितौ।

वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनापनुत्तये॥

इति शातातपाद्युक्तौ पञ्चसूनादोषस्यैव वैश्वदेवनिमित्तत्वमिति एकेन यत्र कुत्रापि तत्करणे(१) दोषनिवृत्तेरुत्पन्नत्वात्। एतेन

(१) क्वापि।

पाकस्य वैश्वदेवनिमित्तत्वमाशङ्क्य पृथक्पाके यद्वैश्वदेवान्तरकरणं तन्निरस्तम्। पाकस्य वैश्वदेवनिमित्तत्वात् श्रुतेः।

अथ क्रमप्राप्तनैमित्तिकश्राद्धस्य कालविचारः।

श्राद्धकालनिगमोक्तकारिका याः स्वदेशबुधतोषकारिकाः।

अन्यदेशमततापकालिकास्तास्तनोम्युदितयुक्तिकालिकाः।

तथा च,—

मुहूर्त्तात् सप्तमादूर्द्ध्वं मुहूर्त्तात् दशमादधः।

एकोद्दिष्टस्य कालोऽयं मुहूर्त्तात् दशमात् परम्॥

मुहूर्त्तत्रितयं काल अमावास्यस्य सप्तमात्।

परतः पञ्च मुहूर्त्ताः पार्वणस्येतरस्य तु॥

पूर्वाह्णे प्रथमादूर्द्ध्वं यन्मुहूर्त्तचतुष्टयम्।

तदाभ्युदयिकश्राद्धकालत्वेनावधारितम्॥

एकोद्दिष्टस्य कालश्चेन्न लभ्येत दिनद्वये।

मुहूर्त्ते दशमादावप्येकोद्दिष्टं तदा भवेत्॥

पार्वणस्य तु मुहूर्त्ताः पञ्च ये परिकीर्त्तिताः।

तेषां परेऽष्टमाच्छस्ता अष्टमस्तदसम्भवे॥

दिनद्वयेऽपि लभ्येत कालश्चेत् प्रथमादरः।

पूर्वे वा मुख्यचोदना लोकवत् प्राह जैमिनिः॥

तत्रादौ नैमित्तिकस्य वार्षिकश्राद्धस्यावश्यकत्वं भविष्ये,—

मृतेऽहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात्।

मातुश्चैव वरारोहे वत्सरान्ते मृतेऽहनि॥

नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः।

तथा,— पण्डिता ज्ञानिनो वापि मूर्खा योषित एव वा ॥

मृताहं समतिक्रम्य चण्डालाः सप्तजन्मसु ।

शतानन्दसंग्रहे,—

श्राद्धानां चैव सर्वेषां श्रेष्ठं सांवत्सरं स्मृतम् ।

तत् प्रयत्नेन कुर्वीत अकुर्वन्नरकं व्रजेत् ॥

फलं चाह हरिहरसमुच्चये,—

ग्रहणानां सहस्रेषु अमावास्याशतेषु च ।

ततोऽक्षयतरं याति यस्तु कुर्यान्मृतेऽहनि ।

तच्च द्विविधम्,—

एकोद्दिष्टं पार्वणं चेति ।

यमः,— सपिण्डीकरणादूर्द्ध्वं प्रतिसंवत्सरं सुतैः ।

मातापित्रोः पृथक् कार्यमेकोद्दिष्टं मृतेऽहनि ॥

अत्र भविष्योक्तिरप्युक्ता । यमदग्निः,—

आपाद्य सहपिण्डत्वमौरसो विधिवत्सुतः ।

कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि ।

पार्वणविधिनेत्यर्थः । एवं याज्ञवल्क्येन एकोद्दिष्टमुक्तं । मनुना पार्वणमुक्तम् । एवं च उभयोर्यवव्रीहिवत् विकल्पः । ननु यवव्रीहिविकल्पे निन्दोक्तिर्नास्ति ।

इह तु,— ततः प्रभृति संक्रान्तावुपरागादिपर्वसु ।

त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृतेऽहनि ॥

एकोद्दिष्टं परित्यज्य पार्वणं यः समाचरेत् ।

स देवपितृहा स स्यात्साहभ्रातृविनाशकः ॥

मृताहे पार्वणं कुर्वन्नधोऽधो याति मानवः।
संपृक्तेष्वाकुलीभावः प्रेतेषु तु ततो भवेत्॥

इति मात्स्योक्तौ निन्दोक्तेः, कथं विकल्प इति चेत्, उच्यते। न हि निन्दाऽनिन्द्यं निन्दितुं प्रवर्त्तते। अपि तर्हि स्तुत्यं स्तोतुमिति न्यायेन उदितानुदितहोमवद्विकल्पोऽस्तु। अतएव कल्पतरुकारैस्तुल्यबलत्वाद्विकल्प इत्येवोक्तम्। कर्काचार्य्यैरपि देशकुलाचारव्यवस्थयेत्युक्तम्।

कल्पतरौ औरसक्षेत्रजपुत्रसाग्न्यनग्नीनां याऽत्र व्यवस्था उक्ता, साऽस्मद्देशे नैवाद्रियते, विज्ञानेश्वरैरपि नादृता। एवं देशकुलाचारव्यवस्थया उभयोर्विकल्प इति।

यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम्।
पार्वणेन विधानेन देयमग्निमता सदा॥

इति मात्स्येऽपि प्रतिप्रसवोक्तेरेकोद्दिष्टकुलेऽपि साग्निपुत्रेण मृताहश्राद्धं पार्वणविधिनैव कार्य्यम्। तथा त्रिदण्डिसन्यासिनो-मृताहश्राद्धं पार्वणमेव।

आपस्तम्बः,—

एकोद्दिष्टं न कुर्वीत सन्यासिनां च सर्वदा।
अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते॥
सपिण्डीकरणश्राद्धं न कर्त्तव्यं सुतेन वै।
त्रिदण्डग्रहणादेव प्रेतत्वं नैवगच्छति॥

तत्पत्नीनामपि मृताहश्राद्धम्। तथा प्रेतपक्षामावास्ययोर्मृताहश्राद्धपाते पार्वणमेवेति वक्ष्यते। अथ पार्वणि कुलेऽप्येकोद्दिष्टविधिः।

आपस्तम्बः,—अपुत्रा ये मृता केचित् स्त्रियो वा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥ इति ।

तथा च श्राद्धार्हाणामपि पुत्रपितृव्यादीनां तत्पत्नीनामपि मृताहश्राद्धम् सर्वकुलेष्वपि एकोद्दिष्टमेव । तथा साग्निकानग्निकैः सर्वैरपि अामावास्याप्रेतपक्षयोरपि तन्मृताहे एकोद्दिष्टमेव कार्य्यम् ।

अनयोर्लक्षणम् ।

कण्वः,— एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्त्तितम् ।
त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः ॥ इति ।

अतएव पर्वण्यमावास्यायां भवं पार्वणमिति, यौगिकार्थस्य मृताहादौ अभावेऽपि पारिभाषिकपार्वणत्वं त्रिपुरुषोद्देशेन विहितत्वादमावास्यासाम्येन प्रयुक्तम् । एवं काम्यश्राद्धेष्वपि ज्ञेयम् ।

अथ मृताहस्वरूपम् ।

व्यासः,— मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दन्तु तथाभूतं क्षयाहं तस्य तद्विदुः ॥ इति ।

अथैकोद्दिष्टश्राद्धकालः ।

व्यासः,— एकमुद्दिश्य यच्छ्राद्धं दैवहीनं विधीयते ।
एकोद्दिष्टन्तु तत्प्रोक्तं मध्याह्ने तत्प्रकीर्त्तितम् ॥
कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् ।
आवर्त्तनसमीपे वा तत्रैव नियतात्मवान् ॥ इति ।

तथा च पूर्वोक्तपञ्चदशधा विभक्तस्य दिवसस्य गन्धर्वकुतपरौहिणसंज्ञकानां सप्तमाष्टमनवममुहूर्त्तानामेकोद्दिष्टकालत्वेन प्रतीतावपि,—

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्॥
रौहिणं लङ्घयेद्यस्तु ज्ञानादज्ञानतोऽपि वा।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति॥

इति श्लोकगौतमोक्तेः कुतपरौहिणावेव कर्मकालत्वेन व्यवस्थितौ।
अत एव,— मुहूर्त्तात् सप्तमादूर्द्ध्वं मुहूर्त्ताद्दशमादधः।

इति शिष्टाः।

कुतपलक्षणं वायवीये,—

दिवसस्याष्टमे भागे मन्दीभवति भास्करः।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्॥

इति। तथा च तन्मुहूर्त्तद्वयव्यापिनी तिथिरेकोद्दिष्टे ग्राह्यैव। तत्र षोढ़ाभेदे सति पूर्व्वेद्युरेव तद्व्याप्तौ न सन्देहः। परेद्युरेव तद्व्याप्तौ परेद्युरेव। उभयत्र तद्व्याप्तौ उभयत्र तद्व्याप्त्यभावे वा पूर्व्वेद्युरेव।

तत्र हारीतः,—

अपराह्णः पितॄणान्तु याऽपराह्णानुयायिनी।
सा ग्राह्या पितृकार्य्ये च न पूर्व्वाह्णानुयायिनी॥

वृहन्मनुः,—यस्यामस्तं रविर्याति पितरस्तामुपासते।
तिथिस्तेभ्यो यतो दत्ता ह्यपराह्णः स्वयम्भुवा॥

बौधायनः,—उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः॥

इत्याद्यपराह्णसायाह्नास्तमयव्याप्तिविषयसामान्यवचनबलात्।

तथा उभयव्याप्तिपक्षे मनुरपि,—

> द्व्यह्नव्यापिनी चेत् स्यान्मृताहे तु [१]यदा तिथिः ।
> पूर्वविद्धैव कर्त्तव्या त्रिमुहूर्त्ता भवेद्यदि ॥

उभयदिने साम्येनैकदेशव्याप्तौ तिथेः साम्ये च वृद्धौ च परदिने श्राद्धम् । तिथेः क्षये तु पूर्वेद्युः श्राद्धं, पूर्वोदाहृतखर्वादिवचनात् । तद्वचनस्य दैवपित्र्यसाधारण्येन निर्णीतत्वात् । उभयदिने वैषम्येणैकदेशव्याप्तौ यद्दिने महती व्याप्तिः, तद्दिने एव श्राद्धम् । महत्वेन निर्णयः पार्वणश्राद्धे वक्तव्यः ॥

इति एकोद्दिष्टश्राद्धकालनिर्णयः ।

## अथ पार्वणश्राद्धकालः ।

तत्र यथाकालप्राप्तश्राद्धविषये "अपराह्णः पितॄणान्तु" इति हारीतोक्तिः, "यस्यामस्तं रविर्याति" इति वृहन्मनूक्तिः "उदिते दैवतं भानाविति" बोधायनोक्तयः साधारण्येन पूर्वमुक्ताः "अपराह्णः पितॄणां" इति श्रुतिश्च[२] ।

वृद्धगौतमः,— मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् । इति,

> अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ॥ इति ।

तथा चापराह्ण एव पार्वणश्राद्धकालः । अपराह्णस्तु पञ्चदशधाविभक्तस्य दिवसस्य दशमैकादशद्वादशात्मकः चतुर्थो भागः ।

ननु मनुना तु,—

> तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ।

इति दिवसापरार्द्धमेवापराह्णत्वेनोक्तम् इति चेत्, उच्यते ।

---

(१) यदा ।　　　　(२) श्रुतिरपि ।

कदाचित् कार्य्यवशात् पार्वणश्राद्धस्य सप्तमा कार्य्यत्वे सति दिवसा-परभाग एव कार्य्यत्वं न पूर्वभाग इत्यत्रैव तात्पर्य्यम्, तद्वचनस्येति बोध्यम् । यच्च,—

श्रह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः ॥
श्रष्टमे भास्करो यस्मान्मन्दीभवति सर्वदा ।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥
ऊर्द्ध मुहूर्त्तात् कुतपात् यन्मुहूर्त्तचतुष्टयम् ।
मुहूर्त्तपञ्चकं वापि स्वधाभवनमिष्यते ॥

इति मात्स्योक्तौ यथाकालप्राप्तश्राद्धविषये कुतपस्य प्रारम्भकालत्व-मुक्त्वा नवमादिमुहूर्त्तानां श्राद्धकालत्वमुक्तम् । तेन मध्याह्नसम्बन्धि-नमपि नवममुहूर्त्तमादायैवामावास्येतरपार्वणश्राद्धकालो निर्णयः ।

श्रत एव श्रस्मद्देशीयशिष्टाः,—

पार्वणस्य(१) तु मुहूर्त्ता पञ्च ये परिकीर्त्तिताः ।
तेषां परेऽष्टमाच्छस्ता श्रष्टमस्तदसम्भवे ॥ इति ।

तथा च सति श्रमावास्येतरपार्वणेऽधिकं नवममुहूर्त्तस्य प्रवेशो न प्रकृतापराह्नस्य हानिः । किञ्च, सप्तमात् परतः इति यदस्म-द्देशीयशिष्टैः प्रागुक्तं तदप्यष्टममुहूर्त्तस्यारम्भाभिप्रायमित्यवधेयम् । तत्र षोढा भेदा उन्नेयाः । तत्र पूर्वेद्युरेव तादृशापराह्नव्याप्तौ पूर्वेद्युरेव । परेद्युरेव तद्व्याप्तौ परेद्युरेव श्राद्धम् । दिनद्वयेऽप्यपराह्न-व्याप्तौ पूर्वेद्युरेव । "मुख्यं वा पूर्वचोदनेति" जैमिनीयन्यायात्,

(१) पार्वणस्य मुहूर्त्तास्तु पञ्च ये परिकीर्त्तिता ।

द्वयाह्व्यापिनीत्यादि मनूक्तेश्च। दिनद्वयेऽपीति संग्रहकृतो स्फुटत्वाच्च।
यदा दिनद्वयेऽप्यपराह्णे व्याप्त्यभावस्तदा पूर्वेद्युरेव।

तत्र मनुः,— "यस्यामस्तं रविर्यातीत्यादिना"।

शिवरहस्यसौरपुराणयोरपि,—

प्रायः प्रातरुपोष्या हि तिथिर्दैवफलेप्सुभिः।
मूलं हि पित्र्यकृत्यार्थं पैत्र[१]ञ्चोक्तं महर्षिभिः॥

मूलं तिथिमूलम्। "पैत्रं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः"। इति नारदीयोक्तेः।

व्यासः,— अन्नास्तमनवेलायां कलामात्रापि या तिथिः।
सैव प्रत्याब्दिके श्राद्धे नेतरा पुण्यहानिदा॥

नारदीये,— पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता।
पित्र्येऽस्तमनवेलायां स्पृष्टा पूर्णा निगद्यते॥

इति साकल्यमपि प्रतिपादितम्।

गोभिलः,— सायाह्नव्यापिनी या तु पार्वणे सा उदाहृता।

शिवरहस्यब्रह्मवैवर्त्तनारदीयसौरपुराणेषु,—

दर्शञ्च पूर्णमासञ्च[२] पितुः साम्वत्सरं दिनम्।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते॥

ननु अपराह्णव्याप्त्यभावे परेद्युः कुतपकाले सत्त्वात्तद्दिन एवास्तु इति चेन्न, पूर्वेद्युस्तिथिमूलत्वास्तमयव्याप्तिरूपगुणद्वयसद्भावात्, कुतपस्यारम्भकालत्वेनोपादानात् व्यत्रव्यापकत्वाभावाच्च। यदा दिनद्वये वैषम्येणैकदेशव्याप्तिस्तदा यद्दिने महती व्याप्तिस्तद्दिन एव श्राद्धम्।

(१) पैत्र्यं। (२) पौर्णमासं।

द्विपराह्णव्यापिनी चेदाब्दिकस्य यदा तिथिः।

महती यत्र तद्विद्धां प्रशंसन्ति महर्षयः॥

इति मरीचुक्तेः।

दिनद्वयेऽप्यपराह्णैकदेशव्याप्तौ साम्येन एकदेशव्याप्तिश्चेत् तत्र तिथेः साम्ये वृद्धौ च परेद्युः श्राद्धं। तस्मिन्नेव पक्षे तिथेः क्षये पूर्वेद्युः श्राद्धं खर्वदर्पादिवाक्यात्।

एतेन,— अपराह्णद्वयव्यापिन्यतीतस्य तु या तिथिः।

क्षये पूर्वा तु कर्त्तव्या वृद्धौ कार्य्या तथोत्तरा॥

इति, बौधायनोक्तिरेतत्समानार्थिकैव। अतीतस्य मृतस्येत्यर्थः। अत्र यत्साम्ये किञ्चिन्नोक्तम्, तद्वृद्धिपक्षोल्लेखेनैव चारितार्थ्यादिति बोध्यम्।

ननु,— तिथ्यादौ तु भवेद्यावान् ह्रासो वृद्धिः परेऽहनि।

तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि॥

इति स्मृतिमुपजीव्य उत्तरतिथिगतवृद्धिक्षयप्रक्षेपेण कृतस्य मेधावच्छिखामणिमाधवाचार्य्यनिर्णयस्य किमित्यनादरः कृत इति चेत्, उच्यते।

अस्याः स्मृतेर्मूलाभावेऽपि स्वदेशाचारोपष्टम्भेनैव माधवाचार्य्यैस्तादृशो निर्णयः कृतः। कल्पतरुकृत्प्रभृतिभिस्तथाऽस्मद्देशीयैः प्राचीनैरन्यशिष्टैरपि स्वदेशाचारविरुद्धः स निर्णयो न कृत इति अस्माभिरपि नादृतः। ननु अस्मद्देशेऽपि कैश्चिन्नवीनैर्महतां माधवाचार्य्याणां निर्णयः कथं न स्वीकार्य्य इत्याग्रहः क्रियत इति चेत्। न किञ्चिदेतत्। यदि माधवाचार्य्यव्यवस्था सर्वत्रैवादरणीया,

तर्हि वक्ष्यमाणामावास्याश्राद्धेऽपराह्णकालीनो दर्श आह्निकवन्नत इति पञ्चधाविभागपक्षमादृत्य तदुक्तां व्यवस्थामनादृत्य त्रिधा-विभागपक्षः किमिति तैरप्याद्रियेत ।

अथ तैर्वक्तव्यम्,—

येनास्य पितरो याता येन याताः पितामहाः ।

तेन गच्छेत् सतां मार्गं तेन गच्छन्नरिष्यति ॥

इति मनूक्तेरमावास्यायां स्वदेशाचार एव ग्राह्य इति । तर्हि स्वदेशाचारोपष्टम्भेनैव तद्व्यवस्था नादरणीयैव । तस्मादस्मद्देशसमा-चारविरुद्धा माधवाचार्यव्यवस्थास्मद्देशीयैः श्राद्धविषये नाद्रियत एव । इत्यमावास्येतरपार्वणश्राद्धकालनिर्णयः पार्वणिभिः साम्वत्सरिके योज्यः । विघ्नवशादपराह्णासम्भवे सायाह्नेऽपि सर्वपार्वणश्राद्धकरणे-ऽप्यदोषः ।

तथा च व्यासः,— स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वं यथाविधि ।

व्याघ्रपादोऽपि,—

विधिज्ञः श्रद्धयोपेतः सम्यक्पात्रनियोजकः ।

रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम् ॥

श्रेयः श्राद्धकरणोक्तफलम् ।

अतएव सायाह्नस्य गौणकालत्वमिति न कश्चिद्विरोधः । तथा दिवारब्धस्य तस्य रात्रौ समापनेऽप्यदोषः । "न च नक्तं श्राद्धं कुर्वीत आरब्धे चाह्नि वा भोजनमासमापनादिति आपस्तम्बोक्तेः ।" यत्तु स्कान्दे,— उपसन्ध्यं न कुर्वीत पितृपूजां कथञ्चन ।

स काल आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत् ॥

| | Rs | |
|---|---|---|
| Muntakhabu t Tawar kl (Text) Fasc 1-15 @ /6 each | 5 | 0 |
| Muntakhabu t Tawar kh (Engl sl) Vol I Fasc 1-7; Vol II, Fasc 1 5 and 3 Indexes; Vol III Fasc 1 @ /12 each | 12 | 0 |
| Muntakhabu l Lubab (Text) Fasc 1-19 @ /6/ each | 7 | 2 |
| Ma as r ı Alamg rí (Text) Fasc 1 6 @ /6/ each | • | 4 |
| Nukhbatu l Fikr (Text) Fasc 1 | 0 | 6 |
| Nizam s Khıradnamah ı Iskandar (Text) Fasc 1 2 @ /12/ each | 1 | 8 |
| Riyazu s Salat n (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| D tto D tto (Engl sh) Fasc 1-II | 1 | 8 |
| Tabaqat ı Nasır (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| D tto (Engl sl) Fasc 1-14 @ /12/ each | 10 | 8 |
| D tto I dex | 1 | 0 |
| Tar kh ı F ruz Shal ı of Z yau d d n Barnı (Text) Fasc 1-7 @ /6/ each | 2 | 10 |
| Tar kh ı F ruzshahı of Shams ı S raj Aif (Text) Fasc 1 6 @ /6/ each | 2 | 4 |
| Ten Anc ent Arab c Poems Fasc 1 2 @ 1/8/ each | 3 | 0 |
| W s o Ram n (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Zafarnamah Vol I Fasc 1 9 Vol II Fasc 1 8 @ /6/ each | 6 | 6 |
| Tuzuk ı Jahang r (Eng ) Fasc 1 | 0 | 12 |

## ASIATIC SOCIETY S PUBLICATIONS

| | | | |
|---|---|---|---|
| 1 | ASIATIC RESEARCHES Vol VII Vols XI and XVII and Vols XIX and XX @ 10/ each | 50 | 0 |
| 2 | PROCEEDINGS of the As at c Society from 1865 to 1869 (incl ) @ /6/ per No and from 1870 to date @ /8/ per No | | |
| 3 | JOURNAL of the As at c Soc ety for 1843 (12) 1844 (12) 1845 (12) 1846 (5) 1847 (12) 1848 (12) 1866 (7) 1867 (6) 1868 (6) 1869 (8) 1870 (8) 1871 (7) 1872 (8) 1873 (8) 1874 (8) 1875 (7) 1876 (7) 1877 (8) 18 8 (8 18 9 (7) 1880 (8) 1881 (7) 1882 (6) 1883 (5) 1884 (6) 1885 (6) 1886 (8) 1887 (7) 1888 (7) 1889 (10) 1890 (11) 1891 (7) 1892 (8) 1893 (11) 1894 (8) 1895 (7) 1896 (8) 1897 (8) 1898 (8) 1899 (8) 1900 (7) & 1901 (7) @ 1/8 per No to Members and @ 2/ per No to Non Members | | |
| | *N B —The figures enclosed in brackets g ve the number of Nos in each Vol me* | | |
| 4 | Centenary Rev ew of the Researches of the Soc ety from 1784-1883 | 3 | 0 |
| | A sketch of the Turk language as spoken in Eastern Turk stan by R B Shaw (Extra No J A S B 1878) | 4 | 0 |
| | Theobald s Catalogue of Rept les in the Museum of the As at c Soc ety (Extra No J A S.B 1868) | 2 | 0 |
| | Catalogue of Mammals and B rds of Burmah by E Blyth (Extra No J A S B 1875) | 4 | 0 |
| | Introduct on to the Ma th l Language of North B har by G A Gr erson Part II Chrestomathy and Vocabulary (Extra No J A S B 1882) | 4 | 0 |
| 5 | An s ul Musharrah n | 3 | ( |
| 6 | Catalogue of Foss l Vertebrata | 3 | 0 |
| • | Catalogue of the L brary of the As at c Soc ety Bengal by W A Bion | 3 | 8 |
| 8 | Inayah a Commentary on the Hidayah Vols II and IV @ 16/ each | 32 | 0 |
| 9 | Jawamıu l ilm ır r yaı 168 pages w th 17 plates 4to Part I | 2 | 0 |
| 10 | Kh zanatu l ılm | 4 | 0 |
| 11 | Mahabharata Vols III and IV @ 20/ each | 40 | 0 |
| 12 | Moore and Hew tson s Descr pt ons of New Ind an Lep doptera Parts I III with 8 coloured Plates 4to @ 6/ each | 18 | 0 |
| 13 | Sharaya-ool Islam | 4 | 0 |
| 14 | T betan D ct onary by Csoma de Koros | 10 | 0 |
| 15 | D tto Grammar | 8 | 0 |
| 16 | Kaçm raçabdamṛta Parts I & II @ 1/8/ | 3 | 0 |
| 17 | A descriptive catalogue of the pa nt ngs statues &c n the rooms of the As at c Soc ety of Bengal by C R W lson | 1 | 0 |
| 18 | Memo r on maps il ustrat ng the Anc ent Geography of Kaśm r by M A Ste n PH D, Jl Extra No 2 of 1899 | 4 | 0 |

| | | |
|---|---|---|
| Not ces of Sanskr t Manuscr pts Fasc 1 29 @ 1/ each | 29 | 0 |
| Nepalese Buddhist Sanskrit L terature by Dr R L Mitra | 5 | 0 |

N B —All Cheques Money Orders &c must be made payable to the "Treasurer As atic Society" only

Books are supplied by V P P

20 11-02

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1033.



# GADĀDHARA PADDHATAU KĀLASĀRA

BY
GADĀDHARA RĀJAGURU
EDITED BY
SADĀÇIVA MIÇRA
OF PURĪ.

VOL. I, FASCICULUS V.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1903.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS LUZAC & CO,
46, GREAT RUSSELL STREET, LONDON, W C, AND MR OTTO
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock*

## BIBLIOTHECA INDICA

### *Sanskrit Series*

| Title | Rs | As |
|---|---|---|
| Advaita Brahma Siddhi (Text) Fasc 1-4 @ /6/ each | 1 | 8 |
| Advaitachinta Kaustubhe Fasc 1 | 0 | 6 |
| *Agni Purana (Text) Fasc 4-14 @ /6/ each | 4 | 2 |
| Aitareya Brahmana Vol I, Fasc 1-5 and Vol II, Fasc 1-5 Vol III, Fasc 1-5 Vol IV, Fasc 1 5 @ /6/ | 7 | 8 |
| Anu Bhasyam, (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Aphorisms of Sandilya (English) Fasc 1 | 0 | 12 |
| Astasahasrika Prajnaparamita (Text) Fasc 1 6 @ /6/ each | 2 | 4 |
| Açvavaidyaka, (Text Fasc 1-5 @ /6/ each | 1 | 14 |
| Avadana Kalpalata, (Sans and Tibetan) Vol I, Fasc 1-5, Vol II Fasc 1-5 @ 1/ each | 10 | 0 |
| *Bhamati, (Text) Fasc 4 8 @ /6/ each | 1 | 14 |
| Bhatta Dipika Vol I, Fasc 1-3 | 1 | 2 |
| Brhaddevata (Text) Fasc 1 4 @ /6/ each | 1 | 8 |
| Brhaddharma Purana (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Bodhicaryavatara of Ca tideva Fasc 1-2 | 0 | 12 |
| Catalogue of Sanskrit Books and MSS, Fasc 1-3 @ 2/ each | 6 | 0 |
| Çatapatha Brahmana Fasc 1-6 | 2 | 4 |
| Catasahasrika Prajnaparamita (Text) Fasc 1-4 @ /6/ each | 1 | 8 |
| *Caturvarga Chintamani (Text) Vols II, 1-25 III Part I, Fasc 1-18 Part II, Fasc 1-10 @ /6/ each | 19 | 14 |
| Catasahasrika prajnaparamita Part I Fasc 1-3 @ /6/ | 1 | 2 |
| Çlokavartika (English) Fasc 1-3 | 2 | 4 |
| *Çrauta Sutra of Apastamba (Text) Fasc 4 17 @ /6/ each | 5 | 4 |
| Ditto Çankhayana (Text) Vol I, Fasc 1-7, Vol II, Fasc 1-4 Vol III Fasc 1-4 @ /6 each | 5 | 10 |
| Çri Bhasyam (Text) Fasc 1 3 @ /6/ each | 1 | 2 |
| Dan Kriya Kaumudi Fasc 1 | 0 | 6 |
| Gadadhara Paddhati Kalasara Vol I Fasc 1 5. | 1 | 14 |
| Kala Madhava (Text Fasc 1-4 @ /6/ each | 1 | 8 |
| Kala Viveka Fasc 1-4 | 1 | 8 |
| Katantra (Text) Fasc 1 6 @ /12/ each | 4 | 8 |
| Katha Sarit Sagara (English) Fasc 1-14 @ /12/ each | 10 | 8 |
| Kurma Purana, (Text) Fasc 1-9 @ /6/ each | 3 | 6 |
| Lalita Vistara (English) Fasc 1-3 @ /12 each | 2 | 4 |
| Madana Parijata (Text) Fasc 1-11 @ /6/ each | 4 | 2 |
| Maha bhasya pradipodyota, (Text) Fasc 1-9 & Vol II, Fasc 1-7 @ /6 each | 6 | 0 |
| Manutika Sangraha, (Text) Fasc 1-3 @ /6 each | 1 | 2 |
| Markandeya Purana, (English) Fasc 1 6 @ /12 each | 4 | 8 |
| *Mimamsa Darçana, (Text) Fasc 7-19 @ /6/ each | 4 | 14 |
| Narada Smrti, (Text Fasc 1-3 @ /6/ | 1 | 2 |
| Nyayavartika (Text Fasc 1-5 @ /6 | 1 | 14 |
| *Nirukta, (Text) Vol III Fasc 1 6 Vol IV, Fasc 1-8 @ /6 each | 5 | 4 |
| Nityacarapaddhati Fasc 1-6 (Text) @ /6 | 2 | 4 |
| Nyayabindutika (Text | 0 | 10 |
| Nyaya Kusumanjali Prakarana Text Vol I, Fasc 1-6, Vol II, Fasc 1-3 @ /6/ each | 3 | 6 |
| Padumawati Fasc 1-4 @ 2 | 8 | 0 |

इति। तत् यति सम्भवे तत्र नादरणीयमित्येव परम्। किन्तु,—

राचौ श्राद्धं न कुर्वीत राचसी कीर्त्तिता हि सा।
सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते॥

इति मनूक्त्या रात्र्यादिषु श्राद्धारम्भः सर्वथा न [1]कार्य्यः। अत्रा-सम्भवपचा ये उक्तास्ते काम्यश्राद्धेषु नादेयाः। आवश्यककर्म्मणामेव गौणकालाभ्यनुज्ञानात्।

तथा च मण्डनाचार्य्याः,—

मुख्यकाले यदावश्यं कर्म्म कर्त्तुं न शक्यते।
गौणकालेऽपि तत्कार्य्यं गौणोऽप्येतादृशो मतः॥

इति। एतादृशो मुख्यसदृशः। तथा यत्र यत्र दिनद्वयापराह्न-व्याप्तौ पूर्व्वेद्युः श्राद्धं निर्णीतम्। तत्र केनचिन्निमित्तेन पूर्व्वेद्युरकरणे परेद्युरप्यनुष्ठेयम्। अङ्गलोपादरमङ्गवैगुण्यसहनमिति तिथिशेष-करणपचोऽयं काम्यनित्योभयसाधारणः।

तथाच, काम्यव्रतप्रसङ्गे माधवाचार्य्याः,—

मुख्यतिथ्यन्तराये तु तिथिशेषोऽपि गृह्यते[2]।

इति। यत्तु माधवाचार्य्यैराब्दिकपरित्यागे प्रत्यवायवाक्य-स्यादसम्भवे रात्रावपि तदारम्भः कार्य्यः इत्युक्तं तदस्मद्देशीयैः कदाचित्[3] नाचर्य्यते।

अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु।

इति याज्ञवल्क्योक्तेः, "रात्रेः पूर्व्वं यथाविधि। रात्रेरन्यत्र

(१) स्वीकार्य्यः। (२) गृह्यता॰। (३) कदाचिदपि।

कुर्व्वाण" इत्यादि मनूक्त्यादेश्च। ननु तर्हि आब्दिकलोपः प्रसज्येत इति चेत्, न। श्राद्धविघ्ने कालस्य विहितत्वात्।

तथाच मरीचिः,—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि।
एकादश्यान्तु कर्त्तव्यं कृष्णपक्षे विशेषत ॥

इति सर्व्वविघ्नोद्देशेनोक्ता पुनर्द्रव्याद्यसम्पत्तौ, स एव,—

श्राद्धविघ्ने समुत्पन्नेऽविज्ञाते च मृतेऽहनि।
कुर्य्यादन्नेन कृष्णायामेकादश्यां विधुक्षये ॥

विधुक्षये दर्शे। एतत्कृष्णैकादश्यामसम्भवे "दर्शे वापि मनीषिण", इति स्मृत्यन्तरात्।

कार्ष्णाजिनिर्व्यक्तमाह,—

आपन्नोऽप्याब्दिकं नैव कुर्य्यादामेन कर्हिचित्।
अन्नेन तदमायान्तु कृष्णे वा हरिवासरे ॥

हरिवासर एकादशी। तथा भार्य्यायां रजस्वलायामपि आब्दिकं पक्वान्नेनैव कार्य्यं, नामेन न हेम्ना वापि।

तथा च लौगाक्षिः,—

पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः।
अन्नेनैवाब्दिकं कुर्य्याद्धेम्ना वामेन न क्वचित् ॥

हारीतोऽपि,—श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम्।
अमावास्यादिनियतं माससम्वत्सरादृते ॥

मास मासिकं सम्वत्सरमाब्दिकं इत्यर्थः। एवमन्यान्यपि हेमामश्राद्धविधायकवचनानि आब्दिकेतरपराण्येव।

ननु,— आब्दिके समनुप्राप्ते यस्य भार्य्या रजस्वला।

पञ्चमेऽहनि तत्कार्य्यं न तत् कुर्य्यान्मृतेऽहनि॥

इत्युक्तेः का गतिरिति चेत्, उच्यते,

अपुत्रा तु यदा भार्य्या संप्राप्ते पत्युराब्दिके।

रजस्वला भवेत् सा तु कुर्य्यात्तत्पञ्चमेऽहनि॥

इति श्लोकगौतमोक्तिसमानार्थमेवेति बोध्यम्। केवलं चन्द्र-सूर्य्योपरागदिने आब्दिकपाते आमेन हेम्ना वा तच्छ्राद्धं कार्य्यम्।

तथाच गोभिलः,—

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम्।

अन्नेनासम्भवे हेम्ना कुर्य्यादामेन वा सुतः॥

दर्शे रविग्रहणे तत्पूर्व्वयामचतुष्के पाकाभावादन्नासम्भवा-दामेन हेम्ना वा श्राद्धकरणं, मुक्त्यनन्तरं श्राद्धकालसम्भवे पक्वान्नेनैव तत्करणं स्वतःसिद्धमेव इत्यभिप्रायः। चन्द्रग्रहणे तु ग्रहणात् पूर्व्वं पौर्णमास्यां कदाचित् श्राद्धकालसम्भवे पक्वान्नेनैव, कदाचिदसम्भवे तु तत्रापि हेम्नामेन वाब्दिकश्राद्धम्।

तथा च बौधायनः,—

अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि।

हेमश्राद्धं संग्रहे च द्विजः शूद्रः सदाचरेत्॥ इति।

शातातपोऽपि,—

आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा।

आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात् सदैव हि॥

एवमादिवाक्यानि विश्वनाथमिश्रादिभिरपैव लिखितानि एवं

यस्तास्तमिते चन्द्रे यावत् स्यान्नोदयस्तच नाश्नीयादित्यशननिषेधाद्-
चापि ब्राह्मणासम्भवेन हेम्नामेन वा कुर्य्यादिति स्पष्टमुक्तम्। श्राद्धा-
नन्तरं प्रतिपत्तिकर्म्मणः स्वभोजनस्याप्यभावादित्यलमतिविस्तरेण।

आमादिलक्षणमाह वशिष्ठः,—

शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते।

आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम्॥

अशौचेन विघ्ने तु अशौचगतदिन एवाब्दिकम्।

तथा च ऋष्यशृङ्गः,—

आब्दिके चैव संप्राप्ते अशौचं जायते यदि।

अशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते॥

तथा— शुचिभूतेन दातव्यं या तिथिः प्रतिपद्यते।

सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचन॥

अशौचानन्तरदिनेऽपि विघ्ने तदुत्तरदर्शे आब्दिककरणम्।

तदाह गोभिलः,—

देये प्रत्याब्दिके श्राद्धे त्वन्तरा मृतसूतके।

अशौचानन्तरं कुर्य्यात् तन्मासेन्दुक्षयेऽपि वा॥

इन्दुक्षयेऽमावास्यायाम्। देयेऽवश्यकर्त्तव्ये। अशौचान्तदिने
मलमासपाते तु मलमासानन्तरभाविदर्श एवाब्दिकम्।

मलमासमृतानान्तु श्राद्धं यत्प्रतिवत्सरम्।

मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचन॥

इति पैठीनसिकोक्तेर्यो यस्मिन्मलमासे मृतः कालान्तरे तस्मिन्नेव
मलमासे सति तस्यैव तत्र श्राद्धमिति। मलमासप्रकरणे सम्यग्वि-

चारितत्वात्। शूद्रेण तु आब्दिकमपि आमेनैव हेम्नैव वा कार्य्यं, न सर्व्वथा पक्वान्नेन।

तथा च गालवः,—

तीर्थेऽन्नग्रावापदि च देशभङ्गे रजस्यपि।
हेमश्राद्धं द्विजः कुर्य्याच्छूद्रः कुर्य्यात् सदैव हि॥

शातातपादिवचनमप्युक्तम्। शूद्रः सदैव हीत्युक्तेः सुतरां शूद्रस्य दर्शादिश्राद्धं वक्ष्यमाणप्रेतश्राद्धानि च हेम्नामेन वा। हेमामयोर्विकल्पो व्रीहियववत् समबलः।

ननु,— आमश्राद्धन्तु पूर्व्वाह्न एकोद्दिष्टन्तु मध्यमे।
पार्व्वणञ्चापराह्ने तु प्रातर्वृद्धिनिमित्तकम्॥

इति शातातपोक्तेरपराह्णं वाधित्वा पूर्व्वाह्न एव आमश्राद्धं विहितमिति चेन्न। एवमादिवाक्यानां कल्पतरुप्रभृतिष्वनादृतत्वे-नानुष्ठानलक्षणाप्रामाण्यात्, इति बहवः। वस्तुतस्तु प्रायश्चित्त-दानादौ आमद्रव्यकवैष्णवश्राद्धविषयत्वेनास्य वाक्यस्योपपत्तिः। दानस्य दैवत्वेन पूर्व्वाह्न एव कर्त्तव्यत्वे तदङ्गस्य श्राद्धस्य सुतरां तत्र विधा-नात्। अन्यत्राप्येवमूह्यम्। एवञ्च सति कालादर्शे महता प्रबन्धे-नास्मिन् विषये यल्लिखितं तत्सर्व्वं निरस्तमेव। तथा च आमश्राद्धं यत्र यत्र प्रसक्तं स्यात् तत्र तत्रापराह्णादिकाल एव कार्य्यं न सर्व्वथा पूर्व्वाह्ने। शूद्रस्य तु सुतरामपराह्णादावेव। हेमश्राद्धन्तु प्रत्येकं पितृनुद्दिश्य हिरण्योत्सर्गमात्रम्। तत्रेतिकर्त्तव्यतायाः कैरप्य-लिखनात्।

इत्यामश्राद्धनिरूपणम्।

अथाज्ञातमृताहादिनिर्णयः ।

प्रवासमृतस्य मासाद्यज्ञाने बृहस्पतिः,—

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु ।
तदा ह्याषाढ़के मासि माघे वा तद्दिनं भवेत् ॥
न ज्ञायते मृताहश्चेत् प्रोषिते संस्थिते सति ।
मासश्चेदथ विज्ञातस्तद्दर्शे च तयाब्दिकम् ॥
दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानमासदिवसौ ग्राह्यौ पूर्व्वोक्तया दिशा ॥

भविष्ये,— दिनमेव तु जानाति मासं नैव तु यो नरः ।
मार्गशीर्षे तथा भाद्रे माघे वा तद्दिनं भवेत् ॥

पूर्व्वोक्तया दिशेति मृताहाद्यज्ञाने यथा व्यवस्था तथाचापीत्यर्थः । तेन प्रस्थानमासदिनज्ञाने तद्ग्रहणं । प्रस्थानमासमात्रज्ञाने तन्मासीयदर्शस्य ग्रहणम् । प्रस्थानतिथिमात्रज्ञाने आषाढाद्यन्यतममासेषु तस्यास्तिथेर्ग्रहणम् । मरणमासमरणदिनप्रस्थानमासप्रस्थानदिनानां सर्व्वेषामज्ञाने तु श्रवणदिने तदसम्भवे श्रवणमाससम्बन्धिदर्शे श्राद्धम् । तदाह प्रचेताः,-"अपरिज्ञाते मृतेऽमावास्यायां श्रवणदिवसे वेति" । मृते मृताहे ।

नैमित्तिकश्राद्धे मघायोगेऽपि [१]पिण्डदानम्,—

ऋते नैमित्तिकं काम्यं श्राद्धं यस्तु मघेऽहनि ।
दद्यात्तज्ज्येष्ठपुत्रस्य नाशः स्यादिति निश्चितम् ॥

इति कार्ष्णाजिनुक्तेः, श्राद्धपदमत्र पिण्डदानपरम् ।

(१) मघायोगे पिण्डदानं ।

स्तते नैमित्तकं काम्यं श्राद्धं यस्तु मघेऽहनि।
दद्यात् पिण्डञ्च तस्यैव ज्येष्ठपुत्रो विनश्यति॥

इति स्मृत्यन्तरात्। इति नैमित्तिकत्वेन सूचितस्याब्दिकस्य एकोद्दिष्टपार्वणभेदेन कालौ निरूपितौ। अयमापराह्निकश्राद्धकालोऽमावास्याव्यतिरिक्तसर्वपार्वणश्राद्धेषु ज्ञेयः। सपिण्डीकरणान्तप्रेतश्राद्धानां वृद्धिश्राद्धस्य नैमित्तिकत्वेऽपि पृथगुपादानान्नात्र तल्लिखितम्।

अथ काम्यश्राद्धकालाः।

विष्णुः,—आदित्यसंक्रमणं विषुवद्द्वयं विशेषेणायनद्वयं व्यतीपातो जन्मर्क्षमभ्युदयश्च,—

एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते॥

विषुवतौ, मेषतुलासंक्रान्तौ, अयनद्वयं, मकरकर्कटसंक्रान्तौ, रविसंक्रान्तिपदेनैतासां[१] प्राप्तावपि पुनर्ग्रहणं फलातिशयार्थम्। इदं संक्रान्तिश्राद्धं यद्दिने दानं भवेत्तद्दिन एव, श्राद्धस्य दानत्वनिर्णयात्।

अथ रव्यादिवारेषु बृहस्पतिः,—

आरोग्यञ्चैव सौभाग्यं शत्रूणाञ्चपराजयः।
सर्वान् कामान् प्रियां विद्यां धनमायुर्यथाक्रमम्॥
सूर्यादिषु वारेष्वेतच्छ्राद्धकृल्लभते फलम्।
ववादिकरणेष्वेवं श्राद्धकृल्लभते च्चणम्[२]॥

---

(१) रविसंक्रान्तिपदेनैव तासां। (२) फलं।

तथा प्रतिपत्प्रभृतिषु याज्ञवल्क्यः,—

कन्याः कन्यावेदिनश्च पशून्द्रव्यं सुतानपि ।
द्यूतं कृषिञ्च वाणिज्यं द्विशफैकशफांस्तथा ॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरौप्ये सकूप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्द्दशीम् ।
शस्त्रेण तु हता ये वै तेषां तत्र प्रदीयते ॥

कन्यावेदिनो, जामातॄन्, पशवोऽजादयस्तद्रूपं द्रव्यं, द्यूतं, द्यूतजयमित्यर्थः । कृषिवाणिज्ये तयोर्लाभौ । द्विशफाः, गवादयः । एकशफाः, अश्वादयः । ब्रह्मवर्चस्विनः ।

वृत्ताध्ययनसम्पत्तिरिष्यते ब्रह्मवर्चसम् ।

इत्युक्ततेजोयुक्तान् । सकूप्ये, ताम्रसीसकादिसहिते, स्वर्णरूप्ये । कामान् काम्यन्ते ये ते कामा इति व्युत्पत्त्या स्वर्गपुत्रपश्वादीन् एतानि चतुर्द्दशफलानि कृष्णपक्षप्रतिपदादिष्विति विज्ञानेश्वराः । "कृष्णः पित्र्ये विशिष्यते" इति स्मृतेरिति तेषामभिप्रायः । चतुर्द्दशीनिषेधविचारो महालये लेख्यः ।

अथ कृत्तिकादिनक्षत्रेषु याज्ञवल्क्यः,—

स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ।
पुत्रान् श्रैष्ठ्यञ्च सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥
प्रवृत्तचक्रताञ्चैव वाणिज्यप्रभृतीनपि ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥
धनं वेदान् भिषक्सिद्धिं कुप्यङ्गामप्यजाविकम् ।

अथानायुस विधिवद्यो वा श्राद्धं प्रयच्छति ॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान्।
आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥

स्वर्गो निरतिशयसुखं, तेजः आत्मशक्त्यतिशयः, शौर्यं निर्भयत्वम्, क्षेत्रं शौख्यादिफलवत्, बलं शरीरदार्ढ्यं, श्रैष्ठ्यं ज्ञातिषु, ज्ञातिश्रैष्ठ्यमिति पूर्वोक्तेः। सौभाग्यं, जनप्रियत्वम्, मुख्यता अग्रणीत्वं, प्रवृत्तचक्रता प्रवृत्तं चक्रं मण्डलं येन स तथोक्तस्य भावस्तत्ता अप्रतिहताज्ञेत्यर्थः। परमागतिः ब्रह्मलोकप्राप्तिः।

अथ योगेषु मरीचिः,—

कृत्तिकादिषु ऋक्षेषु श्राद्धे यत्फलमीरितम्।
विष्कुम्भादिषु योगेषु तदेव फलमीरितम् ॥ इति।
ववादिकरणे श्राद्धफलं रव्यादिवारवत्, तत्रैवोक्तम्।

अथ मन्वादिश्राद्धान्यपि काम्यानि, भविष्यमात्स्ययोः,—

अश्वयुक्-शुक्लनवमी कार्त्तिकी द्वादशी शिता[१]।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी सिता।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा।
कार्त्तिकी फाल्गुनी ज्यैष्ठी चैत्री पञ्चदशीति च ॥
मन्वन्तरादयस्त्वेता दत्तस्याक्षयहेतवः।

---

(१) सिता।

अत्र द्वादशी सितेति शितशब्दस्तृतीयायामप्यन्वेति। द्वादशी सितेति दशम्यामिति। तथा चामावास्याष्टमीव्यतिरिक्ताद्याः तिथयः शुक्लाः, पुनः पुनस्तथाशब्दोपादानात्। यत्त्वत्र अश्वयुक्शुक्लनवमी-त्यादिवृद्धगर्गोक्तौ तिथिभेद उक्तः, स सङ्कल्पान्तरविषयः।

मन्वादिषु फलं मात्स्ये,—

कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु।
हायनादिद्विसाहस्रं पितॄणां तृप्तिमादरात्(१) ॥

भारते,— या मन्वाद्या युगाद्याश्च तिथयस्तासु मानवः।
स्नात्वा हुत्वा च दत्वा च जप्त्वानन्तफलं लभेत् ॥

काम्येषु युगादीनां ग्रहणेऽपि तत्र श्राद्धानां नित्यत्वमपीति उभयात्मकत्वात् विचारो नित्यप्रकरणे लेख्यः। तथा वक्ष्यमाणेषु अर्द्धोदयाद्यलभ्ययोगेषु।

तथा,— आकामावेषु यच्छ्राद्धं यच्चदानं यथाविधि।
उपवासादिकं यच्च तदनन्तफलं स्मृतम् ॥

इत्यादीनि बहूनि काम्यश्राद्धानि तत्र तत्र द्रष्टव्यानि, विस्तरभयान्न लिख्यन्ते।

अथ वृद्धिश्राद्धं, तच्च नैमित्तिकम्।

नैमित्तिकमतो वक्ष्ये श्राद्धमभ्युदयात्मकम्।

इति मार्कण्डेयपुराणोक्तेः। तच्चावश्यकम्।

तथाच भरद्वाजः,—

वृद्धिश्राद्धमकृत्वा यो वृद्धिकर्म समाचरेत्।

---

(१) मावहेत्।

वृद्धिर्नो वर्द्धते तस्य स्वयञ्च नरकं व्रजेत् ॥

भारतेऽपि,—

अष्टका ये चाभ्युदयास्तीर्थयात्रोपपत्तयः ।

पितॄणामतिरेकोऽयं मासिकार्थाद् ध्रुवः स्मृतः ॥ इति ।

मासिकार्थाद्दर्शश्राद्धादित्यर्थः । एतान्यावश्यकानीत्यर्थः । वृद्धिः पुत्रजन्मादिशुभं तत्र श्राद्धमिति छन्दोगपरिशिष्टविष्णुपुराणाद्युक्तश्रौतस्मार्त्तवृत्तिविषयम् ।

तथाच छन्दोगपरिशिष्टे,—

कर्मादिषु च सर्वेषु मातरः सगणाधिपाः ।

पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

पूजयन्ति अभ्युदयसाधनेन प्रीणयन्तीति पूजाफलोक्तिः । पूजास्थानतदुपकरणानि तत्रैवाह,—

प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु ।

अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥

तत्र प्रतिमादिपक्षे स्फटिकादिनिर्मितत्वं, शुभ्रपदोक्तिः । समाचारस्तु अक्षतपुञ्जपक्ष एव । तथा,—

कुड्यलग्नां वसोर्द्धारां सप्तवारान् घृतेन तु ।

कारयेत् पञ्चवारान् वा नातिनीचां न चोच्छ्रिताम् ॥

आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।

षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥

तथा,— असकृद्यानि कर्माणि क्रियेरन् कर्मकारिणा ।

प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धकर्म च ॥

एतदेव तत्र विवृणोति,—

आधानहोमयोश्चैव वैश्वदेवे तथैव च ।
वलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेत् श्राद्धमेतेषु न पृथक् पृथक् ॥

अतएव सोमयागे तु पुनः पुनः प्रयोगे मातृपूजादिकं भवत्येव । नवयज्ञोऽत्र आग्रहायणापरनामिका नवान्नेष्टिः ।

कर्मादिष्वित्यस्यापवादस्तत्रैव,—

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्तौ जातकर्म प्रोषिता गतकर्मसु ॥

सोष्यन्ती आसन्नप्रसवायाः सुखप्रसवार्थं विहितहोमः ।

विवाहादिः कर्मगणो य उक्तो
गर्भाधानं शुश्रुम यस्य चान्ते ।
विवाहादावेकमेवात्र कुर्यात्
श्राद्धं नादौ कर्मणः कर्मणः स्यात् ॥

प्रदोषे श्राद्धमेकं स्याद्गोनिष्कालप्रवेशयोः, ।
न श्राद्धं युज्यते कर्त्तुं प्रथमे पुष्टिकर्मणि ॥
हलाभियोगादिषु तु षट्सु कुर्यात् पृथक् पृथक् ॥
प्रतिप्रयोगमन्येषामादावेकन्तु कारयेत् ।
वृहत्पत्रक्षुद्रपशुस्वस्त्यर्थं परिविश्न[1]तोः ॥
सूर्येन्दोः कर्मणी ये तु तयोः श्राद्धं न विद्यते ।

(१) स्व ।

न दद्यादग्निनैकेन विषमदृष्टकर्मणि ॥
क्षमिदष्टचिकित्सायां न वै शेषेषु विद्यते।
मातृपूजायामपि[1] गणकर्मण्यपवादस्तत्रैव,—
गणशः क्रियमाणे तु मातृणां पूजनं सकृत्।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥
यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः।
ब्राह्मे,— कर्मण्यथाभ्युदयिके माङ्गल्यवति शोभने ॥
जन्मन्यथोपनयने विवाहे पुत्रकस्य वा।
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥
विष्णुपुराणे,—
कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः।
नामकर्मणि बालानां चूडाकर्मादिकं तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही ॥
चूड़ादिकं इत्यादिशब्दस्य संस्कारमात्रोपलक्षणत्वाद्बहिर्निष्क्रम-
णान्नप्राशनादिष्वपि वृद्धिश्राद्धं।
तथा,—
यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥
इत्यत्र यज्ञशब्दोपादानात् महादानादावपि वृद्धिश्राद्धं कार्य्यं।

---

(१) मातृपूजाया अपि।

एवञ्च,— नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ।

इति शातातपोक्तौ वैदिककर्मपदेन सामान्यविधिः स्पष्टः, संह्रियेत विशेषत इति न्यायात्, ।

पुरोडाशं चतुर्द्धा करोति, आग्नेयं चतुर्द्धा करोति, इति उपसंहारवच्छन्दोगपरिशिष्टादिगणितवैदिककर्मपरं बोध्यम् । ननु छन्दोगपरिशिष्टादौ "तथातो गोभिलोक्ताना" मित्यभिधानात्,

गोभिलोक्तगृह्यमात्रे वृद्धिश्राद्धं विधीयते ।

इति श्राद्धादिष्वपि तदुक्तेः । प्रसङ्गान्निषेधो न गृह्यान्तरकर्मणीति चेन्न, शाखान्तराधिकरणन्यायेन गृह्यान्तरकर्मण्यपि श्राद्धविधिनिषेधप्रवृत्तेः ।

केवलं तु,—

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

इति तदुक्तेः । षड्भ्यः पितृभ्यः इत्यादीनां गृह्यान्तरकर्मणि न प्रवृत्तिः । तदुपरिष्टात् स्फुटं भविष्यति । एवं यथाश्रुतार्थावस्थितौ यानि कर्माणि विधिवशेनार्थवशेन वा एकस्मिन् दिने क्रियन्ते । आधानं सोमश्च, यदोत्सृज्य क्रियमाणं जातकर्मादि, तत्र प्रतिकर्ममातृपूजादिनान्दीमुखश्राद्धान्तकर्मणामारम्भाधार:[१] संगच्छत एव । अत एवोत्कर्ष्यैकदिनक्रियमाणेषु कर्मसु तन्त्र न्यायेन सकृत्करणमिति यत्प्राचीनैरपि कैश्चिल्लिखितं तत् कैरपि नाद्रियते ।

तत्र कर्त्तृनिरूपणम्,—

---

(१) धारम्याधारः ।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु ।

पिण्डानोद्वहनात्तेषां तस्याभावेऽपि तत्क्रमात् ॥ इति ।

आ उद्वहनादित्यत्राङ्गीऽभिविध्यर्थता, कन्यापुत्रविवाहेष्विति विष्णुपुराणोक्तेः । तथाच विवाहमभिव्याप्येत्यर्थः ।

तत्र,—नान्दीश्राद्धविधिं कुर्यादाद्ये पाणिग्रहे बुधः ।

अत ऊर्द्धं सुतः कुर्यात् स्वयमेव तु नान्दिकम् ॥ इति स्मृतेः ।

सुतसंस्कारकर्मस्वित्युक्तेश्च पुत्रस्य संस्काररूपप्रथमविवाह एव पिता कुर्यात् । द्वितीयादिविवाहेषु पुत्रः स्वयमेव, जीवत्पितृक-श्राद्धविशेषाधिकारप्रतिपादकवक्ष्यमाणहारीतोक्तेः । पितरि जीव-त्यपि पितामहादीनां नान्दीश्राद्धं कुर्यादिति सिद्धं। एवं पुत्र-मातामहादीनां द्वितीयादिविवाहे नान्दीमुखश्राद्धमितिच सिद्धं। तत्र परिशिष्टं वाक्यं वक्ष्यते । एवं सति स्वपितृभ्य इत्यत्र स्वशब्देन सुतमातामहादिव्यावृत्तिः तस्य पितुरभावे तत्क्रमात् संस्कार्यपुत्र-दुहित्रादिक्रमात् संस्कार्यपित्रादिभ्यो मात्रादिभ्योऽपि दद्या-दित्यर्थः । अतएव,

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।

सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥

इति लघुहारीतोक्तेर्भ्रात्रादेः कन्याप्रदत्वे उपनयनकर्त्तृत्वे वा विवाहोपनयनाद्यर्थं संस्कार्यकन्यापुत्रादिपितृमातृसपिण्डीकरणं कृत्वा संस्कार्यपित्रादिभ्यो दद्यादाभ्युदयिकश्राद्धमिति गम्यते । तस्मात् पितुरुपरमे संस्कार्यपित्रादिभ्य एवाभ्युदयिकं श्राद्धं दद्यादितिसिद्धं। वायवीये,—

अन्वष्टकासु वृद्धौ च गयायां च मृतेऽहनि ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥

गौतमशातातपौ,—

मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥
त्रिष्वप्येतेषु युग्मांस्तु भोजयेत् ब्राह्मणान् शुचिः ।

तथाच, नवपुरुषात्मकमाभ्युदयिकं श्राद्धम् । एवं सति षड्भ्यः पितृभ्य इत्युक्तिश्छान्दोग्यविषयैवेति ज्ञेयं ।

न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते ।
स्वभर्त्तृपितृमातृभ्यस्तृप्तिरासां यतः स्मृता ॥

इति छन्दोगपरिशिष्टोक्त्यन्तरेण तत्स्त्रीणां साम्वत्सरिकश्राद्धं विना श्राद्धान्तराभावात् । अत्र पितृपितामहप्रपितामहानां नान्दीमुखनामकता । तथाच, कात्यायनसूत्रम्,- "नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तां इति न स्वधां प्रयुञ्जीत युग्मानाशये"दिति । अत्र पितर इत्यादीनामुपलक्षणत्वान्मातृवर्गस्य मातामहवर्गस्य च नान्दीमुखनामकत्वम् । "अथ नान्दीमुखेभ्यश्च मातृभ्यः श्राद्धमुत्तमं" इति मात्स्योक्तेः, "नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च प्रीयन्ता" इति गोभिलसूत्रञ्च ।

यत्तु, ब्राह्ममात्स्ययोः,—

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयोऽप्यश्रुमुखाश्चैते पितरः परिकीर्त्तिताः ॥

तेभ्यः पूर्व्वतरा ये च प्रजावन्तः सुखैधिताः ।
ते तु नान्दीमुखा नान्दीसमृद्धिरिति भण्यते ॥
ये स्युः पितामहादूर्द्ध्वं ये स्युर्नान्दीमुखास्त्विति ।
प्रसन्नमुखसंज्ञास्तु माङ्गल्यीया यतस्तु ते ।

इति यत् वृद्धपितामहादीनां नान्दीमुखत्वमुक्तम् । तत्पित्रादिषु त्रिषु जीवत्सु वृद्धप्रपितामहादित्रयाणां आभ्युदयिकश्राद्धं कार्य्यमित्येवं परं ज्ञेयमिति कल्पतरुकाराः । मातृपूजावसोर्द्धारायुष्यमन्त्रजपनान्दीमुखश्राद्धानां परस्परसमन्वयेन नान्दीमुखश्राद्धस्यावश्यकत्वात्, इति नान्दीमुखश्राद्धस्य मातृपूजापूर्व्वकत्वं छन्दोगपरिशिष्टादौ व्यक्तमेव । अतएवात्र विप्रमिश्रैः पित्रादित्रिके जीवति न नान्दीमुखश्राद्धं केवलं मातृपूजामात्रं कार्य्यमिति यल्लिखितं तद्धरापास्तं । त्रिषु जीवत्सु विष्णुना पार्व्वणनिषेधात् विकल्पितत्वाच्च वृद्धिश्राद्धस्येति नारायणभाष्ये यल्लिखितं तदपि न रुचिरं ब्राह्म्यादिवाक्यस्य विशेषविधित्वेन कल्पतरुकारव्याख्यानादाचारविरोधाच्च। एवं मात्रादित्रये जीवति उपरितनपुरुषत्रयस्य श्राद्धं । एवं मातामहादित्रिकस्यापि । एवं च तत्र कस्यचिन्मरणे उपरितनपुरुषं प्रवेश्य श्राद्धं कार्य्यम् । तद्विषये, "पूर्व्वाह्णः काल" इति यदुक्तं, तत्र प्रथममुहूर्त्तादूर्द्ध्वं मुहूर्त्तचतुष्टयत्वमिति ज्ञेयम् । तच्छ्राद्धकालः शातातपीये,- "प्रातर्वृद्धिनिमित्तकं" इति पूर्व्वमुक्तः ।

मात्स्ये,— उत्सवानन्दसन्ताने यज्ञोद्वाहादिमङ्गले ।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ॥
ततो मातामहाश्च विश्वेदेवांस्तथैव च।

अत्र यद्यपि शातातपाद्युक्तविधिरस्ति। तथापि अशक्तौ पिण्ड-दानत्विरण्यदानब्राह्मणभोजनोत्सर्गाणां उक्तत्वात्, अष्टब्राह्मणभोज-नोत्सर्गाणां उक्तत्वाच्च अष्टब्राह्मणभोजनोत्सर्गमाचरन्ति शिष्टाः। आभ्युदयिकश्राद्धस्य नैमित्तिकत्वेऽपि सत्यौ नान्दीमुखे वसुरिति वक्ष्यमाणवाक्यात्सत्यवसुसंज्ञयोर्विश्वेदेवत्वं। अष्टब्राह्मणभोजनं कुत इति चेत्, उच्यते। त्रिष्वप्येतेष्वित्युक्तेरेकैकमेकैकस्य द्वौ द्वौ चीस्त्रीन् वा वृद्धौ फलभूयस्त्वमिति आश्वलायनसूत्रे द्वौ द्वाविति आभ्युदयिकश्राद्धविषयमिति कल्पतरुव्याख्यानादष्टपार्वणादावयुग्म-ब्राह्मणनियमादिति स्मृत्यन्तरात् पार्वणे श्राद्धे काम्ये आभ्युदयिके इत्यभिधानाच्च। मात्रादित्रिकस्य पित्रादित्रिकस्य मातामहादि-त्रिकस्य च श्राद्धस्थानेषु प्रत्येकं भोजनद्वयं भोजनद्वयं भोजनद्वय-मिति भोजनषट्कं विश्वेदेवानां स्थाने भोजनद्वयमिति अष्टभोज-नानि सिद्धानि। सम्भवे उक्तविधिना करणं समीचीनम्। नात्र तिथिद्वैधविचारावकाशः वृद्धिदिन एव तद्विधानात्।

> रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषतः।
> नैमित्तिकन्तु कुर्वीत स्नानं दानञ्च रात्रिषु॥
> यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने।
> दानान्येतानि शस्तानि निशि देवालये तथा॥

इति भविष्योक्ते रात्रौ विवाहे वृद्धिश्राद्धं प्राप्तमपि दिवैव समाचरन्ति। भविष्यद्विवाहस्य दिवसस्य निमित्तत्वाद्रात्रिप्रसङ्गा-भावात्, प्रोतद्वृद्धिनिमित्तकमिति कालविधानात् रात्रौ श्राद्धस्य निषेधत्वाच्च। इदं वृद्धिश्राद्धं यत्कर्मार्थं क्रियते तत्र दैवाद्विघ्नपाते

पुनर्यस्मिन् दिने विवाहादिकर्मकरणं, तद्दिने तदङ्गानां मातृ-पूजावसोर्धारायुष्यमन्त्रजपवृद्धिश्राद्धानां पुनः करणम्।

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः।

इति छन्दोगपरिशिष्टोक्तेः।

अथ सपिण्डीकरणविचारप्राप्तौ तस्यैकादशाहादिश्राद्धपूर्व-कलात् एकादशाहादिश्राद्धान्युच्यन्ते।

याज्ञवल्क्यवृद्धशातातपौ,—

मृतेऽहनि तु कर्त्तव्यं प्रतिमासञ्च[१] वत्सरम्।

प्रतिसम्वत्सरञ्चैवमाद्यमेकादशेऽहनि॥

अत्राहःशब्दस्य तिथिपरत्वेनैव मृततिथौ मासिकान्याब्दिकं च। आद्यश्राद्धं तु एकादशाह एव, तत्र सावनमासोक्तेः[२]। अत-एव त्रैपक्षिके च न तिथिद्वैधविचारावकाशः।

छन्दोगपरिशिष्टे,—

द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा।

सपिण्डीकरणञ्चैव श्राद्धान्येवन्तु षोड़श॥

अत्र षाण्मासिके ऊनषाण्मासिकौ न वार्षिके।

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।

न्यूनाः सम्वत्सरश्चैव स्यातां षाण्मासिके तदा॥

इति तदुक्तेः। षण्मासदयान्तक्रियमाणतया षाण्मासिक इति नारायणभाष्ये। षाण्मासिकयोः त्रिदिनन्यूनत्वात् वाक्यान्तरोक्तद्वि-दिनत्वपक्षौ नाद्रियेते।

---

(१) प्रतिमासं तु।    (२) सावनमासोक्तेः।

द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोड़श ॥

इति जातुकर्णेन,—

अर्वाक् सपिण्डीकरणात् कुर्याच्छ्राद्धानि षोड़श ।

इति पैठीनसिना,—

श्राद्धानि षोड़श कृत्वा नैव कुर्यात् सपिण्डनम् ।

इति गोभिलेनापि त्रैपक्षिकं प्रवेश्य सपिण्डीकरणं त्यक्त्वा षोड़शश्राद्धानि उक्तानि । यत्तु,—

द्वादशाहे त्रिपक्षे वा षण्मासे मासिकाब्दिके ।
श्राद्धानि षोड़शैतानि संकृतानि(१) मनीषिभिः ॥

इति व्यासोक्तौ द्वादशाहोपादानं तदेकादशाहे दैवादाद्यप्रेतैकोद्दिष्टश्राद्धकरणे बोध्यम् ।

एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भारत ।
द्वादशे वाह्नि कुर्वीत अनिन्द्ये त्वथवाहनि ॥

इति कौर्मोक्तेः । यच्च,—

ऊनषाण्मासिकं षष्ठे मास्याद्ये चोनमासिकम् ।
त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा ॥

इति गालवोक्तौ ऊनमासिकोपादानं तदेकादशाहस्य द्वादशाहस्य वा नामान्तरम् ।

मरणात् द्वादशाहे स्यान्मास्यूने चोनमासिकम् ।

---

(१) संस्कृतानि ।

इति गोभिलोक्तेः। एतत् कालादर्शेऽनुसन्धेयम्। अनयैव दिशा अन्यान्यपि वाक्यानि समाधेयानि।

सपिण्डीकरणादर्वाक् यानि श्राद्धानि षोड़श।
एकोद्दिष्टविधानेन कुर्यात् सर्वाणि तानि च॥
सपिण्डीकरणादूर्द्धं यदा कुर्यात्तदा पुनः।
प्रत्यब्दं यो यथा कुर्यात् तथा कुर्यात् स तान्यपि॥

इति पैठीनस्युक्तेः सपिण्डीकरणश्राद्धपूर्वश्राद्धानां पूर्वोक्तैकोद्दिष्टकालवत् कालव्यवस्था। साग्नेस्तु तद्दाहावध्येव त्रिपक्षान्तं सर्वकर्म कार्य्यम्।

तथा च जातुकर्ण्यः,—

ऊर्द्धं त्रिपक्षात् यच्छ्राद्धं मृताहन्येव तद्भवेत्।
अधस्तात्कारयेद्धीमान्[१] आहिताग्नेर्द्विजन्मनः॥

छन्दोगपरिशिष्टेऽपि,—

श्राद्धमग्निमतः कार्य्यं दाहादेकादशेऽहनि। इति।

अत्रिः,— प्रेतार्थं सूतकान्ते तु ब्राह्मणान् भोजयेद्दश।
आद्यश्राद्धनिमित्तेन चैकमेकादशेऽहनि॥

सत्यव्रतः,— एकादशेऽह्नि प्रातरुत्थाय प्रेतार्थमेकादशब्राह्मणानामन्त्र्य मध्याह्ने नानाभक्ष्यरसपानाद्यैः भोजयित्वा विधिवत् पिण्डदानं। यथा अग्निहोत्रं जुहोति यवागुं पचतीत्यत्र पाठक्रमादर्थक्रमो बलवत्तर-इति न्यायात् यवागुपाकानन्तरमग्निहोत्रहोमः तद्वदत्रापि श्राद्धानन्तरं दानं दत्त्वा दशदानपात्राणां भोजनमित्यर्थः। श्रीरामायणे

---

(१) कारयेद्दाहादाहिताग्निं।

लोहितो यस्तु वर्णेन शिरः पुच्छस्तु पाण्डरः ।
ताम्रः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

श्वेतः खुरविषाणाभ्यां इत्यधिकं वृहस्पतिराह ।

मात्स्यविष्णुधर्मोत्तरयोः,—

चरणाश्च मुखं पुच्छं श्वेतानि यस्य गोपतेः ।
लाक्षारससवर्णस्तु स नीलो वृष उच्यते ॥

नीलवृषाभावे अन्येऽपि वृषा देयाः । वह्निपुराणे,– "भाग्य-सौख्यप्रदः शुक्लः" इत्यादिना सर्ववर्णानामुक्तत्वात् । विधवायाः स्त्रियो मरणे वृषोत्सर्गः, न जीवत्पतिकायाः ।

यदि पुत्रवती नारी म्रियेत पत्युरग्रतः ।
वृषं नैवोत्सृजेत्तस्या यावत्तिष्ठति तत्पतिः ॥

इति गोभिलोक्तेः ।

अत्र पूर्वाह्णादिकालस्यानुक्तावपि सौकर्यार्थमादावुत्सृज्य श्राद्धं कुर्वन्ति । इति ।

अथ पुष्करविचारः ।

वराहसंहितायाम्,—

पुनर्वसूत्तराषाढाकृत्तिकोत्तरफाल्गुनी ।
पूर्वभाद्रविशाखे च षडेते चत्रपुष्कराः ॥
द्वितिया सप्तमी चैव द्वादशी तिथिरेव च ।
शनिर्भौमो रविश्चैव तिथिवाराः प्रकीर्त्तिताः ॥
हानिर्वा यदि वा वृद्धिर्भयं रोगोऽथवा भवेत् ।
मृतोऽपि निर्गुणो वापि शवो येषु गतेषु च ॥

त्रिपुष्करे त्रीन् गृह्णाति शवो द्वाभ्यां द्वयं तथा।
एकेन तु भवेद्रोगी[१] सूर्यहानिं च निर्दिशेत्॥
तस्मात् वारञ्च नक्षत्रञ्च तिथिं यत्नेन लक्षयेत्।

राजमार्त्तण्डे,—
त्रिगुणा स्यात्त्रिभि र्योगो द्वाभ्याञ्च द्विगुणो भवेत्।
एकेनैव भवेद्धानी रोगश्चैव प्रजायते॥

तथा,— त्रिपुष्करन्तु यद्वृत्तं सर्वत्र त्रिगुणी भवेत्।
शोको वा जायते तत्र त्रिगुणस्य न संशयः॥

अत्र शान्तिर्वराहपुराणाद्युक्तविधिना कार्य्या इति। तद्दिनेऽसम्भवे शीघ्रं शुभदिने कार्य्या।

द्वादशाहे ब्राह्मणभोजनं कुर्वन्ति। एकादशाहोक्तभोजनस्य तद्दिने प्रेतश्राद्धशेषस्य रात्रिपर्यन्तं सत्त्वेन करणासम्भवात्।

अग्नौ कृत्वा ततो विप्रान् भोजयेदपरेऽहनि।

इति पैठीनसिवचनेषु। अपरेऽहनि द्वादशाहे इति निबन्धकृतः।

अथ मासिकनिर्णयः।

मासिकानां प्रतिमासकर्त्तव्यत्वं प्रागुक्तं।

तत्र करणाशक्तौ मरीचिः,—
मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति।
द्वादशाहेन वा कुर्य्यादेकाहे द्वादशापि वा॥

मासि मासि इति मुख्य पक्षः। अपर्याप्तावसम्भवे मासद्वयान्तरं श्राद्धद्वयं। तत्राप्यशक्तौ द्वादशभिर्दिनैर्द्वादश श्राद्धानि। तद-

(१) भवेद्रोगी।

श्राद्धानन्तरमेव नानादानानि प्रतिपादितानि। तत्रादौ नग्नाच्छादनम्।

प्रेतस्याच्छादनार्थन्तु प्रथमं वाससी शुभे।
दत्वान्यानि च देयानि प्रेतकालोचितानि च॥

इति पैठीनस्युक्तेः। शुभे नवे। ततो मृतशय्यादानं भविष्योत्तरविधिना। विस्तरभयात् स न लिखितः।

स्मृतिः,— गोभूहिरण्यवासांसि दीपमन्नं जलं तिलाः।
शय्या प्रपानकं चैवं प्रेतदानानि वै दश॥

भविष्योत्तरविष्णुधर्मोत्तरयोः,—
वस्त्रयानाश्वगोभूमीशय्याच्छत्रासनानि च।
प्रेतकाले प्रशस्तानि दानान्यष्टौ विशेषतः॥

आग्नेये,— आसनं तैजसं पात्रं लवणं गन्धचन्दनम्।
धूपं दीपश्च ताम्बूलं लोहं रूप्यञ्च रत्नकम्॥
शौच्यादिनानाद्रव्याणि दत्वा स्यात् भुक्तिमुक्तिभाक्।

अन्यानि काष्ठपादुकादीनि स्कान्दादिषूक्तानि पद्धत्यनुसारेण देयानि। तानि विस्तरभयान्न लिखितानि। यदि दैवान्मरणदिने मृतादपञ्चकस्य दानाभावः तदा सर्वेषामादौ तत्पञ्चकदानं। एकादशाहश्राद्धमपि त्रिदण्डिसन्यासिनः पार्वणमेवेति प्राक्लिखितम्।

अथ वृषोत्सर्गः।

यमः,— एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः।
मुच्यते प्रेतलोकात् स स्वर्गलोकञ्च गच्छति॥

वह्निपुराणे,— ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ।

वृषोत्सर्गेण ते सर्वे गच्छन्ति परमां गतिम् ॥

तदकरणे प्रत्यवायोऽन्यत्र,—

एकादशाहे प्रेतस्य यदि नोत्सृज्यते वृषः ।

प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

श्रुतिरपि,— न करोति वृषोत्सर्गं सुतीर्थे वा जलाञ्जलिम् ।

न प्रयच्छति यः पुत्रः पितुरुच्चार एव सः ॥

एकादशाहे दैवादकरणे, आग्नेये,—

एकादशाहे प्रेतस्य यदि नोत्सृज्यते वृषः ।

मुच्यते प्रेतभावात्स षण्मासेऽप्याब्दिकादिषु ॥

तत्राप्यसामर्थ्ये, भविष्योत्तरे,—

कार्त्तिक्यामथवा माघ्यामयने वा युधिष्ठिर ।

चैत्र्यामथ तृतीयायां वैशाख्यां द्वादशेऽह्नि वा ॥

अत्र द्वादशाहोक्तिः ।

द्वादशाहे वृषोत्सर्गः कर्त्तव्यः क्षत्रियेण तु ।

इति वाक्यात् क्षत्रियविषय एवेति चेत्, न । द्वादशाहे क्षत्रियाशौचस्य सत्त्वात् । तर्हि तद्वचनस्य का गतिरिति चेत् । तस्य प्रामाण्ये क्षत्रियस्य दशाहाशौचपक्षाश्रयणादिति समाधेयम् ।

विष्णुस्मृतौ तु आश्वयुज्यां वा इत्युक्तम् ।

पुनर्धर्मः,—

एष्टव्या बहवः पुत्रास्तत्रैकोऽपि गयां व्रजेत् ।

यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

सम्भवे एकस्मिन्नपि दिने द्वादशश्राद्धानीत्यर्थः । एवं च मासिकापकर्षे तन्मध्ये तदन्तकालकर्त्तव्यत्वेन त्रैपक्षिकोनषाण्मासिकोनमाब्दान्तरिकसपिण्डीकरणापकर्षः सिध्यति ।

अथ मासिकेषु साग्निकैकाग्निनिरग्नीनां व्यवस्था । प्रथममासिकं साग्नेर्दाहावध्येव । ऊर्द्धं त्रिपक्षादिति पूर्वोक्तेः । निरग्निवदेकाग्नेरपि मरणावधि ।

एकाग्नेर्मरणादूर्द्धमशौचं श्राद्धमेव च ।
यस्य तु त्रयमग्नीनां तस्योर्द्धं दाहकर्मणः ॥

इति जातूकर्ण्योक्तेः । द्वितीयमासिकादिकं तु साग्नेरपि मृततिथिष्वेव । त्रैपक्षिके तु नैव मृततिथ्यादरः । पट्चत्वारिंशद्दिन एव तस्यानुष्ठानम् ।

तथाच कार्ष्णाजिनिः,—

ऊनान्यूनेषु मासेषु वर्द्धमाने(१) समेऽपि वा ।
त्रैपक्षिकं त्रिपक्षे स्यान्मृताहे त्वितराणि तु ॥

भविष्ये,— त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनन्तरम् ।

वृत्ते प्रवृत्ते ।

कात्यायनोऽपि,—

यत्र वा तत्र वा मासि षष्ठे षाण्मासिकं भवेत् ।
त्रैपक्षिकं त्रिपक्षे च पूर्णे स्यात्तदनन्तरम् ॥

यत्र वा तत्र वा इति शुद्धे मलिनेऽपि वा तदनन्तरं पट्चत्वारिंशदह्नीत्यर्थः ।

(१) विषमाहे ।

अथ षाण्मासिकम्। तत्पूर्वदिने ऊनषाण्मासिकम्।

तत्र पैठीनसिः,—

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वद्युरेव हि।

एकाहेन तु इति वचनमप्युक्तम्। अतएव प्रथमषण्मासाभ्यन्तरेऽधिमासपाते तु, अधिमासं गृहीत्वैव षष्ठमासपूर्वतिथावेव ऊनषाण्मासिकं कार्य्यम्, यत्र वा तत्र वा इति पूर्व्वोक्तेः।

अथ द्वितीयषाण्मासिकम्।

तस्य ऊनसाम्वत्सरिकमिति नामान्तरम्।

पूर्व्वद्युराब्दिकं श्राद्धं परेद्युः पुनराब्दिकम्।

इति शङ्खोक्तेः। एतत्षण्मासाभ्यन्तरेऽधिमासपाते सति त्रयोदशमासिकपूर्वतिथावेव ऊनसाम्वत्सरिकम्। "द्वादशमासाः सम्वत्सरः क्वचित्त्रयोदशमासाः सम्वत्सरः" इति श्रुतेः।

ननु अब्दमध्ये अधिमासपाते तत्र सर्वकर्मनिषेधात् तत्र मासिकं श्राद्धं न कार्य्यं, किं वा कुत्र वा कार्य्यं, इति सन्देहे, गभस्तिः,— एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।

तत् कार्यं पूर्वमासेऽपि कालाधिक्ये च धर्मतः॥

पूर्वमासे मलीम्लुचे।

विष्णुधर्मोत्तरे,—

सम्वत्सरस्य मध्ये तु यदि स्यादधिमासिकम्।

तदा त्रयोदशे मासि क्रिया प्रेतस्य वार्षिकी॥

भरद्वाजः,— अधिमासे तु यच्छ्राद्धं कुर्यात्तदधिमासिकम्। इति अधिमासविहितं श्राद्धं अधिमास एव कार्य्यम्।

मरीचिरपि,—

प्रतिमासं मृताहे च यच्छ्राद्धं प्रतिवत्सरम् ।
मासद्वयेऽपि कर्त्तव्यमन्यथा किल्विषी भवेत् ॥

द्वादशमासे अधिमासपाते द्वादशमासमृताहपूर्वदिने ऊनमास्यन्तरिकं कार्य्यम्, तस्य सपिण्डनपूर्वदिने विधानात्, सपिण्डनस्य च मलमासेऽपि विधानात् । तद्वाक्यं सपिण्डीकरणप्रस्तावे वाच्यम् ।

मासिकादीनां दैवादकरणे च्छ्यशृङ्गः,—

मासिकाब्दे तु सम्प्राप्ते यदि विघ्नः प्रजायते ।
मासेऽन्यस्मिन् तिथौ तस्मिन् कुर्यादन्तरितं तदा ॥

कण्वोऽपि,— नवश्राद्धं मासिकञ्च यद्यदन्तरितं भवेत् ।
तत्तदुत्तरसात्तन्त्व्यादनुष्ठेयं प्रचक्षते ॥

अन्तरितं अकृतं सातन्त्व्यात् समानतन्त्रत्वात् अकृतमासिकं उत्तरमासिकञ्च उत्तरमासमृताहे कार्य्यमित्यर्थः ।

अन्यत्र,—एकादशे नवश्राद्धे षण्मासे मासिकेऽपि वा ।
आब्दिके च त्रिपक्षे च श्राद्धेऽतीते कथञ्चन ॥
कुर्यात्तत्क्रमशो दर्शे यदा कार्यवशाद्बुधः ।
एकदैव समस्तं तत् सपिण्डीकरणान्तकम् ॥
समारभ्य विधानेन पक्वान्नेन समापनम् ।

अशौचेन विघ्ने तु अशौचानन्तरदिन एव कार्यं, इत्यशौचप्रस्ताव उक्तम् । प्रेतश्राद्धानां मध्ये एकस्य भ्रमादकरणे पश्चात्करणमेव । समकक्षाणां षोड़शश्राद्धानां एकतमाकरणे षोड़शानामपूर्वाणामनुदये प्रधानापूर्वस्य दर्शापूर्ववदसिद्धिः ।

न च, यथाक्रमेण पुत्रेण कार्या प्रेतक्रिया सदा।
पतितापतिता वापि एकोद्दिष्टविधानतः॥

इति जावाल्युक्तेः।

तथा,— व्युत्क्रमात् प्रेतश्राद्धानि यो नरो धर्ममोहितः।
ददाति नरकं याति पितृभिः सह शाश्वतम्॥

इति देवलोक्तेश्च, क्रमरूपाङ्गसिद्धौ कथमपूर्वोत्पत्तिरिति वाच्यम्। सर्वशक्त्यधिकरणे नित्यकर्मण्यङ्गानां यथाशक्त्यनुष्ठानस्य सिद्धान्तत्वात्।

तथाच छन्दोगपरिशिष्टे, सर्वकर्मसु दैवादन्यथाक्रियायां तस्मिन् कर्मणि सत्येव सुकरत्वे यत्कार्यं तदाह,—

[१]प्रवृत्तिमन्यथा कुर्यात् यदि मोहात् कथञ्चन।
यतः तदन्यथा जातं[२] तत एव समापयेत्॥

अन्यथाकृतेः तत्प्रयोगमध्ये लज्ञाने यत्कार्यं तत्तत्रैव,—

समाप्ते यदि जानीयान्मयैतदन्यथा कृतम्।
तावदेव पुनः कुर्यात् नावृत्तिः सर्वकर्मणः॥

नावृत्तिः न साङ्गप्रधानावृत्तिः। दैवात् प्रधानकर्मणो कृतौ, अङ्गस्याकृतौ च यत्कर्त्तव्यं, तत्तत्रैव,—

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः।
तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया॥

तद्वैगुण्यसमाधानार्थं विष्णुस्मरणम्। तथाच योगी याज्ञवल्क्यः,—

---

(१) प्रवृत्त। (२) भूतं।

आश्वलायनः,— "अथ सपिण्डीकरणं सम्पूर्णे सम्वत्सरे त्रिपक्षे वा यदहर्वा वृद्धिलमापद्यते" इति ।

अत एव शातातपः,—

अर्वाक् सम्वत्सराद्वृद्धौ सम्पूर्णे वत्सरेऽपि वा ।

पैठीनसिः,— "मृतस्य मासि मासि श्राद्धं कुर्यात् सम्वत्सरान्ते विसर्जनं नवमास्यं" इत्येके । विसर्जनं सपिण्डीकरणं नवमास्यं नवभिर्मासै निष्पाद्यमित्यर्थः । एवं सपिण्डीकरणस्य स्वातन्त्र्येणैव नव कालाः । यत्तु कल्पतरावुक्तं(१) उत्तरमासि वृद्धौ निश्चितायां पिण्डपितृयज्ञानुरोधेन च सपिण्डीकरणापकर्ष इति । तत् वर्षान्तपक्षप्राधान्यप्रदर्शनार्थं न तु स्वातन्त्र्यनिवृत्त्यर्थं । एवं गयायात्रार्थं सपिण्डनापकर्ष.(२) ।

वृद्धिश्राद्धी गयां गच्छन् सद्यः कुर्यात् सपिण्डनम् ।

इति हेमाद्रिधृतवचनात् । अत्र गच्छन्नित्युक्त्वा दीपदानं गयाश्राद्धमिति वर्षमध्ये गयाश्राद्धस्य निषेधाच्च गयाश्राद्धं न कार्य्यम् । गयायात्रैव कर्त्तव्या इत्यस्मद्देशसमाचारः । देशविशेषे तु गयाश्राद्धमपि कुर्वन्ति ।

यत्तु,— आनन्त्यात् कुलधर्माणां पुंसां चैवायुषः क्षयात् ।

इति उशनोवचनं तद्देशविप्लवज्यौतिषिकावधारितायुःसमाप्तिविषयम् । तेषु कालेषु कर्त्तृविशेषा भविष्ये,—

सपिण्डीकरणं कुर्यात् यजमानस्त्वनग्निमान् ।

---

(१) कल्पतरुकारादावुक्तं ।

(२) सपिण्डीकरणापकर्षं ।

अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥

कर्त्तरि साग्निके तु कार्ष्णाजिनिः,—

सपिण्डीकरणं कुर्य्यात् पूर्ववच्चाग्निमान् सुतः ।

परतो दशरात्राच्चेत् कुहूरब्दोपरीतरः ॥

दशरात्रात्परतः कुहूश्चेत् एकादशाहे कुहूश्चेत् इत्यर्थः । इतरोऽनग्निः । अब्दोपरीत्यर्थः । "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति श्रुत्या साग्नेः पिण्डपितृयज्ञस्यावश्यकत्वात् ।

तथाच गालवः,—

सपिण्डीकरणात्मीते पैतृकं पदमास्थिते ।

आहिताग्नेः शनीवाल्यां पितृयज्ञः प्रवर्त्तते ॥

अत्र यत् सपिण्डीकरणमुक्तं, तदेकादशाहे दर्शपात एव बोध्यम् ।
तथाच भविष्ये,—

यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् भवेत् ।

द्वादशाहे तदा कार्य्यं सपिण्डीकरणं सुतैः ॥

यजमानः, कर्त्ता ।

छन्दोगपरिशिष्टे,—

एकादशाहं निर्वर्त्त्य पूर्वं दर्शाद्यथाविधि ।

निर्वर्त्त्य श्राद्धं कृत्वा द्वादशाहे सपिण्डनं कार्य्यम् ।

गोभिलः— साग्निकस्य यदा कर्त्ता प्रेतश्चानग्निमान् भवेत् ।

द्वादशाहे तदा कार्य्यं सपिण्डीकरणं सुतैः ॥

तथाच द्वादशाहे दर्शपाते तु साग्निकेनापि एकादशाहे एकादशाहश्राद्धं कृत्वा द्वादशाहे सपिण्डनं कार्य्यं, अत एव द्वादशैका-

अज्ञानात् यदि वा मोहात् प्रच्यवेदध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः ॥
तथाच क्रमरूपाङ्गसिद्धये विष्णुस्मरणं कार्यम् ।
ननु,— सपिण्डीकरणे वृत्ते पृथक्त्वेनोपपद्यते ।
पृथक्त्वे तु कृते पश्चात् पुनः कुर्यात्[१] सपिण्डनम् ॥
इति हारीतोक्त्या सपिण्डनानन्तरं पतितमासिककरणे पुनः सपिण्डनप्रसङ्ग[२] इति चेत्, न । एतद्वाक्यस्य प्राप्तपितृलोकप्रेतशास्त्रोल्लंघनपूर्वकपृथक्करणपरत्वात् ।
तथाच,—प्रेतानामिह सर्वेषां ये च मन्त्रैर्नियोजिताः ।
कृतार्थास्ते हि सम्वृत्ताः सपिण्डीकरणे कृते ॥
प्रेतभावात् विनिस्तीर्णाः प्राप्ताः पितृगणन्तु ते ।
यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् ॥
विधिघ्नस्तेन भवति पितृहा चोपजायते ।
इति शातातपोक्त्या पितृत्वप्राप्त्यनन्तरं सपिण्डीकरणं निषिद्धं, मासिके पतिते षोड़शश्राद्धासमस्त्या पितृलोकप्राप्त्यसिद्धौ पृथक्करणेऽपि न दोषः ।
नन्वेवं सति,— यस्य सम्वत्सरादर्वाक् सपिण्डीकरणं कृतम् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ॥
इत्यङ्गिरोवाक्यस्य का गतिरिति चेदुच्यते । मासिकं मासि मासि ब्राह्मणभोजनं न तु श्राद्धमित्यर्थः ।

---

(१) कार्य्यं । (२) सपिण्डीकरणप्रसङ्गः ।

तथाच भरद्वाजः,—

अर्वाक् सपिण्डीकरणं यस्य सम्वत्सरात् भवेत् ।
ब्राह्मणान् भोजयेन्नो वा प्रतिमासन्तु वत्सरम् ॥ इति ।

नोवेति श्राद्धनिषेधः, इति निबन्धकृतः । अत्र वाशब्द एवकारार्थः। पितृमरणाब्दे कर्त्तव्याकर्त्तव्यविचारोऽशौचप्रस्तावे लिखितः।

अथ सपिण्डीकरणविचारः ।

पाद्मे,— असपिण्डीकृतः प्रेतः क्षुत्तृषापरिपीड़ितः ।
आर्त्तो दुःखान्यवाप्नोति यातनां निरयेष्वपि ॥
ततः पितृत्वमापन्नः सर्वभोगसमन्वितः ।
अग्निष्वात्तादिमध्यस्थः प्राप्नोत्यम्बुत्वमुत्तमम् ।

विष्णुधर्मोत्तरे,—
कृते सपिण्डीकरणे नरः सम्वत्सरात् परम् ।
प्रेतदेहं समुत्सृज्य भोगदेहं प्रपद्यते ॥

अथ सपिण्डीकरणकालाः ।

शातातपः,—
सम्वत्सरे तु वै ज्ञेयं सपिण्डीकरणं त्विह ।
सपिण्डीकरणान्ता च ज्ञेया प्रेतक्रिया बुधैः ॥
सपिण्डीकरणश्राद्धं दैवपूर्वं नियोजयेत् । इति ।

तथाच, सपिण्डीकरणश्राद्धस्य पार्वणत्वमिति अमावास्येतर-पार्वणकालेनैव व्यवस्था ।

बौधायनः,—"अथ सम्वत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे वा तृतीये मासि षष्ठे वा एकादशे वा द्वादशाहे वा एकादशाहे वा" इति।

दशे वाह्नि इति वक्ष्यमाणहेमाद्र्युक्तौ एकादशाहस्य पश्चादुक्तिः।
एकादशाहं निर्वर्त्य इति स्फुटमुक्तं च।

अर्वाक् सपिण्डीकरणात् कुर्य्यात् श्राद्धानि षोडश।

इत्युक्तेः, एकादशाहे द्वादशापि वा इत्युक्तेश्च एकदिने षोडश-श्राद्धानां करणमविरुद्धमिति शूलपाण्यादयः।

द्वादशाहादिकालेषु सपिण्डीकरणेष्विमे।
साग्न्यनग्नित्वविधयः कर्त्तुरेव नियामकाः॥

इति स्मृतिसङ्ग्रहोक्तेः द्वादशैकादशाहयोरन्यतरस्मिन्नेव साग्निकः कर्त्ता कुर्य्यान्नान्यत्र। विस्तरस्तु कालादर्शे द्रष्टव्यः।

एवं च सति निरग्नेरपि कार्य्यवशात् द्वादशाहादिषु सपिण्डी-करणाचारोऽपि अविरुद्धः। एवं त्रिपक्षेऽपि बोध्यम्।

तथा च सुमन्तुः,—

प्रेतश्चेदाहिताग्निः स्यात् कर्त्तानग्निर्यदा भवेत्।
सपिण्डीकरणं तस्य कुर्य्यात्पक्षे तृतीयके॥

किन्तु निरग्निकेन साग्निकस्य पितुः सपिण्डीकरणं त्रिपक्ष एव कार्य्यं इत्यर्थः। यदा कदाचिदपि प्रमादात् साग्निको द्वादशाहे एकादशाहे वा सपिण्डनं न कुर्य्यात्, निरग्निरपि साग्निकस्य पितुः त्रिपक्षे सपिण्डनं न कुर्य्यात्। तत्सन्निहितोत्तरकाले कुर्य्यात्।

तथा च गोभिलः,—

द्वादशाहादिकालेषु प्रमादादननुष्ठितम्।
सपिण्डीकरणं कुर्य्यात् कालेषूत्तरभाविषु॥

दशाहमध्ये तु दर्शपाते पिण्डपितृयज्ञव्यतिरिक्तदर्शाङ्गसर्वश्रौत-

कर्म्मानुष्ठानम्। तथा मातृसपिण्डानन्तरमेव पिण्डपितृयज्ञकरणं, मातृदशाहमध्येऽप्येवं दर्शानुरोधेन अशौचप्रकरणे लिखितमनुमन्धेयम्। आहिताग्नेर्जीवत्पितृकत्वे तु पिण्डपितृयज्ञानारम्भपक्षस्यैवादृतत्वात् मातृसपिण्डनं अनाहिताग्निपुत्रवत् पूर्णेऽब्दे त्रिपचादौ वा कुर्य्यात्, पिण्डपितृयज्ञाभावात्। एतेन प्रमीतपितृकस्यापि साग्निकस्य विमात्रादेः स्वकाल एव सपिण्डनमिति सिद्धम्। पुत्रस्य साग्निकत्वे एकादशाहद्वादशाहयोर्दर्शपातेऽशौचेऽपि दर्शानुरोधेन सपिण्डनमित्यशौचप्रस्तावे लिखितं। अशौचानन्तरं दर्शपाते तु अशौचानन्तरमेव[१] सपिण्डनम् ज्येष्ठभ्रातुरनग्नित्वे यदा भार्य्यामरणादिना आधानानधिकारित्वे साग्निकेन कनिष्ठभ्रात्रापि पिण्डपितृयज्ञानुरोधेन एकादशाहादौ सपिण्डनं कार्य्यम्।

ज्येष्ठो भ्रातानग्निमांश्चेत् कनिष्ठः साग्निको भवेत्।
कनिष्ठेनैव कर्त्तव्या सपिण्डीकरणक्रिया॥ इति स्मृतेः।

एम्बिधे विषये कनिष्ठेनैव उत्तरषोड़शकं कार्य्यं इत्यर्थतो भवति, साग्निकस्य कर्त्तुर्द्वाविंशतिदिने दर्शपाते तु, द्वादशाहेन[२] वा कुर्य्यात्, इति वाक्यात् श्राद्धविवेककारा एकादशाहादिद्वादशसु दिनेषु व्यवस्थामाहुः। तथाच एकादशाहे एकादशाहश्राद्धं कृत्वा तद्दिन एव प्रथममासिकम्। द्वादशाहे त्रैपक्षिकं कृत्वा तत्रैव द्वितीयमासिकं। त्रयोदश-चतुर्दश-पञ्चदशाहेषु तृतीय-चतुर्थ-पञ्चममासिकानि। षोड़शाहे ऊनषाण्मासिकषष्ठमासिके। सप्तदशा-

(१) अशौचापगमदिने सपिण्डनमित्यपि पूर्व्वमुक्तं।

(२) द्वादशाहेऽपि।

एकादशोनविंशविंशैकविंशाहेषु सप्तमाष्टम-नवम-दशमैकादशमासिकानि। द्वाविंशाहे ऊनषाण्मासिकद्वादशमासिके कृत्वा तत्रैव सपिण्डनं, तिथिवृद्धौ तु द्वाविंशेऽह्नि ऊनसाम्वत्सरिकं त्रयोविंशेऽह्नि द्वादशमासिकसपिण्डने कार्य्ये। यदा त्वेतद्वर्षमध्येऽन्तिममासं त्यक्त्वा मध्येऽधिमासपातः, तदा तत्संख्यकदिने आधिमासिकश्राद्धं। ततः परदिनेष्वपरमासिकश्राद्धानि। द्वादशमासे त्वधिमासपाते द्वाविंशेऽह्नि आधिमासिकोनसाम्वत्सरिकद्वादशमासिकसपिण्डनानि कार्य्याणि। अयमाचारः सर्वशिष्टसम्मतः। यत्तु कैश्चिदत्र लिखितं वृद्धिनिमित्ताभ्युदयिकश्राद्धेऽपि अनयैव रीत्या एकादशाहमारभ्य द्वादशदिने सपिण्डनं कार्य्यम्, इति। तद्भ्रान्तिमूलम्। तत्त्रयोविंशेऽह्न्येव वृद्धौ द्वाविंशेऽह्न्येव सम्भवति, नान्यत्र। तथाहि, "यद्-हर्वा वृद्धिरापद्यते" इति गोभिलसूत्रे, "अथ सपिण्डीकरणं" इति आश्वलायनसूत्रे च यो वृद्धिनिमित्तः सपिण्डनापकर्षः उक्तः, तत्र, "प्रागावर्त्तनात् अह्नः कालं विद्यात्", इति गोभिलसूत्रान्तरेण, "पूर्वाह्णे दैवतं कर्म" इति शातातपोक्त्या च वृद्धिश्राद्धस्य पूर्वाह्णे विधानात्, सपिण्डनस्य पार्वणत्वेन अपराह्णे विधानात्, तयोः समाधानाय तत्सन्निहितपूर्वदिने एव सपिण्डनापकर्ष इति सर्वैर्निर्णीतमिति, द्वादशाहेन वा कुर्य्यादित्यस्यान्यत्र प्रवृत्तिरेव।

अत एव तथाचारो न दृश्यते वृद्धौ[1]। वृद्धिं निश्चित्य सपिण्डने कृते तत्र विप्लवशात् वृद्ध्यभावेऽपि पुनः सपिण्डनं कार्य्यम्।

---

[1] मध्य ...चारो न दृश्यते।

"प्रेतानामिह सर्वेषां" इति पूर्वोक्तशातातपोक्त्या पितृत्वप्राप्ति-मन्तरमेव सपिण्डनस्य निषिद्धत्वात्।

अथ द्वादशमासस्याधिमासत्वे सपिण्डनविचारः।

तत्र,— असंक्रान्ते हि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः।

इति हारीतादिबहुवचनैः पूर्वोक्तमलमासलिखितव्यवस्थायां[1] द्वादशमासस्याधिमासत्वेऽपि तदधिमासिकद्वादशमासविहितश्राद्ध-सपिण्डनानि कार्य्याण्येव। ईदृशे विषये शुद्धे त्रयोदशे मासि वार्षिकश्राद्धं पुनः कार्य्यम्।

> आब्दिकं प्रथमं यस्य प्रकुर्वीत मलीम्लुचे।
> त्रयोदशे तु सम्प्राप्ते कुर्वीत पुनराब्दिकम्॥

इति व्यासोक्तेः। एवं अपकृष्याब्दमध्ये सपिण्डने कृतेऽपि पूर्णेऽब्दे पुनराब्दिकश्राद्धकरणम्।

अत्र यत्तु गौडैः तिथितत्त्वाकारैः,—

> पूर्णे सम्वत्सरे श्राद्धं षोडशं परिकीर्त्तितम्।
> तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते॥

इति हेमाद्रिधृतवाक्यात् पूर्णेऽब्दे क्रियमाणात् श्राद्धात् यथोभयं निर्व्वहति, तथा अपकृष्टसपिण्डनादपि उभयोर्निर्वाहः, न पूर्णे वत्सरे आब्दिकान्तरं। गोभिलेन पूर्णेऽब्दे सपिण्डीकरणमभिधाय अत-ऊर्द्धं सम्वत्सरे सम्वत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यात् इति सूत्रे आद्याब्दादूर्द्धं साम्वत्सरिकविधानाच्च, इति, तन्न युक्तिसहं।

---

(१) पूर्वोक्तमलमासलिखितव्यवस्थया।

पूर्णेऽब्दे सपिण्डने तद्दिने पुनराब्दिककरणशङ्कायां तेनैवाब्दिकं तन्त्रसिद्धमिति हेमाद्रिधृतवाक्यस्याभिप्राय ।

अत एव पूर्णे इत्येवोक्त न लपकर्ष इति यत्तु सूत्रे अत-ऊर्द्धमित्युक्त तदार्षिकश्राद्धस्य प्रत्यब्दमवश्यकरणार्थमिति । यस्मिन् अहनि मृततिथेरपराह्णव्यापित्व[१] तस्मिन्नहनि सपिण्डीकरणस्य[२] उक्तत्वात् तदनुरोधेन तद्दिने तत्पूर्वमासिकस्यापि अन्यतिथौ[३] करणम् ।

अपुत्रस्यापि सपिण्डीकरण ।

तथा च लौगाक्षि,—

सर्वाभावे स्वय पत्न्य स्वभर्तृणाममन्त्रकम् ।
सपिण्डीकरण कुर्युस्तत पार्वणमेव च । इति

एव अपुत्राया स्त्रिया अपि,

तथा च पैठीनसि,—

अपुत्रायास्य पत्न्यास्तु पति कुर्यात् सपिण्डताम् ।
श्वश्र्वादिभि सहैवास्या सपिण्डीकरण भवेत् ॥

एतदपि सर्वाभावेऽपि बोध्यम् ।

ननु,— अपुत्रस्य परे तस्य नैव कुर्यात् सपिण्डताम् ।
अशौचमुदक पिण्डमेकोद्दिष्ट न पार्वणम् । इति ।
अपुत्रा ये मृता केचित् पुरुषा वा स्त्रियोऽपि वा ।
तेषां सपिण्डनाभावादेकोद्दिष्ट न पार्वणम् ॥

---

(१) अपराह्णव्याप्ति । (२) सपिण्डीकरणानुष्ठानस्य । (३) अन्यतिथावपि ।

इत्युक्तिद्वयेनापि सपिण्डीकरणाभावः प्रतीयते, इति चेन्न तदुक्तयोः प्रजाः चोत्पादयितव्याः इत्यर्थवादकतया निर्णयात्।

अविवाहितस्य तु सपिण्डनाभावः।

द्वादशात् वत्सरादर्व्वाक् पौगण्डमरणे सति।
सपिण्डीकरणं न स्यादेकोदिष्टादि कारयेत्॥

इत्यन्यत्रोक्तेः। पौगण्डो बालकः। आदिपदेन एकादशाह[१]-श्राद्धाद्युपसङ्ग्रहः।

यस्यैतानि न कुर्वीत एकोद्दिष्टानि षोड़श।
पिशाचत्वं[२] भवेत्तस्य दत्तैः श्राद्धशतैरपि॥

इति जावाल्युक्त्या सपिण्डनं विनापि एकादशाहश्राद्धाभिधानात्।

पितामहादिभिः पितुः सपिण्डनम्।

तथाच भरद्वाजः,—

पितुः सपिण्डीकरणं तस्य पित्रादिभिः सह।
पुरुषाणां च सर्व्वेषां तद्वत्कुर्यात् सपिण्डताम्॥

पुरुषाणां पितृव्यादीनां। एतेन यः कश्चिदधिकारी प्रेतस्य पित्रादिभिः सह कुर्य्यात् इत्यर्थः।

स्त्रीणामपि सपिण्डनमावश्यकं।

तथा च विष्णुः,—

सपिण्डीकरणं स्त्रीणां कार्य्यमेव यथा भवेत्।
यावज्जीवं तथा कुर्य्यात् श्राद्धं तु प्रतिवत्सरम्॥
तासां सपिण्डीकरणं पितामह्यादिभिः सह।

---

(१) एकादशाहश्राद्धदानाद्युपसंग्रह। (२) ध्रुवं।

तथाच शङ्खः,—

मातुः सपिण्डीकरणं कथं कार्य्यं भवेत् सुतैः ।

पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम् ॥ इति ।

पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।

सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥

इति यमवाक्यम् ।

यच्च,— मृतं यानुगता नाथं सा तेन सहपङ्क्तिताम् ।

अर्हति स्वर्गवासञ्च यावदाभूतविप्लवम् ॥ इति ।

अन्वारोहेऽपि शातातपवाक्यम् तत्फलश्रवणात् काम्यं, इति तन्नाद्रियते । एवमन्येऽपि ये स्त्रीविषये भेदाः स्मृतिषु उक्ताः, ते दैवादिविवाहोत्पन्नपुत्रविषया इति कैरपि नाद्रियन्ते ।

पितामहादिजीवने ब्राह्मच्छन्दोगपरिशिष्टयोः,—

मृते पितरि यस्याथ विद्यते च पितामहः ।

तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥

सुमन्तुरपि,— त्रयाणामपि पिण्डानामेकेनापि सपिण्डनम् ।

पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ॥

एवं पुरुषत्रयस्य नियतत्वात् पितामहे जीवति प्रपितामहादित्रयेण पितामहप्रपितामहयोर्जीवतोर्वृद्धप्रपितामहादित्रयेण सह सपिण्डनम् ।

मातृविषयेऽपि ब्राह्मे,—

मातर्य्यथ मृतायां तु विद्यते चेत्पितामही ।

प्रपितामहीपूर्वन्तु कार्य्यस्तत्राप्ययं विधिः ॥

इति पूर्ववत् । सन्यासिनां सपिण्डनाभावोऽशौचप्रस्तवेऽलेखि । दैवात्पितुः पश्चात् पितामहादिमरणे तेषां पुत्रान्तराभावे पौत्रादिभिः सपिण्डनं कार्य्यं ।

तथा च छन्दोगपरिशिष्टे,—

पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोड़शं ॥
नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः ।

इति पितामहपौत्रशब्दः प्रपितामहप्रपौत्राद्युपलक्षणम् । षोड़शशब्दस्य षोड़शके लक्षणा । तथा च, एकादशाहादिसपिण्डीकरणान्तानि श्राद्धान्येव कुर्य्यात्, न दर्शाब्दिकानि इत्यर्थः । सपिण्डीकरणानन्तरं पितुरेव तस्यैवोक्तौ तद्विधानात् ॥

तथा च,—

पितु. सपिण्डतां कृत्वा कुर्य्यान्मासानुमासिकम् ॥ इति ।

मासानुमासिकं दर्शश्राद्धमित्यर्थः। एतच्च श्राद्धमात्रोपलक्षणमिति नारायणभाष्यम् । यस्य पितार्थे मृतः तद्वर्षमध्ये पितामहप्रपितामहौ पश्चान्मृतौ, तस्य पितृसपिण्डनकालप्राप्तौ अकृतसपिण्डनाभ्यामेव ताभ्यां सह पितुः सपिण्डनं कार्य्यम् ॥

तत्रैव,—

असंस्कृतौ न संस्कार्य्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्य्यात् इति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं कुर्य्यादिति विनिश्चयः ॥

बौधायनः,—

आदिशेत् प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरं तस्यास्तृतीये च पितामहं ॥ इति

लौगाक्षिः,—

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रिया ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः ॥

एवं सति व्यवस्था क्रियते । पुत्रिकापुत्रो द्विविधः । मातामहेनैव सम्बन्धो मातामहेन स्वपित्रा च सम्बन्धश्चेति ।

क्रमेण तल्लक्षणं, तत्र वशिष्ठः,—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृतां ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥

मनुरपि,— यदपत्यं भवेत्तस्यां[१] तन्मम स्यात् स्वधाकरं । इत्याद्यः ।

कात्यायनः,—

अपुत्रोऽहं प्रदास्यामि तुभ्यं कन्यां भवानपि ।
पुत्रार्थी चेदिहोत्पन्नः स नौ पुत्रो भविष्यति ॥

इति द्वितीयः ।

तत्र मातुः प्रथमतः पिण्डं इत्यादिविधिर्मातामहेनैव सम्बन्धस्य । उभयसम्बन्धस्य तु उशनाः,—

मातामह्यं तु मात्रादि पैतृकं पितृपूर्वकम् ।
मातृतः पितृतो यस्मादधिकारोऽस्ति धर्मतः ॥

---

(१) भवेदस्याः ।

मातामह्यं मातामह्यादिदेवताकं कर्म, मातामह्यादि, उभय-सम्बन्धो वर्गद्वयस्य, श्राद्धं कुर्य्यात् मातामहश्राद्धपूर्वकं चेत्यर्थः।
तदाह ऋष्यशृङ्गः,—

यस्मादुभयसम्बन्धः पुत्रिकायाः सुतोह्यसौ।
पूर्वं मातामहश्राद्धं पश्चात्पैतृकमाचरेत्॥

तथाच मातुः सपिण्डीकरणं मातामह्यादित्रयेण द्विविधाभ्यामपि कार्य्यं। पार्वणश्राद्धं तु मातामहैकसम्बन्धेन मातृमातामहप्रमातामहानामेव कार्य्यं। उभयसम्बन्धेन तु आदौ मातृमातामहप्रमातामहानां ततः पितृपितामहप्रपितामहानां च श्राद्धं कार्य्यं। इति पुत्रिकापुत्रकर्त्तृकसपिण्डनादिविचारः।

उक्तकालेषु सपिण्डनासम्भवे गालवः,—

सपिण्डीकरणश्राद्धमुक्तकाले न चेत् कृतं।
रौद्रे हस्ते च रोहिण्यां मित्रभे वा समाचरेत्॥

व्यासोऽपि,—

सपिण्डीकरणश्राद्धं प्राप्तकाले न चेत् कृतम्।
रौद्रे हस्तेऽथवा मैत्रे कर्त्तव्यं वा मृताहनि॥

इति सपिण्डीकरणविचारः।

अपकृष्य सपिण्डने कृते नित्यश्राद्धवत् किञ्चिदन्नं जलकुम्भं च प्रतिदिनं सम्वत्सरं यावद्देयं। तथा च पारस्करः,—"अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं दद्यात् पिण्डमेके निपृणन्तीति"।

तत्र पिण्डपक्षस्य नाचारः।

अर्वाक् सपिण्डीकरणं यस्य सम्वत्सरात्भवेत्।

अत्र नारायणभाष्यम् प्रेतभावापन्नमपि पितरं निस्तीर्णप्रेत-भावेन अनिस्तीर्णप्रेतभावेन वा पितामहेन सह शुद्धिं कुर्य्यात्, सपिण्डयेदिति शास्त्रीयो विनिश्चयः। ततश्च शास्त्रबोधिते कानुपपत्तिः। यदा तु संस्कुर्यात् इति निश्चय इति पाठः तदायमर्थः।

विष्णुधर्मोत्तरे,—

यैरिष्टं विविधैर्यज्ञैः पूजितो यैश्च केशवः।
प्रेतलोकं न ते यान्ति तथा ये अग्निहोत्रिणः॥

ये चान्ये समरे हता इति पाठान्तरम्। इति अग्निहोत्र्यादेः प्रेतदेहप्राप्तिर्नास्ति। अतोऽसौ शुद्धस्त्वमपि पितामहेन शुद्धेन अशुद्धेन च संस्कुर्यात् सपिण्डयेदित्यर्थः इति। एवं पितामहीप्रपितामहीभ्यां असंस्कृताभ्यामपि सह मातरं सपिण्डयेत् इत्यर्थः। "कार्य्यः तत्राप्ययं विधिः", इति ब्राह्मोक्तेः। इमानि सपिण्डनान्तप्रेतकर्माणि ग्रहण-दिनेऽपि पक्वान्नेन एव कार्य्याणि।

प्रेतश्राद्धं प्रकुर्वीत पक्वान्नेनैव सर्वदा।
स्वयं पाकं प्रकुर्वीत सगोत्रं वापि कारयेत्॥
अपत्नीकोऽपि सिद्धान्नैः कुर्य्यात् श्राद्धानि षोड़श।

इति प्रचेतोवाक्ये सर्वदापदोपादानात्।

अथ पुत्रिकापुत्रकर्तृक[१]सपिण्डीकरणविचारः।

तत्र पुत्रिकापुत्रप्रशंसा, याज्ञवल्क्यः,—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।

पुत्रिका एव पुत्र इति वेति विज्ञानेश्वरा अर्थान्तरमप्याहुः।

(१) सपिण्डीकरणादिविचारः।

मनुः,— आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्।
तथैकादशपुत्राः स्युः पुत्रिकौरसयोर्विना॥
दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च॥

पितुर्मातामहस्येति यावत्। मातुः प्रथमतः पिण्डं इत्यादि वक्ष्यमाणवचनञ्च।

छन्दोगपरिशिष्टे,—

मातुः सपिण्डीकरणं पितामह्या सहोदितम्।
यथोक्तेनैव कल्पेन पुत्रिकाया न चेत्सुतः॥

इत्युक्त्वा पुनस्तत्र मानवीये च,—

मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः।
द्वितीयन्तु पितुस्तस्यास्तृतीयन्तु पितुः पितुः॥
तस्याः पितुर्मातामहस्य तस्याः पितुः पितुः

प्रमातामहस्य। अत्र नारायणभाष्यम्,— "पार्वणे प्रथमं मातुर्दद्यात् तदनुप्रमातामहस्य तदनु मातामहस्य"। अनेन पार्वणोपदेशेन सपिण्डनमुपदिष्टम्। अतएव,—

ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात्।

इति हारीतेनोक्तम्।

तथाचोशना,—

पितुः पितामहे यद्वत्पूर्णे सम्वत्सरे सुतैः।
मातुर्मातामहे तद्वदेषा कार्या सपिण्डता॥

मातामहे मातामह्यादित्रये, पितामहे यद्वदित्यभिधानात्।

तस्याप्यन्नं सोदकुम्भं दद्यात् सम्वत्सरं दिने ॥

इति याज्ञवल्क्योक्तेः ।

फलं च मात्स्ये,—

यावदब्दं च यो दद्यादुदकुम्भं विमत्सरः ।

प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ॥

अब्दमम्बुघटं दद्यादन्नं चामिषसंयुतं । इति ।

इति यदामिषदानमुक्तं, तदस्मद्देशे नाद्रियते । बह्वृषु वाक्येषु आमिषाभावात् । पुत्रस्य तस्मिन्नब्दे आमिषभोजनाभावाच्च ॥०॥

अथ क्रमप्राप्तममावास्यादिपार्वणश्राद्धं ।

विष्णुः,—अमावास्याः तिस्रोऽष्टकाः तिस्रोऽन्वष्टकाः, माघीप्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ च । इति ।

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।

श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥

इति प्रत्यवायश्रवणात्, नित्यशब्दोपादानाच्च । एवं वक्ष्यमाणोशनोवाक्यादिषु वीप्साश्रवणाच्च दर्शश्राद्धादीनां नित्यत्वं । पार्वणत्वञ्च भविष्ये स्फुटमुक्तं । अहन्यहनीति भविष्ये, प्रतिदिनविहितस्य यन्नित्यत्वमुक्तं, एतेषां तु पार्वणत्वमुक्तं तदितिकर्त्तव्यताप्रदर्शनार्थाय इति न विरोधः ।

तथाचोशनाः,—

कुर्य्यादहरहः श्राद्धं प्रमीतपितृको द्विजः ।

साग्निकोऽनग्निको वापि दर्शे दर्शे विशेषतः ॥

नच सर्व्वेषां श्राद्धानां अमावस्या प्रकृतिरिति अदावुपदिष्टत्वाच्च सा

विचार्य्यते। तत्र साग्निको निरग्निकस्य प्रमीतपितृकोऽधिकारी एतच्चा-
मावास्याश्राद्धं साग्निकेन पिण्डपितृयज्ञानन्तरं कार्य्यमिति विशेषः।
मनुः,— पितृयज्ञं तु निर्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।

पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम्॥

पिण्डानां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः॥

इति पिण्डानां पितृयज्ञसम्बन्धिनामनु पश्चादाहार्य्यं कार्य्य-
मिति दर्शश्राद्धं बुधा विदुरित्यर्थः।
यद्वा,— ततः प्रभृति पितरः पिण्डसंज्ञां तु लेभिरे।

इति मात्स्योक्तेः, पिण्डानां पितृणां अन्वाहार्य्यं मासिकतृप्ति-
जनकमिति अन्वाहार्य्यं मासिके इति कोषात्।
अयमर्थः,— साग्निनिरग्निसाधारणः पिण्डानां मनुक्तानुगतश्चेति
समीचीनः। चन्द्रक्षये चन्द्रक्षयोपलक्षितकाले अमावास्यायामित्यर्थः।

तथा च श्रुतिः,—"तदेतदेष वै सोमो राजा यच्चन्द्रमाः स
एताꣳ रात्रिं क्षीयते तत्क्षीणे देवानामन्ने पितृभ्योददाति" इति।
श्रुत्यन्तरं च,— "मासि मासिकेऽशन"मिति(१)। संविशेषं छन्दो-
गपरिशिष्टे।

कात्यायनोऽपि,—

पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते।

वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः॥

राजनि चन्द्रे क्षीणे अत्यन्तं विनष्टे अमावास्यायामित्यर्थः
दर्शश्राद्धं प्रशस्यते। किं इतरपार्वणवदस्यापि कालो ग्राह्यो नेत्याह,—

(१) मासि मासि वोऽशनमिति।

वासरस्य इत्यादि, पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणां अपराह्णः पितॄणां इति श्रुत्युक्तत्रिधाविभक्तदिवसस्य तृतीयभागरूपेऽपराह्णे दर्शश्राद्धं। ननु तर्हि पञ्चधाविभागे श्राद्धे निषिद्धस्य सायाह्नस्याप्यत्र ग्रहणं इत्याशङ्क्याह नातिसन्ध्येति। अतिसन्ध्यासमीपत्वेन सायंकालात् पूर्वं मुहूर्त्तद्वयं दर्शश्राद्धे वर्ज्यं। मुहूर्त्तद्वयत्यागे किं विनिगमकमिति चेत् उच्यते।

सायाह्नः त्रिमुहूर्त्तस्तु तत्र श्राद्धं न कारयेत्।

इति मात्स्योक्त्या,

ऊर्द्ध्वं मुहूर्त्तात् कुतपात् यन्मुहूर्त्तचतुष्टयम्।
मुहूर्त्तपञ्चकं वापि स्वधाभवनमिष्यते॥

इति अत्यसम्भवे त्रयोदशमुहूर्त्तपर्यन्तं श्राद्धे सामन्येन विकल्पितस्यापि कालस्य विनिगमकत्वं।

अतएव अफद्देशीयप्राचीनानां सङ्ग्रहकारिका।

मुहूर्त्ताद्दशमात् परं।

मुहूर्त्तत्रितयं काल अमावास्यस्य। इति।

एतेन नारायणभाष्यानुगततिथितत्वे अतिशब्दस्वारस्यात् मुहूर्त्तमात्रं त्याज्यं इति यदुक्तं, तन्नाद्रियते, नापि तन्मतं युक्तिमत्, यदि अतिशब्देन मुहूर्त्तमात्रस्य परिग्रहः, त्यागे तर्हि विनिगमनाविरहात् दण्डादेरपि त्याज्यत्वं किं न स्यात् इति। तथा च मुहूर्त्तद्वयमेव त्याज्यं। ननु सर्वतिथीनां क्षयमाध्यवृद्धयः सिद्धाः तत्र कथं दर्शे प्रतिपत्क्षयाकांक्षायां क्षयपक्षे आह स एव।

यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।

अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥

चतुर्द्दशीपदेनात्र पूर्वदिवसो गृह्यते ।

वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि ।

यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥

इति वक्ष्यमाणोक्त्यनुरोधात् । चतुर्द्दशीयामं इत्येकं पदं । तुरीयं चतुर्थं, क्षयादिकं पूर्वतिथ्यपेक्षयैव ।

तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।

साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥

इति प्राचेतसीयोक्तौ स्फुटत्वात् । तथा च क्षीयमाणा पूर्वापरदिवसीययामचतुर्द्दश्यपेक्षया क्षयवती अमावास्या यदा चतुर्थं पूर्वदिवसीययामं अनुपूरयेत् । तदैव चतुर्द्दशीपूर्वदिन एव श्राद्धं, एतेन भाष्यानुगततिथितत्त्वे क्षीयमाणा न्यूनकालव्यापिनीत्यादि यल्लिखितं, तत्सर्वं परास्तमेवेति बुद्धिमद्भिर्विभाव्यं ।

ननु यदहस्त्वेव चन्द्रमा न दृश्यते तत्रामावास्यां कुर्वीत, इति श्रुतौ, क्षीणे राजनीति तदुक्तौ, मानवीयोक्तौ च चन्द्रादर्शने श्राद्धमुक्तं, तत्कथं पूर्वदिने चतुर्द्दशीसत्त्वे चन्द्रदर्शनेऽपि श्राद्धमितिविरोधमाशङ्क्य परिहरति स एव,—

यदुक्तं यदहस्त्वेव दर्शनं नेति चन्द्रमाः ।

तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि ॥

यस्मिन्नहनि चन्द्रक्षयो भवतीत्यभिप्रायात् यदहस्त्वित्यादि श्रुत्या क्षीण इत्यादिस्मृत्या च चन्द्रक्षयरूपायां अमावास्यायां दर्शश्राद्धस्य कार्य्यता प्रतिपाद्यते न तु चतुर्द्दशीमिश्रा निषिध्यते इत्यर्थः। अतएव

दृश्यमानेऽप्येकदा इति गोभिलसूत्रं। इत्थं भूतचतुर्दशीविषयतां स्फुटयतीति स एवाह। यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया। ननु तर्हि अमावास्या प्रतीक्षणीया न वा? इत्याशङ्कायां स एवाह,—

अमावास्यां प्रतीक्षेत तदन्ते वापि निर्वपेत्।

तदन्ते चतुर्दशीशेषे निर्वपेत् श्राद्धं कुर्य्यात्। इति।

ननु अमावास्यायां चन्द्रक्षयो भवति, तत्कथं चतुर्दशीशेष इत्यप्युच्यत इत्याशङ्क्य चन्द्रक्षयकालमाह,—

अष्टमेऽंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावास्याष्टमांशे च ततः किल भवेदणुः॥

चतुर्दश्यष्टमयाममारभ्य अमावास्यासप्तमयामान्ते सम्पूर्णः क्षयः। ततोऽमावास्याष्टमयामे चन्द्रोत्पत्तेरारम्भः इत्यर्थः। किलेति आगमवार्त्तायां। एवं दशसु अमावस्यासु व्यवस्थामुक्त्वा मार्गशीर्ष-ज्येष्ठामावास्ययोर्विशेषं स एवाह,—

आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत्।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः॥

आभ्यामिति ल्यब्लोपे पञ्चमी। इमे अमावास्ये प्राप्य इत्यर्थः। चन्द्रचारविदो ज्योतिर्विदः अत्र शुक्लप्रतिपदादिमासाश्रयणेन मार्गशीर्षपौर्णमास्युत्तरज्येष्ठपौर्णमास्युत्तरामावास्ये ग्राह्ये। सर्वग्रन्थ-कारलिखनादाचाराच्च। अत्र विशेषं स एवाह,—

अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागो न कलावशिष्टः।
तदन्त एव क्षयमेति हन्त्वमेवं ज्योतिश्चक्रविदो वदन्ति॥

अथ अस्मिन् मासद्वये इन्दुश्चन्द्र, आद्ये प्रहरे अन्यदर्शेषु तु चन्द्रचयकालत्वेन[१] अभिमते चतुर्द्दश्यष्टमयामरूपे इत्यर्थः। चतुर्थभागो न कलावशिष्ट इत्यादि। ऊनश्चतुर्थभागः चतुर्थभागार्द्धं चतुर्द्दश्याः कलाया अष्टमो भाग इति यावत्। कला पञ्चदशीकला चतुर्थभागो नश्च कलाचेति द्वन्द्वसमासः। ते अवशिष्टे अविनष्टे यस्य स तथोक्तः। तदन्ते चतुर्द्दश्यन्ते अमावास्याया-मित्यर्थः। कृत्स्नं समयं चयं पञ्चदश्याः कलाया अपचय-व्यापारं एति प्राप्नोति। अनयोरमावास्ययोः चन्द्रगतिवैलक्षण्यात् न चतुर्द्दश्यष्टमयामे चयः। किन्तु दर्शाद्ययामप्रभृतिदर्शाष्टमयाम-साध्यः चयः। अनयोरपि दर्शयोर्मलमासयुक्ते वर्षेऽन्यदर्शेष्विव चय इति विशेषमाह स एव,—

यस्मिन्नब्दे द्वादशैकश्च यथाः
तस्मिंस्तृतीयापरिदृश्यो नोपजायते।
एवं चारं चन्द्रमसो विदित्वा
चीणे तस्मिन्नपराह्णे च दद्यात्॥

यथशब्दो मासवाची। यस्मिन् वर्षे द्वादशयथ्या एको यथ्यश्च इति त्रयोदशमासा इत्यर्थः। मलमासः पततीति यावत्। तस्मिन् वर्षे चन्द्र आद्ये प्रहरे इति पूर्वस्मादनुषङ्गः तृतीयापरिदृश्यः तृतीय-मात्रया परिदृश्यः नोपजायते चतुर्थभागो न कलावशिष्टो न भवतीत्यर्थः। मलमासयुक्ताब्दस्तु एकस्मान्मलमासात् अब्दद्वया-नन्तरात्मकः। तृतीयवर्षे मलमासस्यावश्यंभावात्। चारः गति-

(१) प्रथमत्वेन।

विशेषः तस्मिन् चन्द्रे अपराह्ने पूर्वोक्तत्रिधाविभक्तदिवसस्य तृतीय-भागाद्यमुहूर्त्तत्रयरूपे ।

एवं क्षीयमाणपक्षं, तत्रागङ्कया चन्द्रक्षयं च विचार्य्य इदानीं समापक्षे व्यवस्थामाह स एव,—

सम्मिश्रा या चतुर्द्दश्या अमावास्या भवेत् क्वचित् ।
खर्वितां तां विदुः केचित् उपेक्ष्यमिति चापरे ॥

या अमावास्या तिथिः क्षयवृद्धिरहिता सा समेत्युच्यते।। स्तम्भेनावस्थितेति स्तम्भितेति कल्पतरुकारादयस्तामाहुः, या समा-मावास्या चतुर्द्दश्या संमिश्रा भवेत् । तां खर्वितां खर्वा समतिथि-र्ज्ञेयेति बौधायनोक्तेः समामित्यर्थः । क्वचित् उभयदिनापराह्नद्वय-सम्बन्धसम्भवे इत्यर्थः । केचित् बुधाः विदुः जानन्ति श्राद्धाय इति शेषः, श्राद्धार्थां स्वीकुर्वन्तीति यावत् । अपरे च बुधाः यूयमिति शेषः, इति हेतोः अन्येषां स्वीकाराद्धेतोः इति शेषः, उपेक्ष्य-मुपगच्छत श्राद्धाय स्वीकुरुत इत्यर्थः । केवलं न विद्युः । अपरे-चेति चकारः समुच्चये, "साम्येऽपि च कुहूर्ज्ञेयेति" प्रचेतोवचने पूर्वदिनस्य निषिद्धत्वात्, कात्यायनोऽपि गौतदत्त क्वचिदित्यादि अपठीत् । एतेषां वाक्यानां सावकाशत्वं वक्ष्यते ।

वर्द्धमानापक्षे व्यवस्थां स एवाह,—

वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि ।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥
प्रतिपद्यपि कुर्वीत श्राद्धं श्राद्धविदो विदुः ।

प्रतिपदि चन्द्राद्यकलोपचयव्यापारविशिष्टे काले अमावास्या-

ष्टमांशे इत्यर्थः। अत्र तदेतदेव वै इति पूर्वोक्तप्रत्यक्षश्रुतिविरोधात् विरोधाधिकरणन्यायेन स्मृतेर्दुर्बलत्वं मत्वा वर्द्धमानास्मृतिरनादरणीया इति केचित्, तन्न। तथाहि औदुम्बरी सर्वा वेष्टितव्या इति स्मृतिः, औदम्बरीं स्पृष्ट्वोद्गाता गायेत इति श्रुतिः, तत्र सर्ववेष्टने सति श्रुत्युक्तस्पर्शनस्य अत्यन्तासम्भव इति श्रुतिस्मृत्योर्विरोधे श्रुतेर्बलीयस्त्वं निर्णीतं।

प्रकृते तु वर्द्धमानास्मृत्यविरोधेन चीयमाणाश्रुतेः सावकाशत्वात् विरोधाधिकरणविषयत्वाभाव इति कैश्चित् समाहितं। वस्तुतस्तु तदेतदेव वै इति श्रुतिः अमावास्याश्राद्धं कार्य्यमिति प्रतिपादयति, नत्वमावास्यायां चीयमाणात्वं प्रतिपादयतीति, यदुक्तं यदहस्त्वेव इत्यादि पूर्वोक्तवचनेन दर्शश्राद्धस्य कार्य्यत्वं निश्चित्य अमावास्यातिथेस्त्रैविध्यं कात्यायनेनैव उक्तमिति न कश्चित् विरोधप्रसङ्गः। क्षयविषये नारायणभाष्यानुगततिथितत्वादौ तुरीयभागो नकलाविशिष्टता विनाशश्च इति द्वयं क्षयपदवाच्यं इत्यादि महता प्रबन्धेन यल्लिखितं तदुर्घटं इति अस्मद्देशीयपूर्वाचार्य्यलिखितक्षयप्रकारः सविशेषस्तच्छ्राद्धकालविचारस्य स्पष्टतया लिख्यते,—

चन्द्रक्षयः चन्द्रान्त्यकलाया अत्यन्तं विनाशः स चार्कसंक्रमणवदतिसूक्ष्मकालमात्रयोगात् अन्त्यकलापचयमात्रमित्येवं। तत्र पौर्णमास्यां अन्तिमकलोपचयक्रमेण पौर्णमास्यान्तिमक्षणे संपूर्णः चन्द्रो भवति। ततःप्रभृति त्रिंशल्लिप्तिकोनायां प्रतिपदादितिथौ एकैकादि[१]-

(१) एकैककलाक्षयक्रमेण।

कलाचयक्रमेण चतुर्द्दश्याः सप्तमयामान्ते चतुर्द्दशानां कलानां चयात् अन्तिमैककला तिष्ठति । तस्याश्च ततः प्रभृति क्रमेण चये अमावास्यायाः सप्तमयामान्त्यचणे अत्यन्तं चय इत्येवं अन्त्यकलायाः चयः सम्पूर्णतिथिसाध्यः । ततः त्रिंशत्त्रिंशिकाधिकासु प्रतिपदाद्येकैकतिथिष्वेकैककलोपचयक्रमेण पौर्णमास्यन्ते संपूर्णश्चन्द्रो भवति इत्युत्सर्गः । मार्गशीर्षपौर्णमासीज्येष्ठपौर्णमास्यनन्तरयोस्तुपरपचयोः प्रतितिथिकलैकोपचयक्रमेण चतुर्द्दश्यष्टमे प्रहरे चतुर्द्दश्याः कलाया- अष्टमो भागः पञ्चदशी कला च तिष्ठति । तत्र कलाष्टमांशः चतुर्द्दश्यष्टमप्रहरान्ते विनश्यति । पञ्चदशी तु कला अमावास्याचचणप्रभृत्यपचयक्रमेण अमावास्यान्त्यचण एव अत्यन्तं विनश्यति । अनयोरप्यमावास्ययोर्मलमासयुक्ताब्दे अन्यामावास्यास्विव चतुर्द्दश्यष्टमयामादिद्वर्द्धसप्तमयामान्तः चयः । तदेतत् सर्वं ज्योतिःशास्त्रादवधार्य्य[१] । एष चन्द्रचयोपलचितः कालो यस्मिन्नहनि त्रिधाविभक्तदिवसतृतीयभागाद्यमुहूर्त्तचये लभ्यते तदैव श्राद्धं । वासरस्येत्याद्युक्तेः, तत्रापि यदि पूर्व्वेद्युरमावास्या चतुर्द्दश्यष्टमयामं अतिक्रम्य श्राद्धयोग्यकालव्यापिनी स्यात्, तदा चतुर्द्दशीशेषसमाप्तिरपेचणीया । अन्यथा चतुर्द्दश्यष्टमयाम एव श्राद्धं, अमावास्यामित्याद्युक्तेः ।

चीयमाणापचे तु यदा चतुर्द्दशी पूर्व्वेद्युः श्राद्धयोग्यकालव्यापिनी परेद्युः अमावास्या ह्रासवशात् श्राद्धकाले चन्द्रचयविशिष्टा न स्यात् । यदा[२] ह्रासस्यादल्पत्वात् चन्द्रचयविशिष्टापि

(१) अवगन्तव्यं । (२) यदा वा ।

स्यात्, तत्र उभयत्रापि चतुर्द्दशाष्टमयाम एव श्राद्धं, यदा चतुर्द्दशी-याम इत्याद्युक्तेः।

यदा तु पूर्व्वेद्युः चतुर्द्दशी दिवसव्यापिनी यदा रात्रिमपि स्पृशति, परेद्युर्ह्रासाधिक्यात् अमावास्या श्राद्धकाले क्षयविशिष्टा न स्यात्, तदापि सम्पूर्णायां चतुर्द्दश्यां श्राद्धं, चन्द्रक्षयविशिष्ट-काललाभात्।

यदा तु पूर्व्वेद्युः चन्द्रक्षयविशिष्टा चतुर्द्दशी श्राद्धकाले न स्यात्, परेद्युः ह्रासाधिक्यात् अमावास्यापि श्राद्धकाले चन्द्रक्षयविशिष्टा न स्यात्। तदा केवलायां अमावास्यायामपीव श्राद्धं[१]। क्षीणे राजनि शस्यते इति चन्द्रक्षयविशिष्टकालस्य प्राशस्त्यावगमेन क्षयलाभे अमावास्यातिथिमात्रमप्रशस्तं न ग्राह्यं। तदभावे त्वर्थादेव प्रति-निधिवत् अमावास्यामात्रमेव आश्रयणीयं।

समापत्ते तु यदा त्वमावस्या पूर्व्वेद्युः श्राद्धयोग्यकाले क्षय-विशिष्टाधिककालव्यापिनी स्यात्, परेद्युरल्पकालव्यापिनी स्यात् तदा पूर्व्वेद्युः श्राद्धम्।

दर्शञ्च पौर्णमासञ्च पितुः साम्वत्सरं दिनं।
पूर्व्वविद्धमकुर्व्वाणो नरकं प्रतिपद्यते॥

इति नारदीयोक्तेः,

सम्मिश्रा या चतुर्द्दश्या इत्याद्युक्तेश्च कल्पतरावपि यदा अमा-वास्याया न वृद्धिक्षयौ किन्तु साम्येनोभयदिनयोः अपराह्न-सम्बद्धामावास्यासम्भवः। तदा पूर्व्वदिन एव श्राद्धं कार्य्यं। क्षीणे

(१) अमावास्यायां श्राद्धं।

राजनि प्रयते इति लिखितं। यदा तु पूर्वेद्युः श्राद्धकालेऽल्पकालव्यापिनी अममाऽमावास्या[१] स्यात्, वा परेद्युरधिककालव्यापिनी स्यात्, तदा परेद्युरेव श्राद्धं। साम्येऽपि च कुहूर्ज्ञेया-इति प्राचेतसीयोक्तेः अधिकव्याप्तेर्बलवत्त्वाच्च।

वर्द्धमाना पक्षे तु यदा दिनद्वयेऽपि श्राद्धकाले चन्द्रक्षयविशिष्टकाललाभः, तदा परेद्युः श्राद्धं, उभयत्र चन्द्रक्षयवैशिष्ट्यस्य समानत्वेऽपि परेद्युरधिकममावस्यातिथिलाभात्। यदा परेद्युः श्राद्धकाले चन्द्रक्षयविशिष्टा न स्यात्, केवलं वर्द्धमानामावास्या यामत्रयात् किंचित् अधिकं यामत्रयं वा व्याप्नुयात् तदा चन्द्रक्षयमनादृत्य केवलामावास्यामात्रे परेद्युः श्राद्धं, वर्द्धमानाममावास्यामित्याद्युक्तेः। मलमासयुक्ताब्देतरवर्षेषु मार्गशीर्षपौर्णमासीज्यैष्ठपौर्णमास्युत्तरयोस्समावास्ययोश्चन्द्रक्षयवैलक्षण्यस्य दर्शितत्वाच्चतुर्दश्यां श्राद्धप्रसक्तावनाऽपि नास्ति। तेनात्र यदा त्रिधाविभक्तदिवसस्यापराह्णप्रथममुहूर्त्तत्रयेऽमावास्या तद्दिन एव श्राद्धं। यदि तु तत्र क्रमप्राप्तत्र्याद्दिनद्वये अपि त्रिधाविभक्तदिवसतृतीयभागाद्यमुहूर्त्तत्रये अमावास्या न लभ्यते तदा द्विधाविभक्तदिवसद्वितीयभागरूपापराह्णे यत्रैव मुहूर्त्तं अमावास्या लभ्यते तत्रैव श्राद्धमिति सर्वं समञ्जसम्।

दर्शेष्टिकालस्य दर्शश्राद्धाधीनत्वात् तत्कालो विचार्यते। चन्द्रक्षयोत्तरदिन एव दर्शेष्टिकालः। "पूर्वेद्युः पितृभ्यो निष्कीय परेद्युर्देवेभ्यो ददाती"ति श्रुतेः। अतएव सम्प्रदायपन्थे शौवस्तिपितृकर्म

(१) अमावास्या स्यात्, परेद्यु।

पितृयज्ञाभावात् अमावास्यायामेवेष्टिः, इत्यभिप्रेत्य चतुर्दश्यामे-
वोपवास इत्युक्तम्।

यागकालस्वरूपमाह वृद्धशातातपः,—

पार्व्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः।
यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः॥

तत्र,— न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित्।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी॥

इति कात्यायनोक्तेः चतुर्थांशस्य दुष्टत्वेऽपि,—

सन्धिर्यदपराह्णे स्यात् यागः प्रातः परेऽहनि।
कुर्व्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति॥

इति वृद्धशातातपोक्तेः, चतुर्थभागेऽप्यदोषः। कुर्व्वाणः प्रति-
पद्भागे इति यदुक्तं, तत् मार्गशीर्षज्यैष्ठपूर्णिमोत्तरदर्शयोः, क्षीय-
माणापक्षेऽपि प्रतिपदि सर्व्वदर्शेषु, वर्द्धमानापक्षेऽपि प्रतिपदि
सर्व्वदर्शेषु, कदाचित् समापक्षेऽपिवेति बोध्यम्। सर्व्वत्र क्षीयमाणापक्षे
विशेषो यथा, यदा चन्द्रक्षयानुरोधेन चतुर्द्दश्यां श्राद्धं, तदा यदि
अमावास्यायां पर्व्वचतुर्थांशप्रतिपदाद्यंशत्रयरूपयागकालो न लभ्यते,
तदा पर्व्वतृतीयांशेऽपि यागः कार्य्यः।

तथाच हारीतः,—

पर्व्वणोऽंशे तृतीये वा कार्य्या इष्टिर्द्विजातिभिः।
द्वितीयांशहितं यस्मात् दूषयन्त्याश्वलायनाः॥ इति।

आश्वलायना इत्युक्ते ऋग्वेदविषयमेतदिति केचित्, तन्न।
अविरुद्धपारक्यधर्मादपरस्या अदुष्टत्वात्।

तथाच छन्दोगपरिशिष्टे,—

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्।

विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि धर्मवत् ॥ इति।

अत्र प्रसङ्गात् पौर्णमासेष्टिकालोऽपि निरूप्यते।

कात्यायनः,— सन्धिश्चेत् सङ्गवादूर्द्ध्वं प्रागेवावर्त्तनाद्रवेः।

सा पौर्णमासी विज्ञेया सद्यः कालविधौ तिथिः ॥

अथ विकृतेष्टिविचारः।

यदा पूर्वाह्णे मध्याह्ने वा सन्धिः तदा प्रातरेव प्राप्तयोः प्रकृति-विकृत्योः कस्या आदौ कार्य्यता इत्यपेक्षायां आह आपस्तम्बः,— प्रकृतेः पूर्वोक्तत्वात् अपूर्वं अन्ते स्यात् इति। अपूर्वा विकृतिः प्रकृतेः समाप्तौ स्यात्, प्रकृतेः पूर्वोक्तत्वादित्यर्थः।

तत्र कात्यायनो विशेषमाह,—

आवर्त्तनात् प्राक् यदि पर्व्वसन्धिः

कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः।

तत्रैव यागः परतो यदि स्यात्

तस्मिन् विकृत्याः प्रकृतेः परत्र ॥

आवर्त्तनात् परतः सन्धिः स्यात् चेत्, तदा केवलो विकृति-यागः सन्धिदिने कार्य्यः। प्रकृतियागः परत्रेत्यर्थः। सर्वासामिष्टीनां दर्शपौर्णमासौ प्रकृतिः। आग्रहायणाद्यो विकृतयः, काम्या-रण्योऽपि।

पद्मादिचतुःकालः[१] छन्दोगपरिशिष्टे,—

(१) पद्मादिषट्कालः।

पश्चाद्रावेव कुर्वीत सदा पश्चादिकं परं।
पूर्व्वाह्न एव कुर्वीत विद्धेऽप्यन्ये मनीषिणः॥

पश्चाद्रौ प्रतिपदि विद्धेऽपीति द्वितीयारद्विते(?)ष्टिकालस्य प्राप्तौ सत्यां द्वितीयासहितो निन्दितः। अप्राप्तौ तु स एव यागाङ्गमिति। अत्र मम विज्ञापनम्।

नारायणीयभाष्यार्थविरुद्धं यन्मयोदितम्।
स्वदेशाचार्य्यमर्य्यादास्थापनायैव तद्बुधाः॥

अमावास्यानिषिद्धानि।

अमावास्यायां नाधीयीत नाध्यापयेन्ना[१]न्नमद्यात् परस्य च।

स्मृतिः,— अमावास्यायां न छिन्द्यात् कुशांश्च समिधस्तथा।
वौरुधावस्थिते[२] सोमे हिंसायां ब्रह्महा भवेत्॥

गौडीयचिन्तामणौ तु,—

सायंसन्ध्यां परान्नं च रात्रौ भोजनमैथुने।
तैलं मांसं तिलापिष्टं[३] अमावस्यादिने त्यजेत्॥

एतद्वचनस्य देशान्तरे आदरः। तस्मादस्मद्देशे सायंसन्ध्यां कुर्वन्ति।

शातातपः,—

वनस्पतिगते सोमे परान्नं ये तु भुञ्जते।

---

(१) न छिन्द्यात्।
(२) सर्वत्रावस्थिते।
(३) तिलपिष्टममायां च विवर्जयेत्।

तेभ्यः पूजा च कर्त्तव्या तत्र सर्वात्मना बुधैः ।
पिण्डो देयस्तथाष्टाङ्गः श्राद्धं कार्यं च सर्वदा ॥

पितृर्क्षं मघा, तद्युक्तामावास्या भाद्रपदामावास्यैव । अन्यासु तद्योगाभावात् । एतत् नैमित्तिकं काम्यं इति पूर्वलिखितकार्ष्णाजिनाद्युक्तेर्नित्यश्राद्धे मघायोगे यः पिण्डदाननिषेधः, तन्निवृत्त्यर्थं पुनः पिण्डदानमत्रोक्तं, अन्यथा श्राद्धं कार्य्यं इत्येतावदुक्तं स्यात् । पिण्डस्याष्टाङ्गानि ब्राह्मे,—

मधु साज्यं जलं चार्घं पुष्पं धूपं विलेपनं ।
वर्त्तिं दद्याच्च विधिवत् पिण्डोऽष्टाङ्गो भवेत्तथा ॥ इति

बकुलामावास्या ।

अमावास्यां प्रकृत्य धवलसंग्रहे,—

पौषे तु बकुलक्षीरपायसैः तर्पयेत् पितॄन् ।

अथाष्टकान्वष्टकाश्राद्धं ।

वायुपुराणे,—

पितृदानाय मूले स्युरष्टकास्तिस्र एव च ।
कृष्णपक्षे वरिष्ठा हि पूर्वा चैन्द्रीति भाष्यते ॥
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी ।
आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा ॥
शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः ।
अष्टका हि पितॄणां वै नित्यमेव विधीयते ॥
या चाप्यन्या चतुर्थी स्यात्तां च कुर्यात् विशेषतः ।
तासु श्राद्धं बुधः कुर्यात् सर्वास्वेनापि नियमः ॥

नित्यं प्राप्नोति श्रेयांसि परत्रेह च मोदते।
पितरः पर्वकालेषु तिथिकालेषु देवताः॥
सर्वे गृहस्थमायान्ति निपानमिव धेनवः।
यस्य ते प्रतिगच्छेयुरष्टकासु ह्यपूजिताः।
मोघास्तस्य भवन्त्याशाः परत्रेह च नित्यशः॥

मूले श्राद्धे प्रधानस्थाने अमावास्यायाः स्थाने इत्यर्थः। तस्मा-द्दानशब्दोपादानाच्च अष्टकासु अमावास्याश्राद्ध[१]वदत्र कर्त्तव्यता, इति बोध्यम्। अत्र फलविशेषकामस्यैव चतुर्थी अष्टका कार्य्या। न तु सा नित्या। तस्यां या चाथन्येति विशेषत इति पदाभ्यां नित्यत्वा-भावस्य प्रतीतेः। विष्णुस्मृतौ, अष्टकात्रयस्य अन्वष्टकात्रयस्यैव च नित्यत्वेनाभिधानात्। हैमन्तशिशिरयोस्त्रयाणामपरपक्षाणामष्टम्यां अष्टका इति शौनकसूत्रात्

पौषादित्रिषु मासेषु कृष्णपक्षेऽष्टका[२] स्मृता।

इति स्मृतेश्च। अष्टकाश्राद्धात् परदिने अन्वष्टकाश्राद्धं। श्वस्ततोऽन्वष्टका[३] इति वचनात्, श्वोऽन्वष्टकासु इति पारस्करसूत्राच्च। श्वः अष्टम्या उत्तरेद्युः अष्टकामनु भवन्तीति अन्वष्टका इति हरि-हरभाष्यम्। तथाच तिथिद्वैधे यद्दिने अष्टकाश्राद्धं तत्परेद्युरेवान्वष्टका-श्राद्धं न तु नवमीतिथिनियतता। अतएव श्वःपदमुपात्तं न तु नवमीति तस्मान्नवम्यनुरोधेन मध्ये एकदिनं विहाय तच्छ्राद्धं सर्वथा न कार्य्यम्। न चाष्टकादिने श्राद्धद्वयमिति सिद्धम्।

(१) अमावास्यावत् श्राद्धेतिकर्त्तव्यतेति बोध्यम्।
(२) अष्टकाभवेत्। (३) अन्वष्टका इति वचनात्।

तेभ्यः पूजा च कर्त्तव्या तत्र सर्वात्मना बुधैः ।
पिण्डो देयस्तथाष्टाङ्गः श्राद्धं कार्यं च सर्वदा ॥

पित्र्यं मघा, तद्युक्तामावास्या भाद्रपदामावास्यैव । अन्यास्तु तद्योगाभावात् । अतः नैमित्तिकं काम्यं इति पूर्वलिखितकार्ष्णाजिनाद्युक्तैर्नित्यश्राद्धे मघायोगे यः पिण्डदाननिषेधः, तन्निवृत्त्यर्थं पुनः पिण्डदानमत्रोक्तं, अन्यथा श्राद्धं कार्यं इत्येतावदुक्तं स्यात् ।

पिण्डस्याष्टाङ्गानि ब्राह्मे,—

मधु साज्यं जलं चार्घं पुष्पं धूपं विलेपनं ।
वलिं दद्याच्च विधिवत् पिण्डोऽष्टाङ्गो भवेत्तथा ॥ इति

वकुलामावास्या ।

अमावास्यां प्रकृत्य धवलसंग्रहे,—

पौषे तु वकुलक्षीरपायसैः तर्पयेत् पितॄन् ।

अष्टकाष्टकाश्राद्धं ।

वायुपुराणे,—

नित्यं प्राप्नोति श्रेयांसि परत्रेह च मोदते।
पितरः पर्वकालेषु तिथिकालेषु देवताः॥
सर्वे गृहस्थमायान्ति निपानमिव धेनवः।
यस्य ते प्रतिगच्छेयुरष्टकासु ह्यपूजिताः।
मोघास्तस्य भवन्त्याशाः परत्रेह च नित्यशः॥

मूले श्रादौ प्रधानस्थाने अमावास्यायाः स्थाने इत्यर्थः। तस्मा-द्दानशब्दोपादानाच्च अष्टकासु अमावास्याश्राद्ध(१)वदत्र कर्त्तव्यता, इति बोध्यम्। अत्र फलविशेषकामस्यैव चतुर्थी अष्टका कार्य्या। न तु सा नित्या। तस्यां या चाप्यन्येति विशेषत इति पदाभ्यां नित्यत्वा-भावस्य प्रतीतेः। विष्णुस्मृतौ, अष्टकात्रयस्य अन्वष्टकात्रयस्यैव च नित्यत्वेनाभिधानात्। हेमन्तशिशिरयोस्त्रयाणामपरपक्षाणामष्टम्यां अष्टका इति शौनकसूत्रात्

पौषादित्रिषु मासेषु कृष्णपक्षेऽष्टका(२) स्मृता।

इति स्मृतेश्च। अष्टकाश्राद्धात् परदिने अन्वष्टकाश्राद्धं। अस्ततोऽन्वष्टका(३) इति वचनात्, श्वोऽन्वष्टकासु इति पारस्करसूत्राच्च। श्वः अष्टम्या उत्तरेद्युः अष्टकामनु भवन्तीति अन्वष्टका इति हरि-हरभाष्यम्। तथाच तिथिद्वैधे यद्दिने अष्टकाश्राद्धं तत्परेद्युरेवान्वष्टका-श्राद्धं न तु नवमीतिथिनियतता। अतएव श्वःपदमुपात्तं न तु नवमीति तस्मात्नवम्यनुरोधेन मध्ये एकदिनं विहाय तच्छ्राद्धं सर्वथा न कार्य्यम्। न चाष्टकादिने श्राद्धद्वयमिति सिद्धम्।

---

(१) अमावास्यावत् श्राद्धेतिकर्त्तव्यतेति बोध्यम्।

(२) अष्टकाभवेत्। (३) अन्वष्टक्य इति वचनात्।

ननु चतुर्थीमष्टकामभिधाय सर्वाष्टकासाधारण्येन फलस्य दोषस्य च उक्तेरष्टकात्रयस्येव अस्या अपि कार्य्यत्वं इति कैश्चित् लिखित-मिति चेत्? उच्यते। यदि तत्त्रितयसाम्यमस्याः स्यात्। तदा वायुपुराणे, देवताद्रव्यविधिरुक्तः स्यात्, किं च तत्त्रयानन्तरं अष्टका ह्येति वचनेन नित्यत्वमभिधाय तदन्तरं चतुर्थी उक्तेति तस्या अनित्यत्वं स्पष्टमेव। उपक्रममध्ये यत्कथनं, तत्तस्या अष्टका-नामकत्वकथनार्थमिति ज्ञेयम्।

एवं च कालादर्शे,—

मार्गशीर्षे च माघे च पौषे प्रौष्ठे च फाल्गुने।
कृष्णपक्षेषु पूर्वेद्युरन्वष्टक्यं तथाष्टमी॥ इति।

अष्टकापञ्चकमिति यल्लिखितं तदनयैव दिशा परास्तम्। एव-मुपाष्टकायां यच्छ्राद्धं लिखितं, तदपि वानित्यम्[1]।

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्॥

इति गौतमोक्तेः, षट्पुरुषात्मकपार्वणश्राद्धमष्टकासु कार्य्यम्। अन्वष्टकायां मातरि मृतायां मात्रादिभिः सह इति वचनात्, "अन्वष्टकासु वृद्धौ च" इति वायवीयपुराणोक्तेश्च अन्वष्टकायां मात्रादिपुरुषत्रयमधिकम्। तथाच नवपुरुषात्मकं श्राद्धम्। छान्दोग्यैस्तु मातरि मृतायामपि अन्वष्टकायां षट्पुरुषात्मकमेव श्राद्धं कार्य्यम्॥

कर्पूममन्वितं मुक्ता तथाद्यं श्राद्धषोड़श।

---

(१) तदपि न नियम्।

प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

तथा,

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।

इति छन्दोगपरिशिष्टोक्तेः । कर्षूसमन्वितं सपिण्डीकरणश्राद्धम् ।

अत्र

मातामहानां यः कृत्वा मातॄणां सम्प्रयच्छति ।

तर्पणं पिण्डदानं च नरकं चैव गच्छति ॥

इति वचनात् पितृवर्गश्राद्धानन्तरमेव मातृवर्गश्राद्धम् । तद-नन्तरं मातामहवर्गश्राद्धम् ।

अत्र कैश्चित् यल्लिखितम्, एतद्वचनस्यामूलत्वेन आगन्तुकानामन्ते निवेश इति न्यायेन मातामहवर्गानन्तरं कार्य्यमिति । तदाचार-विरुद्धत्वादनादरणीयमेव। एतद्वचनस्य सर्वशिष्टादृतत्वेन प्रामाण्यात्।

(१)अन्वष्टकास्वष्टक्यमनघैः श्राद्धमिष्यते ।

देवेभ्यश्च पितृभ्यश्च मातृभ्यश्च यथाक्रमम् ॥

वृद्धिश्राद्धे च माघादि गयायां पितृपूर्वकम् ।

पिता पितामहश्चैव तथैव प्रपितामहः ॥

माता पितामही चैव तथैव प्रपितामही ।

मातामहश्चमातामहश्चवृद्धप्रमातामहाः ॥

तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ।

इति शाट्यायनवचनाच्च ।

---

(१) अष्टकास्वन्वष्टक्यमनघे ।

यत्तु विप्रमिश्रैः पुराणस्मृत्यपेक्षया गृह्यसूत्रस्य बलवत्त्वात् अन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञवत् स्त्रीभ्यश्चोपसेचनं कर्षुषु इति वचनादन्त एव कर्त्तव्यम्। अन्वष्टकाकर्मणि तथा दर्शनादिति। तन्न रुचिरम्। तथा हि यज्ञवदित्यन्तमेकं सूत्रम्, स्त्रीभ्यश्चेत्येकम्। उपसेचनं च कर्षुषु सुरया तर्पणेन लाञ्जनेनानुलेपनं स्रजश्चेत्येकम्।

तत्र प्रथमस्यार्थः, अन्वष्टकासु सर्वासामष्टकानां कर्म भवति इति शेषः। केन द्रव्येणेत्याकाङ्क्षायां पार्श्वसक्थिसव्याभ्यामिति। सव्यशब्दस्य उत्तरपदत्वं छान्दसम्। पशुसम्बन्धिभ्यामिति शेषः। परिवृते सर्वतः प्रच्छादिते आवसथ्याग्निसदने। इतिकर्त्तव्यतापेक्षयामाह पिण्डपितृयज्ञवत्, अपराह्णे पिण्डपितृयज्ञविधिना।

अथ द्वितीयसूत्रार्थः। पिण्डपितृयज्ञवदित्यनेन पित्रादित्रयस्य पिण्डदानं प्राप्तम्। ततोऽधिकमुच्यते स्त्रीभ्यश्चेति। मातृपितामहीप्रपितामहीभ्यः पिण्डान् ददातीति शेषः। चकारः समुच्चये। अत्र सामान्योऽपि स्त्रीशब्दः पित्रादिसान्निध्यात् मात्रादिपरः।

अथ तृतीयस्यार्थः, न केवलं स्त्रीभ्यः पिण्डान् दद्यात् किन्तु उपसेचनं कुर्य्यात्। कयेत्याकांक्षायां सुरया मद्येन। कुत्रेत्याकांक्षायां कर्षुषु खातेष्वित्यर्थः। न केवलं सुरया किन्तु तर्पयत्यनेन इति तर्पणसाधनं सक्थ्वादि, तेन। अञ्जनं सौवीराञ्जनं तदभावे लौकिकाञ्जनम्। अनुलेपनं सुगन्धिद्रव्यं चन्दनादि। स्रजः अतिप्रसिद्धसुरभिपुष्पमालाः। चकारः समुच्चये। दद्यादिति शेषः। तथाच इदमावसथ्याग्निसदने कर्मान्तरं न त्वष्टकाश्राद्धविषयम्। अनेनैवा-

स्वारस्येन अन्वष्टकाकर्म्मणि इति यो हेतुरुपन्यस्तः सोऽप्यसंलग्नः। एतत्कर्म्मानन्तरं श्राद्धे यदि योज्यं तर्हि एतत्कर्म्मपद्धतौ भाष्येऽपि प्रथमरेखायां, अस्मत्पितः अमुकशर्म्मन्, एवं पितामहप्रपितामहयो-रित्यवनेजनादिकं लिखित्वा द्वितीयरेखायां अमुकगोत्रे अमुकदेवि अस्मन्मातः इत्यादि लिखित्वा, एवं पितामहीप्रपितामह्योरित्येव लिखितम्। न तु मातामहादीनां किंचिद्विहितमिति माता-महादिश्राद्धलोपापत्तिरिति सुधीभिरवधेयम्।

अथ युगादिनिरूपणम्।

माघीत्यादिविष्णुस्मृतिवचो व्याख्यायते। माघी माघपौर्ण-मासी मघायुक्ता पौर्णमासी माघीति निरुक्तेः। प्रौष्ठपद्यूर्द्ध्वं कृष्ण-त्रयोदशी आश्विनकृष्णत्रयोदशीत्यर्थः। व्रीहियवपाकौ च इत्यत्र व्रीहियवपाकोपलक्षितकालमात्राश्रयणे व्यवस्थापत्तिः। इति कार्त्तिकशुक्लनवमी वैशाखशुक्लतृतीया च ग्राह्या। इति युगादि-चतुष्टयमित्यर्थः।

तथाच ब्राह्मे,—

वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम्।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि॥
तथा भाद्रपदे कृष्णत्रयोदश्यां च द्वापरम्।
माघे तु पौर्णमास्यां च घोरं कलियुगं स्मृतम्॥
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः। इति।

अत्र भाद्रपदे कृष्णत्रयोदश्यां इति शुक्लादिमासाश्रयणेनाश्विन-कृष्णत्रयोदशीत्यर्थः।

भविष्येऽपि,—

वैशाखशुक्लस्य तु या तृतीया,
नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे,
त्रयोदशी पञ्चदशी च माघे ॥
एता युगाद्याः कथिताः पुराणे,
अनन्तपुण्यास्तिथयश्चतस्रः ।
पानीयमप्यत्र तिलैर्विमिश्रं,
दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समाः सहस्रं,
रहस्यमेतत् पितरो वदन्ति ।

अत्र मासेऽपिकारेण श्राद्धे सुतरां फलातिशयः ।

तथाचमात्स्ये,—

कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ।
हायनादिद्विसाहस्रं पितॄणां तृप्तिमावहेत् ॥
आसु स्नानं जपो होमः पुण्यानन्त्याय कल्पते । इति

एवमादिवाक्यानां अग्निहोत्रादिनित्यकर्मसु फलोक्तिवत् प्रशंसा-परत्वात् न पृथक्कर्मोपादकत्वम्। तस्मादिप्रमिश्रैरेतच्छ्राद्धचतुष्कं पृथक् काम्यं च तेन धुरिरोचनयोर्देवतात्वमित्यादि यल्लिखितं, तत्सर्वं पूतिकुष्माण्डायितमिति मन्तव्यम् । तस्मात् पुरूरवोमाद्रवसोरेव(१) देवतात्वसमाचारः समीचिनः ।

(१) पुरुरवोमाद्रवयोरेव ।

यत्तु भविष्ये पुनः कुत्रचित्,—

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम् ।

इत्यादिमात्स्यवाक्यमपि तत्कल्पान्तरविषयमेव । कृतं सत्य-युगः निरगान्निर्गतमुत्पन्नमित्यर्थः ।

अथ महालयश्राद्धम् ।

वृहन्मनुः,—

नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः ।

स महालयसंज्ञः स्यात् गजच्छायाह्वयस्तथा ॥

तच्च नित्यं काम्यञ्च ।

तत्र श्राद्धाकरणे दोषमाह, गार्ग्यः,—

सूर्य्ये कन्यागते श्राद्धं यो न कुर्यात् गृहाश्रमी ।

धनं पुत्राः कुतस्तस्य पितृनिःश्वासपीड़या ॥

शाट्यायनिः फलाश्रवणमाह,—

नभस्यस्यापरे पक्षे तिथिषोड़शकं च यत् ।

कन्यागतान्वितं चेत्स्यात् स कालः श्राद्धकर्मसु ॥

लग्ने वा यदि वा मध्ये यत्र कन्यां रविर्व्रजेत् ।

स पक्षः सकलः पुण्यस्तत्र श्राद्धं विधीयते ॥

तथाच,—

पुण्यः कन्यागतः सूर्य्यः पुण्यः पक्षश्च पञ्चमः ।

कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्य उच्यते ॥

वृहन्मनुः,—

आषाढ़ीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।

काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् ॥
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् ।

फलमाह जावालिः,—
पुत्रानायुस्तथारोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमे दत्वा श्राद्धकामांस्तथापरान् ॥

अत्र न कन्यानियमः,
आषाढ़ीमवधिं कृत्वा यः स्यात् पक्षस्तु पञ्चमः ।
तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्नवा ॥

इति मनूक्तेः ।

तत्र पक्षश्राद्धं मात्स्ये,—
कन्यां गते सवितरि दिनानि दश पञ्च च ।
पार्वणेन विधानेन तत्र श्राद्धं विधीयते ॥

पार्वणेनेति दर्शविधिनेत्यर्थः ।
दर्शश्राद्धं तु यत् प्रोक्तं पार्व्वणं तत् प्रकीर्त्तितम् ।

इति शातातपोक्तेः ।

यत्तु,—कन्यां गते सवितरि यान्यहानि तु षोड़श ।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥

इति ब्रह्मवाक्यं, तत् तिथिवृद्धौ वेदितव्यम् ।

कार्ष्णाजिनिः,—
नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने ।
नैव नन्दादि वर्ज्यं स्यात् नैव वर्ज्या चतुर्द्दशी ॥

पक्षश्राद्धे चतुर्द्दश्यपि न वर्ज्या । अन्यपक्षेषु वर्ज्यैव ।

पक्षान्तराणि ब्रह्माण्डे,—

अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्य्यं दिने दिने।

त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा॥

तत्र पक्षश्राद्धाधिकारिणः।

स्मृतौ,—अग्निहोत्रि-जितक्रोध-स्नातक-व्रतचारिणः[१]।

पक्षश्राद्धं प्रकुर्वन्ति नेतरे तु कदाचन॥

दिने दिने इति वीप्सया सकलः पक्ष इत्येकः पक्षः। त्रिभागहीनमिति पञ्चमीमारभ्येत्येकः पक्षः। तृतीयो भागः त्रिभागः। सङ्ख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यत इति कैय्यटोक्तेः। तेन हीनं पक्षमित्यर्थः। आद्यस्यापि भागस्य तृतीयत्वं चालिनीन्यायेन बोध्यम्। कला तु षोड़शो भाग इत्यादौ तथा दर्शनात्। त्रिभागमिति दशम्यादिपक्षः, अर्द्धमित्यष्टमीप्रभृति-पक्षः, इति कल्पतरुकारादिभिः सर्वैर्व्याख्यातम्। एतच्च "अथ अपर-पक्षे श्राद्धं पितृभ्यो दद्यात् पञ्चम्यादिदर्शान्तमष्टम्यादिदशम्यादि सर्वस्मिन्निति" गौतमसूत्रानुगतं। कात्यायनोऽपि,—"अपरपक्षे श्राद्ध-मूर्द्ध्वं चतुर्थ्या यदहः सम्पद्यते सप्तम्या ऊर्द्ध्वं यदहः सम्पद्यते, ऋते चतुर्द्दशीं शाकेनाप्यपरपक्षं नातिक्रमेत्"। इति। अत्र पूर्वं पूर्वं प्रशस्तं, अङ्गभूमा फलभूमेति सिद्धान्तात्।

नतु त्रिभागहीनमिति पक्षस्य भागत्रयकरणे षष्ठ्यादित्वं प्रतीयते इति चेदुच्यते।

---

(१) ब्रह्मचारिणः।

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्द्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥

इति योगीश्वरोक्तेः ।

युवानस्तु गृहे यस्य मृतास्तेषां प्रदापयेत् ।
चतुर्द्दश्यां क्रिया कार्य्या अन्येषां तु विगर्हिता ॥

इति स्मृत्यन्तराच्च । चतुर्द्दश्या निषिद्धत्वात्तां विना भागत्रय-विधानेन पञ्चम्यादिपक्षः सुघट एव ।

ननु विष्णुधर्मोक्तौ षष्ठ्याद्येकादश्यादिपक्षौ सुव्यक्तौ, तौ किमिति नोपन्यस्तौ इति चेत् उच्यते ।

तथाच विष्णुधर्मोत्तरे,—

उत्तरात् त्वयनाच्छ्राद्धे श्रेष्ठं स्याद्दक्षिणायनम् ।
चातुर्मास्यं च तत्रापि प्रसुप्ते केशवे हितम् ॥
प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः ।
पञ्चम्यूर्द्धं च तत्रापि दशम्यूर्द्धं ततोऽप्यति ॥
मघायुक्तापि तत्रापि शस्ता राजंस्त्रयोदशी ।

इति क्रमेण प्राशस्त्योक्तिरेव, न तु सर्वथा षष्ठ्याद्येकादश्यादि-पक्षौ ।

ननु त्रिभागहीनमित्यादिपक्षेषु उत्तरोत्तरलघुकालोपदेशात् दशम्यादिपक्षस्य सन्निधानाच्च त्रयोदश्यादिकः पक्षोऽस्तु नाष्टम्यादि-पक्षः इति चेत्, उच्यते । आदौ पक्षोपक्रमात्पक्षस्यैव विभाज्य-त्वात् अर्द्धभागः पक्षस्यैव ।

उपक्रमस्थश्रुत्यनुरोधेन दुर्बलस्य क्रममात्रस्य बाधेऽपि न क्षतिः ।

सर्वत्र पचपदानुषङ्गं विनाऽनन्वयात् पचस्यैवानन्तरनिर्द्दिष्टत्वं। अर्द्धत्वे पुनः पचस्य विभागस्य च अर्द्धत्वान्वयौचित्यादुपक्रमानुरोधेन त्रिभागान्वयेऽपि मासादिव्यवच्छेदाय पचभागान्वयेन पचोपस्थितेः पचस्यैव सन्निधानम्। पञ्चम्याद्यष्टम्यादिपचौ गौतमादिभिर्व्यक्तमुक्तौ च। एतेन श्राद्धविवेककृद्भिर्यल्लिखितं, तत् सर्वं पूतिकुष्माण्डायितमिति मन्तव्यम्।

तैः पुनर्यल्लिखितं कृष्णपचस्य पञ्चदशतिथ्यात्मकस्य विभाज्यत्वात् दिने दिने इति वीप्सया पचश्राद्धपचः। ततः पञ्चदशश्राद्धानि इति। एवं तिथिह्रासे एकस्मिन्नेव दिने श्राद्धयोग्यतिथिद्वयलाभे श्राद्धद्वयमिति हेयमेवैतत्। "नैकः श्राद्धद्वयं कुर्यात्" इति वाक्यादेव एकदिने समानजातीयस्य श्राद्धान्तरस्य निषेधात्।

उक्तपचचतुष्टयाशक्तौ पञ्चम्या ऊर्द्धं जन्मनचत्रादिवर्जिते कस्मिंश्चित् एकस्मिन् दिने श्राद्धं कार्य्यम्।

तथा च स्कान्दे नागरखण्डे,—

आषाढ्याः पञ्चमे पचे कन्यासंस्थे दिवाकरे।
एकस्मिन्नप्यहोरात्रे ततः श्राद्धं करोति यः॥
तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्।

पञ्चम्या ऊर्द्धमित्यत्र भविष्ये,—

हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन्।
पञ्चम्या उत्तरे दद्यादुभयोर्वंशयोर्ऋणम्॥

पितृमातामहयोः कुलयोः ऋणमिव ऋणमित्यवश्यं शोध्यमित्यर्थः।

तत्रैकदिनपचे वर्ज्यमाह गार्ग्यः,—

मन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥

स्मृतिसमुच्चये,—

त्रिजन्मनि त्रिपादेषु कविनन्दामघासु च ।
काम्यश्राद्धं न कुर्वीत व्यतीपाते दिनक्षये ॥

वृद्धगार्ग्यः,—

प्राजापत्ये च पौष्णे च पित्रर्क्षे भार्गवे तथा ।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति ॥

नन्दाः प्रतिपत्षष्ठ्येकादश्यः भार्गवदिनं शुक्रवारः, त्रिजन्मनि जन्मदिने जन्मनक्षत्रे जन्मराशौ च, एतदष्टमचन्द्रमाद्यादेरुपलक्षणम् । त्रिपदनक्षत्राणि कृत्तिकापुनर्वसूत्तरफल्गुनीविशाखोत्तराषाढापूर्व्वभाद्रपदानीति षट् । प्राजापत्यं रोहिणी । पित्रर्क्षं मघा । पौष्णं रेवती । व्यतीपात इति विष्टिवैधृत्योरुपलक्षणम् ।

महाभारते,—

नक्षत्रेण न कुर्वीत यस्मिन् जातो भवेन्नरः ।
न प्रौष्ठपदयोः कार्य्यं तथाग्नेये च भारत ॥
दारुणेषु च सर्व्वेषु शुक्रवारे च वर्ज्जयेत् ।

दारुणानि ज्योतिःशास्त्रे,—

दारुणं चौरगं रौद्रं ऐन्द्रं नैर्ऋतमेव च ॥ इति ।

औरगं अश्लेषा, रौद्रं आर्द्रा । ऐन्द्रं ज्येष्ठा । नैर्ऋतं मूला ।

मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति ।

इति भविष्योक्तो यो निषेधः, स पक्षश्राद्धसङ्कल्पेतरविषयः ।

तथा च मार्कण्डेयः,—

पक्षश्राद्धे त्रयोदश्यां सपिण्डं श्राद्धमिष्यते ।
संकल्पस्य वशादेव मघायां चैव तत्तथा ॥
संकल्पनाशं कुर्वीत संकल्प्य यदि शक्तिमान् ।
पितृभिर्नरकं यायादेकविंशतिमेव सः ॥ इति ।

आहिताग्निस्तु पक्षादिप्रकारचतुष्टयाशक्तौ महालयपक्षे चन्द्र-क्षयविशिष्टामावास्यायामेव महालयश्राद्धं कुर्यात् ।

न पैतृयज्ञिको होमो लौकिकेऽग्नौ विधीयते ।
न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ॥ इति मनूक्तेः ।

यस्मात् पितृयज्ञाङ्गभूतोऽग्नौकरणहोमो लौकिकेऽग्नौ न विधीयते किन्तु दक्षिणाग्नौ, स तु दर्श एव । तदुद्धरणस्य विद्यमानत्वात् । अपरपक्षे यदहः सम्पद्येत अमावास्यायां विशेषेण इति वशिष्ठोक्तेः । यदा निरग्निस्तु अमावास्यायां महालयं कुर्यात्, तदा चन्द्रक्षयविशिष्टायां अमावास्यायामेव इति तस्य नियमः । किन्तु महालयश्राद्धस्य इतरपार्वणत्वात् "सप्तमात् परतः पञ्च मुहूर्त्ताः पार्वणस्य इतरस्य तु" इत्युक्त्यनुसारेण यस्मिन् दिने तादृशपार्वणकाले दर्शः स्यात् तद्दिन एव महालयश्राद्धं कुर्यात् । महालयश्राद्धे धूरिरोचनयोर्दैवतात्वम् । काम्येन नित्यत्वसिद्धेः ।

पार्वणेन विधानेन कुर्यादापरपक्षिकम् ।
विश्वेदेवाः परं चात्र विज्ञेयौ धूरिरोचनौ ॥ इति स्मृतेश्च ।

अत्राधिमासपाते शुद्धमास एव महालयश्राद्धं कार्यमिति कालाशुद्धिप्रकरणे लिखितम् ।

अस्मिन् कन्यागतापरपक्षे दैवाच्छ्राद्धासम्भवे ब्रह्माण्डे,—

यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तथा ॥
कन्यां गते सवितरि पितृराजानुगामनात् ।
तावत्प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम् ॥
ततो वृश्चिकमायाते निराशाः पितरो नृप ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥

इत्यादिवचनात् तुलायां सर्वत्र श्राद्धम् । येयं दीपान्वितेति वचनस्य अमावास्याप्रशंसापरत्वम् । यावद्वृश्चिकदर्शनं इति वचनात् वृश्चिकेऽपीति केचित् । तन्न आचारविरुद्धत्वात् युक्त्यसहत्वाच्च । तथाहि वृश्चिकदर्शनं यावदिति तुलैव प्राप्यते न तु वृश्चिकमासः । अतएव यावच्च कन्यातुलयोरित्येवोक्तम् । ततो वृश्चिकमायाते इत्युक्तेर्न सर्वथा वृश्चिके श्राद्धप्रसङ्गोऽपि । किं च यावच्च कन्यातुलयोरित्यादिवचनैस्तुलायां अपरपक्षे सर्वत्र प्राप्तौ

"सामान्यविधिरस्पष्टः संह्रियेत विशेषतः"

इतिन्यायेन,

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यात् न चेद्दत्तं पितॄणां वै महालये ॥

इति सुमन्तुवचनेन कार्त्तिकामावास्यैव अनुकल्पत्वेन विहिता । अतएवास्य न प्रशंसापरत्वम् फलोल्लेखाभावात् ।

आश्विनस्यापरे पक्षे प्रथमे कार्त्तिकस्य तु ।
यस्तु श्राद्धं प्रकुर्वीत सोऽश्वमेधफलं लभेत् ॥

इति मार्कण्डेयवचनन्तु केवलकाम्यश्राद्धान्तरं प्रतिपादयति। न तु नित्यश्राद्धम्। संन्यासिनो महालयश्राद्धं द्वादश्यामेव।

तथाच वायवीये,—

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्य्यात् यथाविधि।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु॥

पार्वणविधिनेत्यर्थः। अत्र यतेर्द्वादशी नियता। न तु द्वादश्यां यतिनियमः। तत्र अन्यश्राद्धस्यानिषेधात्।

मघात्रयोदशीश्राद्धं, शंखः,—

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च॥

मनुः,—

यत्किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम्।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च॥

यत्किञ्चिदिति अनिषिद्धश्राद्धद्रव्यविषयमेवेति ग्राह्यम्। न तु हविष्यद्रव्यम्। सामान्येन श्राद्धेषु शुद्धद्रव्यस्यैव उक्तत्वात्।

विष्णुधर्मोत्तरे,—

मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी।
तत्राक्षयं भवेच्छ्राद्धं मधुना पायसेन च॥

ब्राह्मे,—

आश्वयुज्यां च कृष्णायां त्रयोदश्यां मघासु च।
प्रावृडृतौ यमः प्रेतान् पितॄनथ यमालयात्॥
विसर्ज्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम्।

क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतं च स्वकं कृतम् ॥
कांक्षन्तः पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात्तांस्तत्र विधिना तर्पयेत् पायसेन तु ॥
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा ।
ग्रासमात्रं परगृहाल्लभते यः प्राप्नुयान्नरः ॥
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम् ।
यो वा समर्द्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् ॥
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ।
त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च ॥
नास्मात् परतरः कालः श्राद्धेष्वन्यत्र वर्त्तते ।
यत्र साक्षात्तु पितरो गृह्णन्त्यमृतमक्षयम् ॥

अत्र सर्वत्र वर्षाशब्द आषाढ्यवधिपञ्चमपक्षपरः । आश्वयुज्यामित्यादिब्रह्मोक्तिसमानत्वात् । अत्र मधुसर्पिषोः दानं अक्षयफलकामिन एव, न तु सर्वेषां नियतम् ।

यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।
तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥

इति याज्ञवल्क्योक्तेर्मनूक्तिस्वारस्याच्च ।

कन्यागतापरपक्षाधिकारे,—

तत्रापि महती पूजा कर्त्तव्या पितृदैवते ।
त्यक्त्वे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत् ॥

इति देवीपुराणोक्तेः ।

मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति ।

इति स्मृतिसमुच्चयोक्तेश्च, पुत्रिणा वर्षात्रयोदश्यां पिण्डरहितं श्राद्धमेव[1] कार्य्यम्। आहिताग्नेः पित्रर्चनम्, "पिण्डैरेव ब्राह्मणानपि भोजयेत्" इति कात्यायनवचनं पिण्डपितृयज्ञपरमिति तैरपि युगादिवत् पिण्डरहितं श्राद्धं कार्य्यमेव। ज्येष्ठः प्रथमोत्पन्न इति प्राचीनाः। विद्यमानपुत्राणां ज्येष्ठ इति मदनपारिजातादयः।

कृष्णपक्षे त्रयोदश्यां श्राद्धं यः कुरुते नरः।

पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम्॥

इत्यङ्गिरोवचनेन।

मघासु कुर्वतस्तस्य ज्येष्ठपुत्रो विनश्यति।

इति वचनेन च श्राद्धनिषेधः पिण्डदाननिषेधपर एव। पूर्वोक्तवचनात्, केवलमघायां केवलत्रयोदश्यां च श्राद्धविधानाच्च। तथाच वायवीये,—

मघासु कुर्वन् श्राद्धानि सर्वान् कामानवाप्नुयात्।

प्रत्यक्षमर्चितास्तेन भवन्ति पितरस्तथा॥

मघानक्षत्रस्य पितृदैवतत्वात् प्रत्यक्षमित्युक्तं।

विष्णुधर्मोत्तरे,—

प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी।

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः॥ इति।

तत्र यन्नोद्देस्थितितत्त्वकारैः केवलमघायां केवलत्रयोदश्यां च श्राद्धविधायकवचनं विध्यन्तरकल्पनागौरवात् अवयुत्यानुवाद इत्युक्तम्। तन्न रुचिरम्। नित्यशब्दोपादानानुपपत्तेः। अमावास्या

(१) श्राद्धम्।

तिस्रोऽष्टका इत्यादि विष्णूक्त्यादिना केवलत्रयोदश्यां श्राद्धसमा-
चाराच्च ।

ननु— पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ।

तस्माद्दद्यात् सदा युक्तो विद्वत्सु ब्राह्मणेषु च ।

इति शातातपवचने सदा शब्दोक्तावपि केवलमघायां किमिति श्राद्धं न क्रियते, इति चेदुच्यते । एतदपि तस्यां त्रयोदश्यां मघा-योगस्य प्रायः सम्भवात् त्रयोदशीपरमेवेति बोध्यम् । केवलमघायां यच्छ्राद्धं तत्काम्यम् । तथा मघायुक्तत्रयोदश्यामपि काम्यम् । केवलत्रयोदशीश्राद्धन्तु नित्यमेवेति सर्व्वं समञ्जसम् ।

गजच्छायायोगे तु फलाधिक्यम्, तथाच यमः,—

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।

याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्त्तिता ॥

स्मृत्यन्तरे,—

कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः ।

यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥

पितृदैवत्यं मघा, याम्या तिथिः त्रयोदशी, करः हस्तानक्षत्रं ।

मात्स्ये,— गयाश्राद्धसमयोगाः,

भरणी पितृपक्षे तु महती परिकीर्त्तिता ।

तस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ॥

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।

याम्या तिथिर्भवेत् सा हि गजच्छाया प्रकीर्त्तिता ॥

आषाढ्याः पञ्चमे पक्षे गयामध्याष्टमी स्मृता ।

त्रयोदशी गजच्छाया गयातुल्ये तु पैतृके ॥

इति महालये योगविशेषफलम्।

शस्त्रहतस्य महालयश्राद्धविचारः।

ब्राह्मे,— तर्पणीयाश्चतुर्द्दश्यां लुप्तपिण्डोदकक्रियाः।

शस्त्रेण निहता ये वै तेषां तत्र प्रदीयते ॥

वै इति नियमवाचकम्। तथाच "वसन्ते ब्राह्मणोऽग्नीना दधीत" इतिवदुभयनियमः। चतुर्द्दश्यां शस्त्रहतस्य एव श्राद्धम्, नान्येषाम्। शस्त्रहतस्य चतुर्द्दश्यां नान्यस्यां तिथावित्यर्थः।

तत्र तस्य श्राद्धमेव एकोद्दिष्टविधिनैव।

तदाह मरीचिः,—

समत्वमागतस्यापि पितुः शस्त्रहतस्य वै।

एकोद्दिष्टन्तु कर्त्तव्यं पितॄणां तु महालये ॥

समत्वमागतस्य कृतसपिण्डनस्यापीत्यर्थः।

शस्त्रहतसंज्ञा पारिभाषिकी।

तथाच भगवतीपुराणे,—

पश्चिमत्वम्रगैर्ये तु शृङ्गिदंष्ट्रिनखैर्हताः।

पतनानशनप्रायैर्वज्राग्निविषबन्धनैः ॥

मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः।

वृहन्मनुः,—

सर्पैर्हता रणे व्याघ्रैः कुम्भीरैश्च गजैर्वृषैः।

उत्पातेन च वज्रैश्च श्राद्धं तेषां चतुर्द्दशीम् ॥

मरीचिः,— विषशस्त्रश्वापदादितिर्यग्ब्राह्मणघातिनाम्।

चतुर्द्दश्यां क्रिया कार्य्या अन्येषां तु विगर्हिता ॥

घातमेषामस्तीति घातिनः, तैर्हतानामित्यर्थः ।

देवीपुराणे,—

आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् ।

चतुर्द्दश्यां भवेत् पूजा ह्यमावास्यां तु कामिकी ॥

अत्र कामिकी पूजा च षाट्पुरुषिकमपरपक्षश्राद्धम् ।

अपरपक्षप्रकरणे प्रतिपदादिषु प्रतितिथिफलकामना उक्तास्तत्र एकदिनकरणपक्षे शस्त्रहतपितृकस्य पुत्रस्य नाधिकारः, कामनापेक्षायां चतुर्द्दश्यां श्राद्धं कृत्वैव दर्शे काम्यं श्राद्धं कुर्यादित्यर्थः ।

अमावास्यायां फलन्तु वायवीये,—

सर्व्वान् कामानवाप्नोति स्वर्गं चानन्त्यमश्नुते । इति ।

एतेन मघात्रयोदश्यां तस्य नाधिकारः ।

तथाच स्मृतिरपि,—

मघाश्राद्धं न कुर्वीत अकृत्वा शस्त्रघातिने ।

कृत्वा तु विधिवत्तस्मै शेषं दर्शे समापयेत् ॥

विधिवदिति षाट्पुरुषिकश्राद्धं कुर्यात् इत्यर्थः ।

अशस्त्रेण हताः केचित् यत्र शस्त्रैर्निपातितः ।

तेभ्यः पिण्डत्रयं देयं कर्त्तव्यमपरेऽहनि ॥

इति शास्त्रान्तरात् । कर्त्तव्यमिति मातामहवर्गस्यापीतिशेषः । "पितरो यत्र पूज्यन्ते" इति गौतमोक्तेः । एवं च सति "चतुर्द्दश्यां भूतिकाम" इति हारीतोक्तिः, चतुर्द्दश्यामायुर्द्धनर्द्धिरित्यापस्तम्बोक्तिः ।

आतिश्रेष्ठ्यं[१] त्रयोदश्यां चतुर्दश्यां वक्षप्रजाः।
प्रीयन्ते पितरश्चात्र ये शस्त्रेण हता रणे॥

इति मनूक्तिरपि पञ्चश्राद्धसङ्कल्पविषयैव। केचित्तु दशम्यादि सङ्कल्पिनोऽपि चतुर्दशी निषिद्धैव इत्याहुः।

तथाच मनुः,—

कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतरा॥ इति।

इति महालयश्राद्धम्॥

अत्यन्तनिर्द्धनस्य [२]नित्यश्राद्धकरणाशक्तौ,

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्।
हेमन्तग्रीष्मवर्षासु पञ्चयज्ञिकमन्वहं॥

इति मनुना वर्षमध्ये श्राद्धत्रयकरणेऽपि प्रत्यवायाभाव उक्तः। अत्र ऋतुत्रये मासस्यास्फुटत्वात् स्फुटमाह मात्स्ये,—

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्।
कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षेषु सर्व्वदा॥

तत्र दिनममावास्या इति प्रतिभाति।

तत्त्रयाशक्तौ स्कान्दे,—

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे।
एकस्मिन्नप्यहोरात्रे तत्र श्राद्धं करोति यः॥
तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्। इति।

कन्यापरपक्षश्राद्धप्रकारचतुष्टयात् पृथगेवमिति बोध्यम्॥ इति।

---

(१) आतिश्रैष्ठ्यम्। (२) सर्वनित्य-।

अथ प्रदीपामावास्याश्राद्धम्।

तच्च नित्यं फलाश्रवणात्। कस्मिंश्चिद्वाक्ये फलोक्तेः काम्यमपि। वाक्यरत्नावल्याम्,—

तुलां प्रत्यागते सूर्य्ये अमावास्यातिथिर्भवेत्।
उपास्तसमये दीपान् पितॄन् दद्याच्छुचिः शुचिः॥

शुचिः शुचिरिति द्विरोपोषितः इति स्मृतिरत्नमालायाम्।

तुलास्थे भास्करे दर्शे श्राद्धं कृत्वा पराह्णिकम्।
दीपदानं ततः कुर्य्यादुपास्तसमये रवौ॥

उपास्तसमयः त्रिमुहूर्त्तात्मकः प्रदोषकालः।

तथाच ज्योतिषे,—

तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः।
उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम्॥ इति।

तत्र पूर्व्वेद्युर्दिवा अमावास्याया अभावेऽपि उपास्तसमये तत्सम्बन्धे प्रदीपदानं तत्रैव। दर्शश्राद्धादिकं तु परदिने।

अमा वसति यद्रात्रौ तत्र दीपं प्रदापयेत्।
तर्पणं पिण्डदानं च श्राद्धं चैवापरेऽहनि॥ इति स्मृतेः।

यदोभयदिने प्रदोषव्याप्तिः, तदा परदिने दीपदानम्।

दण्डैके रजनीयोगे दर्शस्य स्यात्परेऽहनि।
तदा विहाय पूर्व्वेद्युः परेद्युः सुखरात्रिका॥

इति ज्योतिषवचनात्। उभयदिने प्रदोषव्याप्त्यभावेऽपि परत्र, पूर्व्वोक्तपारणानुरोधात्।

भूताहे ये प्रकुर्व्वन्ति उल्काग्रहणमचेतसः।

निराशाः पितरो यान्ति शापं दत्वा सुदारुणम् ॥

इति ज्योतिषवचनाच्च । दीपदाने सायंसमागम एव कालः, उपास्तसमय इत्युक्तत्वात् ।

तद्विधिश्च परिशिष्टे,—

तुलास्थे भास्करे दर्शे उपास्तसमये रवौ ।
एकैकस्य पितॄंस्त्रींस्त्रीन् प्रदद्यात्पितृयज्ञवत् ॥
शरत्पक्वशौचिपिष्टैस्तुल्लिप्तैस्तु पूपकैः ।
आधारैर्हविषा दीपान् प्रदद्यादन्नलेपितान् ॥
रजमालकृते देशे प्रस्तीर्णे तिलदर्भकैः ।
श्यामावर्णीजकुसुमैरर्चितैर्गन्धपुष्पकैः ॥
कार्पासवर्त्तिभिश्चैव शाल्मल्यर्कविवर्जितैः ।
वसामेदोविरहितैर्न वेश्मनि कदाचन ।
दद्यादान्यच्च च गृहे धूपं गुग्गुलु सर्पिषा ॥
ज्योतिर्लोकमवाप्नोति तुलास्थे दीपदर्शिते ।
पश्यन् वै दिशमाकाशं वैश्वदेवपुरःसरम् ॥
पितॄन् पितामहानन्यान् दर्शयेच्च पृथक्पृथक् ।
आयुर्बलं धनं पुत्रमारोग्यं सुमनोरथम् ॥
दीप्यमानं प्रदीपं च दत्वा शंसन्ति दातरि ।

पितृयज्ञवत् तर्पणवत्, "पितृयज्ञस्तु तर्पणमिति" कात्यायनोक्तेः। तेन विश्वेदेवानां प्रत्येकमेकैकं दीपान् दद्यात् । सनकादीनां द्वौ द्वौ। पितॄणां त्रीन् त्रीन्। विमात्रादीनां पुत्ररहितानां पितृव्यादीनां च एकैकम्। अत्र प्रमाणमस्मत्कृताचारसारे

खिन्न-पूपमय-घृताक्त-तूलवर्त्तिकं दीपं प्रत्येकमेकमेकं पूर्वदिगाकाशं पश्यन् सर्वेभ्यो विश्वेभ्यो देवेभ्यो दद्यात्। ततः सनक एतौ दीपौ इन्तेति उत्तरदिगाकाशं पश्यन् सनकादिभ्यः प्रत्येकं द्वौ द्वौ दीपौ दद्यात्। तदनन्तरं अमुकसगोत्र अस्मत्पितरमुकशर्म्मन् एते दीपास्तुभ्यं स्वधा नम इति दक्षिणदिगाकाशं पश्यन् पित्रादिभ्यः प्रत्येकं त्रींस्त्रीन् दीपान् दद्यात्। ततो विमातृ-पितृव्यादिभ्य-स्त्वावाहनमन्त्रेण प्रत्येकं एकैकं दीपं दद्यात्। अमुकसगोत्रे अस्मज्ज्येष्ठ-मातरेष ते दीपः स्वधा नम इति दद्यात्। तत आर्द्रकनारिकेलेक्षु-खण्ड-क्रमुकखण्ड-श्यामाकलतापुष्पकपर्दिकादीनि सर्वत्र क्रमेण सव्यतया निवीतितया अपसव्यतया च समर्पयेत्। ब्राह्मण-भोजनम्। अच्छिद्रावधारणम्। तत उल्कादर्शनम्।

तत्र ग्रहणमन्त्रः ब्राह्मे,—

अस्त्रशस्त्रहतानां च भूतानां भूतदर्शयोः।

उज्ज्वलज्योतिषा देहं दहेयं व्योमवर्त्तिनाम्॥

दानमन्त्रः,

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।

उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्[१]॥

विसर्जनमन्त्रः,

पितृलोकं परित्यज्य आगता ये महालये।

---

(१) क्रत्वादिदेवताः सर्वाः पितरश्च महर्षयः।
सर्वे ते व्यपगच्छन्तु अनया ज्वालया सह॥
कस्मिंश्चित् पुस्तके इदमधिकम्।

उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो प्रजन्तु ते ॥

ततो गृहदेवताभ्यो जीवद्भ्यश्च बन्धुभ्यो दीपान् दद्यात् ।

इति प्रदीपामावास्याश्राद्धम् ॥

अथनवान्नश्राद्धम् ।

तच्च नित्यं ।

तथाच शातातपः,—

नवोदके नवान्ने च गृहच्छादन एव च ।

पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥

तस्माद्दद्यात् सदा युक्तो विद्वत्सु ब्राह्मणेषु च ॥

इति सदाशब्दप्रयोगात् । नवोदके वर्षोपक्रमे ।

अन्यत्र दोषोक्तिरपि,—

व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।

न तावाद्यौ महाराज विना श्राद्धं कथञ्चनन ॥

तथाहि व्रीहिपाककाले वृश्चिके, यवपाककाले मेषे च नवान्नाशनार्हे यस्मिन् कस्मिंश्चिद्दिवसे नवान्नश्राद्धद्वयम्। अत्रास्मद्देशे यवगोधूमयोः सर्वत्र प्रचाराभावात् केचित् यवान्नश्राद्धं न कुर्वन्ति ।

तत्र *नवान्नतिथ्यादि, ज्योतिःशास्त्रे,*—

मैत्रूयादितिशिवाग्नेषु विभौमशनिवासरे ।

अन्नप्राशनवत् कुर्य्यात् नवान्नफलभक्षणम् ॥

नवान्नं नैव नन्दायां न च सुप्ते जनार्द्दने ।

न कृष्णपक्षे धनुषि न तुलायां कदाचन ॥

द्रष्टव्यम्। अत्र[1] पद्धतिः गृहादवहिरङ्गणे सामान्यतो वेदीं कृत्वा गोमयेनोपलिप्य सिततण्डुलरजसा चतुरस्रमण्डलं कृत्वा पूर्वस्यां दिशि दश कोष्ठाः, उत्तरस्यां प्रत्येकं मध्ये एकरेखायुक्ताः सप्त-कोष्ठाः। दक्षिणस्यां प्रत्येकं मध्ये द्विरेखायुक्ता द्वादशकोष्ठाः। त्रिमातृपितृव्याद्यर्थं एकैककोष्ठाः। तत्र पूर्वस्यां प्रतिकोष्ठं सव्यो-भूत्वा दक्षिणत उत्तरसंस्थं एकैककुशस्थापनं कुर्यात्। उत्तरस्यां प्रतिकोष्ठं निवीती भूत्वा पश्चिमतः प्राक्संस्थं कुशद्वयस्थापनम्। दक्षिणस्यां प्रतिकोष्ठं अपसव्यः भूत्वा पश्चिमतः प्राक्संस्थं मोटकस्थापनम्। पूर्वोत्तरकोष्ठेषु तण्डुलश्यामलतापुष्पादिप्रक्षेपः। दक्षिणपार्श्वे तिल-श्यामलतादिप्रक्षेपः, ततः ताम्रपात्रे जलं पूरयित्वा गन्धपुष्पतिल-कुशमोटकादि प्रक्षिप्य विष्णुं स्मृत्वा ओमित्युच्चार्य्य सकलदीपकरण-द्रव्यं प्रोक्षयेत्। ततः सङ्कल्पः, तत्र विशेषः। सव्यो भूत्वा देश-कालवाक्यमुच्चार्य्योपसव्यो दक्षिणामुखः सन् अद्य कार्त्तिकामावा-स्यायां उपास्तमयगे रवौ ज्योतिर्लोकप्राप्तिकामो अमुकसगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुकामुकामुकशर्म्मणां,[2] अमुक-सगोत्राणां अस्मन्मातृपितामहीप्रपितामहीनां अमुकामुकामुकदेवीनां [3]अमुकसगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां अमु-कामुकामुकशर्म्मणां, अमुकसगोत्राणां अस्मन्मातामहीप्रमातामही-वृद्धप्रमातामहीनां अमुकामुकामुकदेवीनां क्रतुदक्षविश्वेदेवापूर्वक-सनकादिसप्तमनुष्यसहितानां दीपदानमहं करिष्ये। इति। ततः प्राङ्मुखः "विश्वेदेवा स आगत शृणुताम इमं हवम्। एवं वर्हिर्निषी-

(१) तत्र। (२) अमुकशर्म्मणाम्। (३) अमुकदेवीनाम्।

दत" इति मन्त्रं पठित्वा पूर्ववत् पुष्पकुशाक्षतानि गृहीत्वा प्रथमतो दक्षिणकोष्ठे क्रतोऽत्रागच्छेत्यावाहनम्। तदुत्तरकोष्ठे दक्ष अत्रागच्छेति। एवमुत्तरसंस्थं। वसो अत्रागच्छ। सत्य अत्रागच्छ। काल अत्रागच्छ। काम अत्रागच्छ। धूरे(१) अत्रागच्छ। रोचन अत्रागच्छ। पुरुरवोऽत्रागच्छ। माद्रवोऽत्रागच्छ। इति विश्वेदेवानावाह्य ॐ क्रतो एष ते गन्धः स्वाहा, नमः इति गन्धं दत्वा पूर्ववत् इदं श्याम-लतापुष्पं तुभ्यं स्वाहा। एवं धूपं दीपं दद्यात्। एवं क्रत्वादिभ्यो-दद्यात्। तत उत्तरदिक्कोष्ठेषु पश्चिमतः। पूर्वं प्रति प्रतिकोष्ठं कुश-दधपुष्पाक्षतानि गृहीत्वा ॐ सनक अत्रागच्छ। सनन्द अत्रागच्छ। सनातन अत्रागच्छ। कपिल अत्रागच्छ। आसुरे अत्रागच्छ। वोढो अत्रागच्छ। पञ्चशिख अत्रागच्छ। इति आवाहयेत्। सनक एष ते गन्धो हन्त एवं पुष्पधूपदीपान्नं दद्यात्, एवं सनन्दादिभ्यो गन्धपुष्प-धूपदीपान्नं प्रत्येकं दद्यात्। ततो दक्षिणदिक्कोष्ठे पश्चिमतः प्रतिपूर्वं प्रतिकोष्ठं तिलकुशमोटकपुष्पाणि गृहीत्वा "ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशत आवह पितॄन् हविषे अत्तवे", इति मन्त्रं पठित्वा ॐ अमुकसगोत्र अस्मत्पितरमुकशर्म्मन् अत्रागच्छ, इत्यादिक्रमेण पितामहप्रपितामहौ मातृपितामही-प्रपितामहीः, मातामहप्रमातामहवृद्धप्रमातामहान्, मातामही प्रमातामहीवृद्धप्रमातामहीरावाह्य ॐ अमुकसगोत्र अमुकशर्म्मन् एष ते गन्धः स्वधानमः इत्यादि क्रमेण दीपान्नं सर्वेभ्यः दद्यात्। ततस्तेनैव क्रमेण ॐ क्रतो एष ते दीपः स्वाहा नमः इति, वाक्यात्

(१) धुरे।

वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः ।
यत्कृतं धनुषि श्राद्धं मृगनेत्रासु रात्रिषु ॥
पितरस्तत्र गृह्णन्ति नवान्नामिषकांक्षिणः ।
पूर्वफाल्गुनीपूर्वाषाढ़ापूर्वभाद्रवमघादिजाश्लेषार्द्राविवर्जितेषु

इत्यर्थः । नन्दाः प्रागुक्ताः ।

मृगनेत्राराचयस्तु सूर्ये ज्येष्ठापराद्धंगे ।
अन्नप्राशनवदिति रिक्ताः तिथयो वर्ज्याः । [illegible]

तद्वचान्यत् किञ्चित् ।

अस्य श्राद्धस्य पार्वणत्वात् अपराह्णः कर्म
पिण्डादिरहितं सङ्कल्पश्राद्धम् ।

तथाच मार्कण्डेय,—

ग्रहणे च व्यतीपाते नवशस्यसमागमे ।
युगादौ षड़शीत्यां च गृहाच्छादन [illegible]
नित्यश्राद्धे च सक्रान्त्यामपिण्डं श्राद्धमिष्यं

दानमन्त्र,

अग्निदग्धाश्च ये जीवा येऽप्यदग्[illegible] सग्रहकारिकाः,—

तत्र शिष्टानां

मघाव्यतीपातनिशाकरार्कोप[illegible]गमसंक्रान्तियुगादिकेषु ।
च्छादे गृहाणां नवशस्यलाभे श्राद्धे विशेष प्रवदन्ति धीराः ॥
नावाहनं नार्घविधिर्न चाग्नौ क्रियाविकीर्णं न च चापि पिण्डाः ।
नाक्षय्यदानं न च सौमनस्यं नैव स्वधावाचनदक्षिणे च ॥

"वर्षोपक्रमश्राद्धन्तु हेमन्तग्रीष्मवर्षासु" इति वचनैः प्रावृट्-
कालाषदगश्राद्धेनैव चरितार्थमिति पृथक्श्राद्धं न कुर्वन्ति। तत्र

अथ भीष्माष्टमीश्राद्धम् ।

माघमासं प्रकृत्य धवलसङ्ग्रहे,—

अष्टम्यां च सिते पक्षे भीष्माय च तिलोदकम् ।
अन्नं च विधिवद्दद्युः सर्वे वर्णा द्विजातयः ॥

अत्र फलाश्रवणान्नित्यत्वम् ।

माघे मासि शिताष्टम्यां सलिलं भीष्मवर्मणे ।
श्राद्धं च ये सदा कुर्युस्ते स्युः सन्ततिभागिनः ॥

इति पुराणान्तरोक्तेः काम्यत्वमपि ।

तथा स्मृत्यन्तरे,—

शुक्लाष्टम्यां तु माघस्य दद्यात् भीष्माय भोजनम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

द्विजातय इति सम्बोधनम् । सर्वे वर्णा इति उक्तत्वात् ज्येष्ठवर्ण-
ब्राह्मणस्यावश्यकत्वं शूद्रस्याप्यधिकारो महालयादिष्विव
त्वात् ।

न च,

ब्राह्मणो ह्यन्यवर्णस्य यः करोत्यौर्द्धदैहिकम् ।
तद्वर्णत्वमसौ याति इहलोके परत्र च ॥

इति मरीचिवचनम् ।

सवर्णेभ्यो जलं देयं नासवर्णे कथंचन ।

इति वचनं च न भीष्मश्राद्धतर्पणयोर्बाधकम् ॥

ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नोदकम्[१] ।

---

(१) नो जलम् ।

संवत्सरकृतं पुण्यं तेषां नश्यति सत्तम ॥

इति स्मृतेः। भीष्मस्य वसुत्वाच्च।

वसून् रुद्रान् तथादित्यान् नमस्कारस्वधान्वितान्।

एते सर्वस्य पितर एष्वायत्ता हि मानुषाः ॥

इति वसूनां पितृत्वश्रुतेः।

तत्र तर्पणमन्त्रः,

वैयाघ्रपद्यगोत्राय(१) सांकृतिप्रवराय च।

अपुत्राय ददाम्येतत् सलिलं भीष्मवर्मणे ॥

आशंसावचनं तु,

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः।

आभिरद्भिरवाप्नोतु(२) पुत्रपौत्रोचितां क्रियाम् ॥

एतच्च आगन्तुकत्वात् सर्ववर्णानां पितृतर्पणान्ते कार्य्यम्।

अत्र गौड़ैस्तिथितत्त्वकारैर्यदुक्तं ब्राह्मणस्य वर्णज्यैष्ठ्यात् अन्ते कार्य्यं अन्येषां आदाविति, तद्युक्तिविरुद्धम्। भीष्मवर्मणो वसुत्वेन ब्राह्मणस्यापि पितृत्वात्।

अतएव हरिभक्तिविलासे वैष्णवकारिका,—

माघस्य चाष्टमीं शुक्लामारभ्य दिनपञ्चकम्।

तर्पयेद्यथाष्टम्यां भीष्मं भागवतोत्तमम् ॥

नित्यतर्पणतः पश्चात् सलिलान्त उदङ्मुखः।

निवीतितर्पणं कुर्य्यात् गाङ्गेयस्य महात्मनः। इति।

अस्य श्राद्धस्य एकोद्दिष्टकालत्वात् एकोद्दिष्टकालेन व्यवस्था, वैश्व-

(१) वैयाघ्रपद्यसगोत्राय। (२) चाप्नोति।

द्देवानन्तरलं च। वैयाघ्रपद्यसगोत्र भीष्मवर्मन् इदमर्घादिकं तुभ्यं स्वधा नमः इति अर्घोत्सर्गः कार्य्यः। इदं भीष्मवर्मणे इति त्यागः।

जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः।

इति वचनात् जीवत्पितृकेणापि भीष्मतर्पणं कार्य्यम्, नित्यत्वाच्च। श्राद्धस्य नित्यत्वेऽपि जीवत्पितृकस्य श्राद्धेष्वनधिकारात् नैव श्राद्धं कार्य्यम्।

जीवत्पितृकस्य श्राद्धनिषेधमाह कात्यायनः,—

सपितुः पितृकृत्येषु अधिकारो न विद्यते।

न जीवन्तमतिक्रम्य किञ्चिद्दद्यादितिश्रुतिः॥

सपितुः विद्यमानपितृकस्येत्यर्थः।

क्रतुः,—

अष्टकादिषु संक्रान्तौ मन्वादिषु युगादिषु।

चन्द्रसूर्य्यग्रहे पाते स्वेच्छया पुण्ययोगतः॥

जीवत्पिता नैव कुर्य्यात् श्राद्धं काम्यं तथाखिलम्।

आमश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम्॥

न जीवत्पितृकः कुर्य्यात् तिलैः कृष्णैश्च तर्पणम्॥

स्मृत्यन्तरे,—

गयायानं कुम्भश्राद्धं तिलैस्तामैश्च तर्पणम्।

न जीवत्पितृकः कुर्य्यात् कुर्वंस्तु पितृहा भवेत्॥

अतएव,

जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत्।

येषां वापि पिता दद्यात् तेषामेके प्रचक्षते॥

इति मरीचिवचनेऽपि करणपक्षानादरः स्फुटएव। एके इत्युक्तेः, इति॥

अथ ग्रहणश्राद्धम्।

तच्च नित्यं काम्यं च।

श्राद्धं प्रकृत्य कौर्मे,—

नैमित्तिकं तु कर्त्तव्यं ग्रहणे चन्द्रसूर्ययोः।
बान्धवानां च मरणे नारकी स्यादतोऽन्यथा॥
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु।

महाभारते,—

सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति॥

व्यासवृद्धशातातपौ,—

चन्द्रसूर्य्यग्रहे चैव श्राद्धं विधिवदाचरेत्।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे॥

विष्णुः,—

राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्।
गुणवत् सर्वकामीयं पितॄणामुपतिष्ठते॥

सर्वस्वेनापि शुल्केनापि। नात्र कालव्यवस्था। ग्रहणकाल एव विधानात्। तच्च श्राद्धं आमेन हेम्ना वा। तत्र वचनं आमश्राद्धप्रकरणे द्रष्टव्यम्।

एतच्च अशौचेऽपि कार्य्यम्। तत्र प्रमाणमशौचप्रकरणे उक्तम्, इति ग्रहणश्राद्धविधिः।

तीर्थश्राद्धं तन्निमित्तिकम् ।

देवीपुराणे,—

> अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ।
> प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम् ॥
> पिण्डदानं तु तच्छस्तं पितॄणामतिदुर्लभम् ।
> तीर्थेषु ब्राह्मणं नैव परीक्षेत कथञ्चन ॥
> अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ।
> सक्तुभिः पिण्डदानञ्च संयावैः पायसेन वा ॥
> कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेन गुड़ेन वा ।
> देयन्तु तिलपिण्याकं भक्तिमद्भिर्नरैः सदा ॥
> श्राद्धं तत्र च कर्त्तव्यमर्घावाहनवर्ज्जितम् ।
> श्वध्वांक्षगृध्रकाकानां नैव दृष्टिहतञ्च यत् ॥

तथाच तर्पणं पृथक् तीर्थप्राप्तिनिमित्तकं कार्य्यम् ।

तत्स्नानाङ्गं तर्पणन्तु न पृथक् तन्त्रेण तत्सिद्धेः । तर्पणश्राद्धयोः तीर्थप्राप्तिनिमित्तकत्वात् एकदिने अनेकतीर्थप्राप्तौ तयोः प्रतितीर्थं करणम् । तीर्थप्राप्तिदिने तर्पणस्य तीर्थप्राप्तिनिमित्तकत्वात् स्नाना-ग्रक्तस्यापि मन्त्रस्नानादिपूर्व्वकं तर्पणमावश्यकम् । अत्र न काल-व्यवस्था प्राप्तिकाल एव तद्विधानात् ।

> विलम्बो नैव कर्त्तव्यो नैव विघ्नं समाचरेत् ।

इति तद्वचनान्तराच्च । अत्राकाल इत्युक्तावपि रात्रौ तीर्थ-प्राप्तावपि नैव श्राद्धम् ।

> आसुरीरात्रिरन्यच तस्मात्तां परिवर्ज्जयेत् ।

इति यमशातातपाभ्यां ग्रहणव्यतिरिक्तरात्रौ श्राद्धमात्रस्य निषिद्धत्वात् पिण्डदानमात्रस्य नित्यश्राद्धासम्भवे विहितत्वेन नित्य-काम्ययोस्तदप्राप्तावपि अचाङ्गेन पिण्डदानादिविधिना साद्गुण्य-मिति बोध्यम्। तेन ग्रहे साङ्गश्राद्धकरणमिति सिद्धम्।

इति पार्वणप्रसङ्गात् नित्यनैमित्तिकश्राद्धानि उक्तानि।

अथ गोष्ठीश्राद्धम्।

तत्स्वरूपमादौ व्याख्यातं। तत्र कालो अमावास्येतरपार्वणकालः तीर्थप्राप्त्यादिकालो वा।

अथ शुद्ध्यर्थश्राद्धम्। तत्र अमावास्येतरपार्वणश्राद्धकालः।

कर्माङ्गं श्राद्धं तस्य कालो विधिश्च वृद्धिश्राद्धवदिति पूर्व-मुक्तमेव।

अथ दैविकश्राद्धम्। तत्र पूर्वाह्णः कर्मकालः।

पूर्वाह्णे दैविकं कर्म अपराह्णे तु पैतृकम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥

इति मात्स्योक्तेः,

पूर्वाह्णे दैविकं श्राद्धं कार्य्यमभ्युदयार्थिना।

इति शातातपोक्तेश्च,

अथ यात्राङ्गश्राद्धम्।

तस्य यात्रापूर्वकालीनत्वात् न कालविशेषापेक्षा। तीर्थप्रसङ्गात् तीर्थयात्रादिविधिरप्युच्यते।

महाभारते,—

अग्निष्टोमादिनियमैरिष्ट्वा विपुलदक्षिणैः।

| | Rs | |
|---|---|---|
| Muntakhabu t Tawarikh (Text) Fasc 1-15 @ /6 each | 5 | 10 |
| Muntakhabu t Tawarikh (English) Vol I Fasc 1-7; Vol II Fasc 1 5 and 3 Indexes, Vol III Fasc 1 @ /12 each | 12 | 0 |
| Muntakhabu l Lubab (Text) Fasc 1-19 @ /6/ each | 7 | 2 |
| Ma asir i Alamgiri (Text) Fasc 1 6 @ /6/ each | 2 | 4 |
| Nukhbatu l Fikr (Text) Fasc 1 | 0 | 6 |
| Nizami s Khiradnamah i Iskandari (Text) Fasc 1 2 @ /12/ each | 1 | 8 |
| Riyazu s Salatin (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Ditto Ditto (English) Fasc 1-II | 1 | 8 |
| Tabaqat i Nasiri (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Ditto (English) Fasc 1-14 @ /12/ each | 10 | 8 |
| Ditto Index | 1 | 0 |
| Tarikh i Firuz Shahi of Ziyau d d n Barni (Text) Fasc 1 7 @ /6/ each | 2 | 10 |
| Tarikh i Firuzshahi of Shams i Siraj Aif (Text) Fasc 1 6 @ /6/ each | 2 | 4 |
| Ten Ancient Arabic Poems Fasc 1 2 @ 1/8/ each | 3 | 0 |
| Wis o Ramin (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Zafarnamah Vol I Fasc 1 9 Vol II Fasc 1 8 @ /6/ each | 6 | 6 |
| Tuzuk i Jahangiri, (Eng ) Fasc 1 | 0 | 12 |

## ASIATIC SOCIETY S PUBLICATIONS

| | | | |
|---|---|---|---|
| 1 | ASIATIC RESEARCHES Vol VII, Vols XI and XVII and Vols XIX and XX @ 10/ each | 50 | 0 |
| 2 | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl ) @ /6/ per No and from 1870 to date @ /8/ per No | | |
| 3 | JOURNAL of the Asiatic Society for 1843 (12) 1844 (12) 1845 (12) 1846 (5) 1847 (12) 1848 (12) 1866 (7) 1867 (6) 1868 (6) 1869 (8), 1870 (8), 1871 (7) 1872 (8) 1873 (8) 1874 (8) 1875 (7) 1876 (7) 1877 (8) 1878 (8) 1879 (7) 1880 (8) 1881 (7) 1882 (6) 1883 (5) 1884 (6) 1885 (6) 1886 (8) 1887 (7) 1888 (7) 1889 (10) 1890 (11), 1891 (7) 1892 (8) 1893 (11) 1894 (8) 1895 (7), 1896 (8) 1897 (8) 1898 (8) 1899 (8) 1900 (7) & 1901 (7) @ 1/8 per No to Members and @ 2/ per No to Non Members | | |
| | *N B — The figures enclosed in brackets give the number of Nos in each Volume* | | |
| 4 | Centenary Review of the Researches of the Society from 1784 1883 | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan by R B Shaw (Extra No J A S B 1878) | 4 | 0 |
| | Theobald s Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No J A S B 1868) | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E Blyth (Extra No J A S B 1875) | 4 | 0 |
| | Introduction to the Maithili Language of North Bihar by G A Grierson Part II, Chrestomathy and Vocabulary (Extra No J A S B 1882) | 4 | [illegible] |
| 5. | An s ul Musharrahin | 3 | [illegible] |
| 6 | Catalogue of Fossil Vertebrata | 3 | [illegible] |
| 7 | Catalogue of the Library of the Asiatic Society Bengal by W A Bio | 3 | 8 |
| 8 | Inayah a Commentary on the Hidayah Vols II and IV, @ 16/ each | 32 | [illegible] |
| 9 | Jawamiu l ilm ir riyazi 168 pages with 17 plates 4to Part I | 2 | 0 |
| 10 | Khizanatu l ilm | 4 | [illegible] |
| 11 | Mahabharata Vols III and IV, @ 20/ each | 40 | [illegible] |
| 12 | Moore and Hewitson s Descriptions of New Indian Lepidoptera Parts I-III with 8 coloured Plates 4to @ 6/ each | 18 | 0 |
| 13 | Sharaya ool Islam | 4 | 0 |
| 14. | Tibetan Dictionary, by Csoma de Körös | 10 | 0 |
| 15. | Ditto Grammar | 8 | 0 |
| 16. | Kaçmi raçabdā ṛta Parts I & II @ 1/8/ | 3 | 0 |
| 17. | A descriptive catalogue of the paintings statues, &c in the rooms of the Asiatic Society of Bengal by C R Wilson | 1 | 0 |
| 18. | Memoir on maps illustrating the Ancient Geography of Kasmir by M A Stein Ph.D., Jl Extra No 2 of 1899 | 4 | 0 |
| | Notices of Sanskrit Manuscripts Fasc 1 29 @ 1/ each | 29 | 0 |
| | Nepalese Buddhist Sanskrit Literature by Dr L L Mitra | 5 | 0 |

N B — All Cheques Money Orders &c , must be made payable to the Treasurer, Asiatic Society," only

**Books are supplied by V.-P P.** 12-2 03

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1049.



# GADĀDHARA PADDHATAU KĀLASĀRA

BY

GADĀDHARA RĀJAGURU

EDITED BY

SADĀÇIVA MIÇRA

OF PURĪ.

VOL. I, FASCICULUS VI.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1903.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No 57, PARK STREET, CALCUTTA**

AND OBTAINABLE FROM

*THE SOCIETY'S AGENTS MESSRS LUZAC & CO*

46, GREAT RUSSELL STREET LONDON W C AND MR OTTO

HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY

---

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasc being out of stock*

## BIBLIOTHECA INDICA

### *Sanskrit Series*

| Work | | Rs | As |
|---|---|---|---|
| Advaita Brahma Siddhi (Text) Fasc 1 4 @ /6/ each | Rs | 1 | 8 |
| Advaitachinta Kaustubha Fasc 1 | | 0 | |
| *Agni Purana (Text) Fasc 4–14 @ /6/ each | | 4 | 2 |
| Aitareya Brahmana Vol I Fasc 1 5 and Vol II Fasc 1 5 Vol III Fasc 1 5 Vol IV Fasc 1 6 @ /6/ | | 7 | 8 |
| Anu Bhasyam (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| Aphorisms of Sandilya (English) Fasc 1 | | 0 | 12 |
| Astasahasrika Prajnaparamita (Text) Fasc 1 6 @ /6/ each | | 2 | 4 |
| Açvavaidyaka (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| Avadana Kalpalata (Sans and Tibetan) Vol I Fasc 1 5 Vol II Fasc 1 5 @ 1/ each | | 10 | 0 |
| *Bhamati (Text) Fasc 4-8 @ /6/ each | | 1 | 14 |
| Bhaṭṭa Dipika Vol I Fasc 1–4 | | 1 | 8 |
| Bṛhaddevata (Text) Fasc 1 4 @ /6/ each | | 1 | 8 |
| Bṛhaddharma Purana (Text) Fasc 1 6 @ /6/ each | | 2 | 4 |
| Bodhicaryavatara of Cantideva Fasc 1 2 | | 0 | 12 |
| Catadusani Fasc 1 | | 0 | 6 |
| Catalogue of Sanskrit Books and MSS Fasc 1 3 @ 2/ each | | 6 | 0 |
| Çatapatha Brahmana Fasc 1–6 | | 2 | 10 |
| Catasahasrika Prajnaparamita (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| *Caturvarga Chintamani Text) Vols II 1 25 III Part I Fasc 1–18 Part II Fasc 1 10 @ /6/ each | | 19 | 14 |
| Catadusan Fasc 1 | | 0 | 6 |
| Çlokavartika (English) Fasc 1–3 | | 2 | 4 |
| *Çrauta Sutra of Āpastamba (Text) Fasc 4 17 @ /6/ each | | 5 | 4 |
| Ditto Çankhayana (Text) Vol I Fasc 1 7; Vol II Fasc 1–4 Vol III Fasc 1–4 @ /6/ each | | 5 | 10 |
| Çri Bhāshyam (Text) Fasc 1 3 @ /6/ each | | 1 | 2 |
| Dan Kriya Kaumudi Fasc 1 2 | | 0 | 12 |
| Gadadhara Paddhati Kālasara Vol I Fasc 1–6 | | 2 | 4 |
| Kala Madhava (Text) Fasc 1–4 @ /6/ each | | 1 | 8 |
| Kala Viveka, Fasc 1 5 | | 1 | 8 |
| Katantra (Text) Fasc 1 6 @ /12/ each | | 1 | 14 |
| Katha Sarit Sagara (English) Fasc 1–14 @ /12/ each | | 4 | 8 |
| Kurma Purana Text) Fasc 1 9 @ /6 each | | 10 | 8 |
| Lalita Vistara (English) Fasc 1 3 @ /12/ each | | 3 | 6 |
| Madana Parijata (Text) Fasc 1 11 @ /6/ each | | 2 | 4 |
| Maha bhasya prad pōdyōta (Text) Fasc 1 9 & Vol II Fasc 1 5 @ /6/ each | | 4 | 2 |
| Manutika Sangraha (Text) Fasc 1 3 @ /6/ each | | 8 | 6 |
| Mārkaṇḍēya Purana, (English) Fasc 1 6 @ /1* each | | 1 | ? |
| *Mimamsa Darçana (Text) Fasc 7–19 @ /6/ each | | 4 | 8 |
| Narada Smriti Text Fasc 1 3 @ /6 | | 4 | 14 |
| Nyayavartika, (Text Fasc 1 5 @ /6 | | 1 | 2 |
| *Nirukta, (Text) Vol III Fasc 1 6 Vol IV Fasc 1 8 @ /6 each | | 1 | 14 |
| Nityacarapaddhati Fasc 1 " (Text) @ /6 | | 5 | 4 |
| Nityacarapradipa Fasc 1 | | 2 | 10 |
| Nyayabinduṭika (Text) | | 0 | 6 |
| Nyaya Kusumanjali Prakarana (Text Vol I Fasc 1 6; Vol II Fasc 1 3 @ /6 each | | 0 | 10 |
| | | 3 | 9 |

न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥

तथा,—

यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।

तथा पृथिव्यामुद्देशाः केचित्पुण्यतमाः स्मृताः ॥

प्रभावादद्भुतात् भूमेः सलिलस्य च तेजसा ।

परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता ॥

तीर्थपदेन क्षेत्रस्याप्यभिधेयत्वात् पुरुषोत्तमक्षेत्रकुरुक्षेत्रगयादिषु तीर्थयात्राफलं तदवस्थानदानश्राद्धादिफलं च सर्वं साधारणमेव ।

तथाच कुरुक्षेत्रप्रस्तावे महाभारते,—

ब्रह्मक्षेत्रं महापुण्यमभिगच्छति भारत ।

मनसाप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर ॥

पापानि च विनश्यन्ति सूर्य्यलोक[१] स गच्छति ।

मात्स्ये,—

देवेशि सर्वगुह्यानां स्थानं प्रियतमं मम ।

मद्भक्तास्तत्र गच्छन्ति विष्णुभक्तास्तथैव च ॥

तथा,—

तत्र चेष्टं हुतं दत्तं तपस्तप्तं कृत च यत् ।

सर्वमक्षयमेवास्मिन्नविमुक्ते न संशयः ॥

एवमन्यान्यपि विस्तरभयान्न लिखितानि। अतएव कल्पतरौ तीर्थकाण्डे बहूनि क्षेत्राणि लिखितानि। तीर्थादिस्नानादिफलात् पृथगेव तदुद्देशयात्रायामपि फलम् ।

---

(१) स्वर्गलोक ।

तथा च शङ्खः,—

तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत्[१]।
स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न तु ॥ इति।

अतएव महाभारते, तीर्थयात्रोपक्रमप्रसङ्गे,—

यस्य पादौ च हस्तौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥

पादहस्तमनःसंयमाः क्रमेण अगम्यदेशगमननिवृत्त्यदत्तदानादिनिवृत्तिकुसंकल्पनिवृत्तयः। विद्या तीर्थगुणविधिज्ञानम्। तपः उपवासतीर्थवासादि। कीर्त्तिः सच्चरितत्वेन प्रसिद्धिः।

तथा,— प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित्।
अहंकारविमुक्तश्च स तीर्थफलमश्नुते ॥
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः।
विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते ॥

अकल्ककः दम्भरहितः। निरारम्भः अर्थोपार्ज्जनादिव्यापाररहितः। सर्वसङ्गः अविहितासक्तिः।

तथा,—

कामं क्रोधञ्च लोभञ्च यो जित्वा तीर्थमावसेत्।
न तेन किञ्चिन्न प्राप्तं तीर्थानुगमनाद्भवेत् ॥
तीर्थानि तु यथोक्तेन विधिना सञ्चरन्ति ये।
सर्वदुःखसहा धीरास्ते नरा स्वर्गगामिनः ॥

दुःखसहाः शीतातपादिक्लेशसहिष्णवः।

(१) समाचरन्।

शाम्बे,— गङ्गादितीर्थेषु वसन्ति मत्स्या-
देवालये पक्षिसंघाश्च नित्यम्।
भावोज्झितास्ते न फलं लभन्ते
तीर्थाच्च देवायतनाच्च मुख्यात्॥
भावं ततो हृत्कमले निधाय
तीर्थानि सेवेत समाहितात्मा।
अकोपनश्च राजेन्द्र सत्यवादी जितेन्द्रियः।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते॥

पुनः शङ्खेन,—
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते॥

इति यदुक्तं तत् तीर्थस्नानाद्यङ्गम् यात्राप्रकरणमन्तरेणैवोक्तेः। कीर्त्तियुक्तस्य तीर्थयात्रायां तीर्थस्नानादौ चाधिकारकथनात् अभिशस्तस्य न तीर्थफलाधिकारः, केवलमभिशस्तत्वदोषनिवृत्तिः स्यादेव।

तथाच वायवीये—
तीर्थान्यनुसरन् वीर श्रद्दधानः समाहितः।
कृतपापो विशुध्येत किं पुनः शुद्धिकर्मकृत्॥
तिर्य्यग्योनिं न गच्छेच्च कुदेशे नैव जायते।
स्वर्गे भवति वै विप्रो मोक्षोपायं च विन्दति॥
अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः॥

ब्रह्मोऽपि,— नृणां पापकृतां तीर्थे भवेत् पापस्य संचयः ।
यथोक्तफलदं तीर्थं भवेच्छान्तात्मनां नृणाम् ॥

ब्रह्मचारिप्रभृतीनां तीर्थयात्रायां विशेषोऽस्ति ब्राह्मे,—

या तीर्थयात्रा कथिता मुनीन्द्रैः,
कृता प्रयुक्ताप्यनुमोदिता च ।
तां ब्रह्मचारी विधिवत् करोति
सुसंयतो गुरुणा चानुयुक्तः ॥
सर्वस्वनाशे ह्यथवा नृपस्तु,
स ब्राह्मणानयत एव कृत्वा ।
यज्ञाधिकारेऽप्यथवा निवृत्ते,
विप्रस्तु तीर्थानि परिभ्रमेत ॥
तीर्थे फलं यज्ञफलं हि यस्मात्,
प्रोक्तं मुनीन्द्रैरमरप्रभावैः ।
यद्यस्ति यज्ञेऽप्यधिकारितास्य,
वरं गृहं गृहधर्माश्च सर्वे ॥
एवं गृहस्थाश्रमसंस्थितस्य,
तीर्थे गतिः पूर्वतरैर्निषिद्धा ।
सर्वाणि तीर्थान्यपि चाग्निहोत्र-
तुल्यानि नैवेति वयं वदामः ॥

इति श्रौताग्निमतः तीर्थगमने निषिद्धेऽपि सपत्नीकतया अग्निं गृहीत्वा गमने भवत्येव फलम् ।

सदाग्निमान् सपत्नीको गच्छेत्तीर्थानि यत्नतः ।

सर्वपापविनिर्मुक्तो यथेष्टां गतिमाप्नुयात् ॥

इति वचनात् केवलं श्रौतकर्माविरोधेन तीर्थक्षेत्रयोः स्नान-दर्शनादिकं कार्य्यम्, श्रौतकर्मणः सर्वतो बलवत्त्वात्।

निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित् ॥

इति कात्यायनोक्तेः,

अर्थार्थी प्रवसेद्विद्वान् न धर्मार्थी कदाचन।

इति शिष्टस्मरणात्। आपत्सु प्रोषितोऽग्निवेलायां वाग्यतः प्रतिदिनमग्नीन् मनसा ध्यात्वा मन्त्रतो हुतं ज्ञात्वा व्रतयेत् इति हारीतोक्तेः,

क्षुत्खिलीकृतवर्गस्य परिभूतस्य शत्रुभिः।
दर्शद्वयं प्रवासोऽस्ति परतो नाहिताग्निवत् ॥

इति प्रमाणिकोक्तेश्च प्रवासस्य तीर्थस्नानाद्यर्थलाभावेन यज्ञ-विरोधाभावात्। एवं उत्सन्नाग्नेस्तु तीर्थयात्रैव कार्य्या, अग्निहोत्रा-भावात्। स्मार्त्ताग्नेस्तु निरग्निवत् यात्रा कार्य्यैव। तीर्थस्नानादेरपि स्मार्त्तत्वेन समबलत्वात्। धर्मार्थप्रवासो यज्ञाधिकारवत एव निषिद्धो-न केवलं स्मार्त्ताग्नेः। तस्य यज्ञाधिकाराभावात् यज्ञपदस्य त्रेताग्नि-साध्ययज्ञपरत्वात्। अन्यथा पञ्चयज्ञाधिकारस्य अन्त्यपङ्ग्वादि-साधारण्येन अव्यावर्त्तकत्वापत्तेः। एवं समाचारोऽपि। अत्र यत् कैश्चिल्लिखितम् तीर्थस्नानादिफललोभेन अग्निं विहाय तीर्थ-स्नानादिकरणे तत्फलं स्यादेव। केवलमविहितप्रवासकरणार्थं वैश्वानरी कार्य्या इति, तन्मन्दमेव।

महाभारते,—

बह्वपकरणा यज्ञा नानासम्भारविस्तराः ।

प्राप्यन्ते पार्थिवैरेव इत्याद्युक्त्वा,

यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर ।

तुल्यो यज्ञफलैः पुण्यैस्तन्निबोध युधांवर ॥

इत्यादिवाक्यपर्य्यालोचने यज्ञस्यैवाधिक्यप्रतीतेः, श्रौतकर्मापेक्षया स्मार्त्तकर्मणो दुर्बलत्वाच्च । तीर्थस्नानादौ कुत्रचित् यज्ञाद्याधिक्यमुक्तम्, तत् यज्ञोपम्यगमकमिति ज्ञेयम् । किंचाग्निं परित्यज्य प्रवासे तदन्तर्मरणे महाननर्थ आपद्येत आचारविरोधश्च स्यात् ।

अथ तीर्थयात्राविधिः ।

ब्राह्मे,— यो यः कश्चित्तीर्थयात्रान्तु गच्छेत्,

सुसंयतः स च पूर्वं स्वगेहे ।

कृतोपवासः प्रयतस्तुष्टचित्तः,

सम्पूजयेद्भक्तिनम्रो गणेशम् ॥

देवान् पितॄन् ब्राह्मणांश्चैव साधून्

धीमान् संप्रीणयेत् वित्तशक्त्या प्रयत्नात् ।

प्रत्यागतश्चापि पुनस्तथैव

देवान् पितॄन् ब्राह्मणान् पूजयेच्च ॥

अत्र उक्तफलकामनया तीर्थयात्रां संकल्प्य स्वगृहे कृतोपवासो-गणेशं पूजयित्वाभिष्टदेवं संपूज्य श्राद्धं कृत्वा ब्राह्मणान् पूजयेत् । "पितॄन् वित्तशक्त्ये"त्यनेन विशेषतो धनवता पितृपूजनं कार्य्यमिति

विधीयते प्रत्यागमनानन्तरमपि देवब्राह्मणपूजनं श्राद्धञ्च। एतच्च तीर्थयात्राङ्गं नित्यम्। येन तीर्थ एव स्थीयते, तेन तु पुनरागम्यते तस्य प्रत्यागमनोक्तदेवतापूजनाद्यभावः।

गयायात्रायां तु वायवीये,—

उद्यतश्चेत् गयां गन्तुं श्राद्धं कृत्वा विधानतः।
विधाय कर्पटीवेशं ग्रामं कृत्वा प्रदक्षिणम्॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषेण भोजनम्।
ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः॥

इत्याद्यधिकमङ्गं नान्यत्र। प्रयागव्यतिरिक्ततीर्थगमने यान-निषेधे प्रमाणादर्शनात् न तीर्थान्तरे यानगमनेन विरोधः इति कल्पतरुकाराः। "गङ्गायां भास्करे चैत्रे" इत्यादिवाक्यात् तीर्थ-प्राप्त्युपवासः शिखावर्ज्जं केशवपनात्मकमुण्डनञ्च कर्त्तृसंस्काररूपं तीर्थस्नानदानश्राद्धादिरूपकर्माङ्गम्। यत्तु देवलवाक्यं तीर्थान्यनु-क्रम्य तदर्थमभिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमवगाहमानः त्रिरात्रं उपित्वा सर्वपापैर्विमुच्यते स्वस्तिमांश्च भवतीति, तत्तीर्थयात्रा-प्रकरण[१] स्नानात् पृथगेव कार्य्यम्। एवम्,

अनुपोष्य त्रिरात्रन्तु तीर्थान्यनभिगम्य च।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते॥

इति महाभारतोक्तौ तीर्थाभिगमनकाञ्चनगोदानत्रिरात्रोपोष-णानि दारिद्र्याभावफलानीति ज्ञेयम्। चैत्रतीर्थादिषु परकी-यलाभावात् तत्र यत्र कुत्रापि श्राद्धकरणे न दोषः।

---

(१) तत्तीर्थयात्राप्रकरणात् पृथगेव कार्य्यम्।

अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च ।

सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ।

इति यमोक्तेः । पुण्याः पुण्यप्रदेशाः क्षेत्राणि इति यावत् । तेषु परिग्रहः प्रभुत्वं न कस्यचिदपीत्यर्थः । तीर्थे श्राद्धतर्पणयोर्न कालापेक्षा । अकालेऽप्ययथवेत्यादि पूर्वोक्तदेवीपुराणोक्तेः ।

तीर्थद्रव्योपपत्तौ च न कालमवधारयेत् ।

इति हारीतोक्तेश्च । तीर्थश्राद्धे जीवत्पितृकस्याप्यधिकारः ।

महानदीषु सर्वासु तीर्थेषु च गयामृते ।

जीवत्पितापि कुर्वीत श्राद्धं पार्वणधर्मवित् ॥

इति मैत्रेयगृह्यपरिशिष्टोक्तेः ।

परार्थतीर्थयाने प्रसङ्गात्तीर्थप्राप्तौ चापि फलमाह पैठीनसिः,—

षोड़शांशं स लभते यः परार्थेन गच्छति ।

अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ॥

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।

मज्जयेत्तु यमुद्दिश्य अष्टभागं लभेत सः ॥

तत्र मन्त्रः,

कुशोऽसि त्वं पवित्रोऽसि ब्रह्मणा निर्मितः पुरा ।

त्वयि स्नाते स च स्नायात् यस्यार्थे ग्रन्थिबन्धनम् ॥ इति शिष्टाः ॥०॥

अथ पुष्ट्यर्थं औपचारिकश्राद्धम् ।

तस्य शरीरोपचयनिमित्तरसायनादिप्रयोगकालीनत्वात् न स्वतन्त्रः कालः, इति द्वादशविधश्राद्धकालाः तत्प्रासाङ्गिकश्राद्धकालाश्च निरूपिताः ।

अथ जीवत्पितृकस्यापि श्राद्धविशेषेष्वधिकारः।

मैत्रेयगृह्यपरिशिष्टे,—

विवाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे।

तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः॥

जीवत्पितृकस्य श्राद्धकाला इत्यर्थः। पित्र्येष्टिः चातुर्मास्येष्टि-विशेषः अत्र विवाहपदं द्वितीयविवाहपरम्। आद्ये विवाहे पितुरधिकार इति पूर्वं निर्णीतत्वात्।

अथ हारीतोऽपि,—

अनिष्टिकोऽपि कुर्वीत जन्मादौ श्राद्धकर्मणि।

येभ्य एव पिता दद्यात् तानेवोद्दिश्य पार्वणम्॥

इति मातृमरणे तु तस्य मातृमृताहश्राद्धं कार्य्यमेव।

आपद्य सहपिण्डत्वमौरसो विधिवत् सुतः।

कुर्वीत दर्शवच्छ्राद्धं मातापित्रोर्मृतेऽहनि॥

इति पितृतुल्यत्वेन यमदग्निनोक्तत्वात्॥०॥

अथ श्राद्धवैश्वदेवयोः क्रमविचारः।

भविष्ये,—कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च।

वैश्वदेवादिकं कर्म्म ततः कुर्य्यान्नराधिप॥

आदित्यपुराणे,—

पितॄन् सन्तर्प्य विधिवत् बलिं कुर्य्यात्विधानतः।

वैश्वदेवं ततः कुर्य्यात्पश्चात्ब्राह्मणभोजनम्॥

व्यासोऽपि,—

यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः।

अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च ।

सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ।

इति यमोक्तेः । पुण्याः पुण्यप्रदेशाः चेत्राणि इति यावत् । तेषु परिग्रहः प्रभुत्वं न कस्यचिदपीत्यर्थः । तीर्थे श्राद्धतर्पणयोर्न कालापेचा । अकालेऽप्यथवेत्यादि पूर्वोक्तदेवीपुराणोक्तेः ।

तीर्थद्रव्योपपत्तौ च न कालमवधारयेत् ।

इति हारीतोक्तेश्च । तीर्थश्राद्धे जीवत्पितृकस्याप्यधिकारः ।

महानदीषु सर्वासु तीर्थेषु च गयामृते ।

जीवत्पितापि कुर्वीत श्राद्धं पार्वणधर्मवित् ॥

इति मैत्रेयगृह्यपरिशिष्टोक्तेः ।

परार्थतीर्थयाने प्रसङ्गात्तीर्थप्राप्तौ चापि फलमाह पैठीनसिः,—

षोडशांशं स लभते यः परार्थेन गच्छति ।

अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ॥

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।

मज्जयेत्तु यमुद्दिश्य अष्टभागं लभेत सः ॥

तत्र मन्त्रः,

कुशोऽसि त्वं पवित्रोऽसि ब्रह्मणा निर्मितः पुरा ।

त्वयि स्नाते स च स्नायात् यस्यार्थे ग्रन्थिबन्धनम् ॥ इति शिष्टाः ॥०॥

अथ पुष्यर्थं औपचारिकश्राद्धम् ।

तस्य शरीरोपचयनिमित्तरसायनादिप्रयोगकालीनत्वात् न स्वतन्त्रः कालः, इति द्वादशविधश्राद्धकालाः तत्रामाह्निकश्राद्धकालाश्च निरूपिताः ।

अथ जीवत्पितृकस्यापि श्राद्धविशेषेष्वधिकारः ।

मैत्रेयगृह्यपरिशिष्टे,—

विवाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥

जीवत्पितृकस्य श्राद्धकाला इत्यर्थः । पित्र्येष्टिः चातुर्मास्येष्टि-विशेषः अत्र विवाहपदं द्वितीयविवाहपरम् । आद्ये विवाहे पितुरधिकार इति पूर्वं निर्णीतत्वात् ।

अत्र हारीतोऽपि,—

अभिषिक्तोऽपि कुर्वीत जन्मादौ श्राद्धकर्मणि ।
येभ्य एव पिता दद्यात् तानेवोद्दिश्य पार्वणम् ॥

इति मातृमरणे तु तस्य मातृमृताहश्राद्धं कार्यमेव ।

आपद्य सत्वपिण्डत्वमौरसो विधिवत् सुतः ।
कुर्वीत दर्शवच्छ्राद्ध मातापित्रोर्मृतेऽहनि ॥

इति पितृतुल्यत्वेन यमदग्निनोक्तत्वात् ॥०॥

अथ श्राद्धवैश्वदेवयोः क्रमविचारः ।

भविष्ये,— कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च ।
वैश्वदेवादिकं कर्म्म ततः कुर्य्यान्नराधिप ॥

आदित्यपुराणे,—

पितॄन् सन्तर्प्य विधिवत् बलिं कुर्य्यात्‌विधानतः ।
वैश्वदेवं ततः कुर्य्यात्पश्चात्‌ब्राह्मणभोजनम् ॥

व्यासोऽपि,—

यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः ।

वैश्वदेवं ततः कुर्य्यात् निवृत्ते श्राद्धकर्मणि ॥

वृद्धगौतमः,—

पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।

अकृतं तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥

कार्ष्णाजिनिः,—

अकृत्वा पैतृकं श्राद्धं वैश्वदेवं करोति यः ।

आसुरं तद्भवेत् श्राद्धं पितृणां नोपतिष्ठते ॥

पैठीनसिः,—

पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः ।

आसुरं तद्भवेत्छ्राद्धं पितृणां नोपतिष्ठते ॥

श्राद्धं निर्वर्त्य विधिवत् वैश्वदेवादिकं ततः ।

कुर्य्याद्भिक्षां ततो दद्याद्[१]न्तकारादिकं तथा ।

मनुः,—

उच्छेषणं तु उत्तिष्ठेत् यावद्विप्रा विसर्जिताः ।

ततो गृहबलिं दद्यादिति धर्मो व्यवस्थितः ॥

गृहबलिशब्दो भूतयज्ञाभिधायको वैश्वदेवादिनित्यमहायज्ञोपलक्षणपरः इति कल्पतरुकाराः ।

स्मृत्यन्तरेऽपि,—

गृहाग्निशिशुदेवानां यतीनां ब्रह्मचारिणां ।

पितृपाको न दातव्यो यावत्पिण्डान्न निर्वपेत् ॥

---

(१) हन्तकारादिकं ।

इत्यादि बहुवाक्यपर्य्यालोचनया पार्वणैकोद्दिष्टरूपोभयपितृ-श्राद्धानन्तरमेव साग्निकैर्निरग्निकैरपि वैश्वदेवादिकं कार्य्यं ।

यत्तु परिशिष्टे,—

संप्राप्ते पार्वणे श्राद्धे एकोद्दिष्टे तथैव च ।

अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेऽहनि ॥

इति, तच्छान्दोग्यविषयमेव,—

श्राद्धे प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः ।

एकादशाह्निकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥

इति शालकायनोक्तिरपि पूर्वोक्तिसमानत्वात् तत्परमेव ।

एवं,—

याजुषाः सामगाः पूर्वे श्राद्धमध्ये तु बह्वृचाः[1] ।

अथर्वाः पाकशेषेण वैश्वदेव तु कारयेत् ॥

इति शौनकोक्तौ यद्यजुर्वेदिनामपि श्राद्धपूर्वत्वं, तत् वाज-सनेयीतरशाखिपरं इति निबन्धकृतः ।

यदपि,—

वैश्वदेवाहुतीरग्नावर्वाक् ब्राह्मणभोजनात् ।

जुहुयात्[2] भूतयज्ञादि श्राद्धं कृत्वा ततः स्मृतम् ॥

इति ब्रह्माण्डपुराणोक्तौ अग्नौकरणानन्तरं वैश्वदेवः, तदनन्तरं श्राद्धब्राह्मणभोजनम् । तदुत्तरं भूतयज्ञादि इत्युक्तम् । तदपि शाखान्तरविषयम्, अस्मच्छाखोक्तकर्मक्रमविरोधात् । पितॄन् सन्तर्प्य इत्यादि बहुवाक्यविरोधाच्च ।

---

(१) बह्वृच । (२) जुहुयात् ।

यत्तु,—

पित्रर्थं निर्वपेत् पाकं वैश्वदेवार्थमेव च ।

वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम् ॥

इति [१]लोकाचिवाक्यम् । तद्देशविशेषे श्राद्धपाकात् पृथक्पाके वैश्वदेवं कुर्वतामेवादृतम् । दार्शं दर्शसम्बन्धीत्यर्थः दर्शश्राद्धस्य-सर्वश्राद्धप्रकृतिकत्वात् सर्वश्राद्धपरत्वमेतस्य इति आचार्य्याः ।

यदपि लोकाचिवाक्यम्,—

पचान्तं कर्म निर्वर्त्त्य वैश्वदेवं च साग्निकः ।

पितृयज्ञं ततः कुर्य्यात्ततोऽन्वाहार्य्यकं बुधः । इति ।

तदपि शाखान्तरपरम् ।

पितृयज्ञं तु निर्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।

पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम् ॥

इति मनूक्तिविरोधात् । पचान्तमन्वाधानम् । पिण्डान्वाहार्य्यकं दर्शश्राद्धं एवमादिषु यत्साग्निकपदं तत् अनुवादमात्रं । न तु साग्निकानग्निकयोः क्रमभेदार्थं इति बोध्यं ।

यत्तु,—

वैश्वदेवमकृत्वैव श्राद्धं कुर्य्यादनग्निकः ।

लौकिकेऽग्नौ कृते शेषः पितॄणां नोपतिष्ठते ॥

इति परिशिष्टवचनं, तदपि पूर्वोक्तव्यवस्थार्थम् ।

यत्तु केचिल्लिखितम् । सर्वेकोद्दिष्टानां वचनात् नित्यश्राद्धानन्तरं करणम् ।

(१) लोकाचिवाक्यं ।

तथा च जावालिः,—

पार्वणं त्वभिनिर्वर्त्त्य एकोद्दिष्टं समाचरेत् । इति ।

नित्यश्राद्धमपि पार्वणमिति । तत्र सर्वशब्दोपादानं चिन्त्यम् । तथाच जावालिना,—

यद्येकत्र [1]भवेयातामेकोद्दिष्टं च पार्वणम् ।
पार्वणं त्वभिनिर्वर्त्त्य एकोद्दिष्टं समाचरेत् ॥

इत्युक्तम् । तत्र एकोद्दिष्टपदेन मातृसाम्वत्सरिकादिपरिग्रहो- न पितृसाम्वत्सरिक इति सर्वैर्व्याख्यातम् । अस्माभिरपि वक्ष्यते, तस्य पृथगनुष्ठानाभावात् इति । तथाच एतद्वाक्यं न पितृसाम्वत्स- रिके प्रसरति । किं च नित्यश्राद्धस्य पार्वणत्वमिति शास्त्रात् न लभ्यते । मत्स्यादौ नित्यश्राद्धविधेः पार्वणभिन्नत्वात् कालभेदात् वैश्वदेवहीनत्वाच । यदि अमावास्याश्राद्धस्य सर्वश्राद्धप्रकृतित्वात् पार्वणत्वं नित्यश्राद्धस्यापि इति । तर्हि एकोद्दिष्टश्राद्धादीनामपि पार्वणत्वं स्यात् । इत्यलमतिविस्तरेण ।

यत्तु,— विप्रमिश्रैरुक्तम्,—

विसर्ज्जनं तु प्रथमं पितृपैतामहेषु वै ।

इत्यन्तं पार्वणश्राद्धमुक्त्वा,—

ततस्तु वैश्वदेवाख्यां कुर्य्यान्नित्यक्रियां बुधः ॥

इति विष्णुपुराणोक्तौ पार्वणश्राद्धोक्तेरेकोद्दिष्टश्राद्धोत्तर- काले वैश्वदेव इति, तन्न रुचिरम् । तत्र पार्वणश्राद्धपदस्योद्दिष्ट-

---

(१) समायाता ।

त्वात् तदनन्तरता उक्तेति प्रत्युत वैश्वदेवस्य श्राद्धोत्तरकालताविधे-रुक्तत्वात् अनेकवाक्येषु अविशेषेण श्राद्धानन्तरोक्तेश्च ।

यद्यपि तैरन्यैरप्युक्तम्, पितॄन् यन्तर्यं पितॄणां नोपतिष्ठत इति बहुवचनप्रयोगादेकोद्दिष्टस्य व्यावृत्तिरिति तदपि मन्दम्। तत्र बहुवचनस्याविवक्षितत्वात् । प्रत्युत एकवचनोपादाने तु पार्वणो-त्तरत्वनिषेधः प्रसक्तः स्यात् बहुवचनोपादानादुभयोरपि साधारण्येन प्रतीतिरिति न कश्चिद्विरोधः । सर्वमेतत्पर्य्यालोच्य षट्त्रिंशन्मत-कारिकायां साधारण्येन श्राद्धपदमुपात्तम् ।

प्रातिवासरिको होमः श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥ इति ।

मात्स्येऽपि,—

निर्वर्त्य प्रणिपत्याथ पर्युक्ष्याग्निं समन्त्रवत् ।
वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव च ॥ इति ।

केवलं मातृश्राद्धस्य पार्वणत्वे एकोद्दिष्टत्वेऽपि वैश्वदेवानन्तर-मेवानुष्ठानम् ।

पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा ।
पितृपूर्वं सुतः कुर्य्यादन्यत्रासक्तियोगतः ॥

इति कार्ष्णाजिन्युक्तेर्नित्यश्राद्धस्यापि पितृसम्बन्धित्वेन बल-वत्त्वात् । नवे पश्चाद्भवे पर्युषिते चिरन्तने पूर्वभवे इत्यर्थः । अन्यत्र मातापितृव्यतिरिक्तश्राद्धे, आसक्तिः आसन्नता अन्तरङ्ग-त्वमिति यावत् । एवं च सुतरां पितृव्यादिश्राद्धात् पूर्वमेव वैश्वदेवः कार्य्यः इति सिद्धम् । नन्वेवं सति मातृश्राद्धस्यादौ नित्य-

श्राद्धादौ अनुष्ठानं भवतु श्राद्धानन्तरं वैश्वदेवबलिकर्म कार्य्यमिति चेत्, उच्यते। वैश्वदेवबलिकर्मोत्तरत्वमेव नित्यश्राद्धस्येति सुतरां आदौ वैश्वदेवबलिकर्म इति सिद्धं। एतदस्मत्कृताचारसारे द्रष्टव्यम्। इति।

अथ देवपूजाश्राद्धयोः क्रमः।

श्राद्धदिने पाकस्य पितृद्देशेन कृतत्वात् सिद्धमन्नं दत्यादिभूतवचनस्यापि तत्र विहितत्वात् आदौ श्राद्धं कार्य्यमिति प्रतीयते। किञ्च पिण्डदानान्ते,—

यत्किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमथापि वा।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन॥

श्राद्धकाले,—

ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत्।
चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेत्॥

इत्यादिवचनैः आदौ श्राद्धं कार्य्यमिति प्रतीयते।

तथा,—

विष्णूपभुक्तशेषेण यष्टव्यं देवतान्तरम्।

तथा,—

पितृशेषं तु यो दद्याद्धरये परमात्मने।
रेतोदाः पितरस्तस्य भवन्ति इत्यादि॥

तथा,—

हरेर्निवेदितं सम्यक् देवेभ्यो जुहुयाद्धविः।
पितृभ्यश्चापि तद्दद्यात् फलस्यानन्त्यमाप्नुयात्॥

इति वचनैर्विष्णुपूजायाः प्राथम्यं प्रतीयते। एवं सन्देहात् सर्वपकद्रव्यं द्विधा कृत्वा श्राद्धार्थमेकभागं देवार्थमेकभागं च समकालमेव परिवेषयन्ति। पिण्डदानसमकालं विष्णुं पूजयन्ति च। केवलं येषामन्यदेवा अपि अभीष्टाः ते श्राद्धपरिवेषणसमकालं देवतोद्देशेन परिवेषणं कृत्वा पिण्डदानानन्तरं वैश्वदेवात् पूर्वं पूजयन्ति। पितृशेषस्य विष्णोरेव निषिद्धत्वात्। प्रतिदिनविहिताभीष्टदेवतापूजनं वैश्वदेवात् पूर्वमिति निर्णीतत्वाच्च ॥०॥ इति।

अथ पार्वणैकोद्दिष्टयोः क्रमः ॥

जावालिः,—

यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणम्।
पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत्॥

पार्वणं अमावास्यादिविहितं। एकोद्दिष्टं एकोद्दिष्टकुले मातृसाम्वत्सरिकम्। सर्वेषां पित्रव्यादिसाम्वत्सरिकं च मात्रन्तर साम्वत्सरिकं च। एकोद्दिष्टकुलेऽपि न पितृसाम्वत्सरिकम्, तस्य पृथगनुष्ठानाभावात्। तत्र वचनं वक्ष्यते। यद्रिमिश्रैरुक्तं मातृसाम्वत्सरिकं च तद्दिने पाकस्य तन्त्रत्वेऽपि एकोद्दिष्टिभिरमावास्याश्राद्धानन्तरं कर्त्तव्यम्। पार्वणिभिः पुनर्दैवताभेदात् प्रागेव अमावास्याश्राद्धात् पृथक् कर्त्तव्यम्। कालादर्शमते इतरपार्वणस्य कालभेदात् इति। तन्न रुचिरम्। पित्रोः श्राद्धे समं प्राप्ते इति पितृश्राद्धस्य प्रथमत एव वाचनिकत्वाच्च।

पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि।

इति कालादर्शप्रामाण्याच्च। कालभेद इति यो हेतुरुपन्यस्तः

सोऽप्यप्रयोजकः। बाधनिकेऽर्थे युक्तेरनवकाशात्। अन्यथा एकोद्दिष्टस्य कालभेदात् पार्वणोत्तरत्वं तन्मतेऽपि न स्यात्।

इति निपुणमतिभिर्विभावनीयम्।

तथाच दर्शाष्टकायुगादिप्रेतपक्षेषु मातृमरणेऽशौचान्तविहितत्वेन वा मातृमृताहश्राद्धे प्रसक्ते वा दर्शादिश्राद्धानन्तरं मातृमृताहश्राद्धं कार्य्यम्। केवलमन्वष्टकायां मातृमरणे अन्वष्टकाश्राद्धेन तत्साम्वत्सरिकश्राद्धस्यापि तन्त्रेण सिद्धिः। एवममावास्यादिश्राद्धदिने तन्त्रसिद्धं।

प्रेतपक्षे च पितृमरणे साम्वत्सरिकश्राद्धं अमावास्यादिपार्वणेन

अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः।
पार्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदाचन॥

इति शंखोक्तेः। अमावास्यां इति अत्यन्तसंयोगे द्वितीया। अमावास्यायामित्यर्थः। अमावास्यापदं अष्टकादिसर्वपर्वोपलक्षणं। तथा च, गार्ग्यः,—

पर्वकाले मृताहश्च यदैव तद्द्वयं भवेत्।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचन॥ इति।

[1]अत्र पार्वणिनामपि मातामहाद्यधिकदेवताविषयत्वेन अमावास्याश्राद्धस्यैव तन्त्रत्वात्पुरूरवोमाद्रवसोरेव देवतात्वमिति कर्काचार्य्याः। तत्र केचिदाशंकन्ते, मृताहश्राद्धस्य नैमित्तिकत्वात् नित्यात् नैमित्तिकस्य बलवत्त्वात्कालकामयोर्देवतात्वमिति, तन्न न्याय्यम्।

---

(१) तत्र।

नैमित्तिकस्य तन्त्रत्वे मातामहादीनां प्रवेशाभावः प्रसज्येत। किञ्च एकोद्दिष्टकुले विश्वेदेवाभावेऽपि अमावास्यादिवत्त्वेनैव पुरूरवो-माद्रवसोर्दैवतात्वं, पार्वणिनां मृताहस्य बलवत्त्वात् कालकामयो-र्दैवतात्वमिति सर्वानुगतो न्यायो न स्यात्। तस्मान्नात्र कालकामयो-र्दैवतात्वं. सकृदनुष्ठितमनेकानुगतं तन्त्रम् इति सामान्यतन्त्र-लक्षणम्। यदा तु एकोद्दिष्टिनामपि अशौचादिनाऽमावास्यादिषु पितृसाम्वत्सरिककरणम्। तदाऽमावास्यापार्वणेन एकोद्दिष्टं प्रसङ्ग-सिद्धम्। ननु एकोद्दिष्टपार्वणयोः कालभेदात्कथं प्रसङ्गसिद्धि-रिति चेदुच्यते। हविःस्वासादितेषु [(१)]प्रवृत्तौ [(२)]प्रयाजनस्यानु-ष्ठानात्तिष्ठन्तं पशुं प्रयजन्तीति पशौ कालभेदेऽपि प्रसङ्गवत्। अन्योद्देशेनानुष्ठितस्यान्यत्रोपकारसंपादनं प्रसङ्ग इति प्रसङ्गलक्षणम्। अमावास्यादिषु षाट्पुरुषिकश्राद्धे कृतेऽपि षाट्पुरुषिकं नित्यश्राद्धं पुनः कार्य्यमेव।

तथा च श्राद्धेतरकर्माधिकारे मार्कण्डेयपुराणे,—

नित्यक्रियां पितॄणां तु केचिदिच्छन्ति सत्तमाः।
न पितॄणां तथैवान्ये पृथक् पूर्ववदाचरेत्।
पृथक्पाके न वेत्यन्ये केचित्सर्वमपूर्ववत्।

इति बहवः पक्षा उक्ताः। तत्र प्रथमपक्षस्यैवास्मद्देशे आदृतत्वात्। तस्मात् विप्रमिश्रैरमावास्याश्राद्धदिने तदहर्विहितं षाट्पुरुषिक-नित्यश्राद्धं अमावास्याश्राद्धेनैव तन्त्रसिद्धत्वात् न कर्त्तव्यं इति

(१) क्रतौ। (२) प्रयाजस्य।

यल्लिखितं। तदत्यन्ताचारविरोधात् मार्कण्डेयपुराणैकपक्षाश्रयणा-
द्वानादरणीयमेव। इति॥

अथ एकदिने बहुश्राद्धनिर्णयः।

दक्षः,—

नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कस्यचित्।
न यज्ञं न बलिं चैव देवर्षिपितृतर्पणम्॥

इत्येतत् काम्यश्राद्धपरमिति वचनान्तरात्।

तथाच जावालिः,—

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने।
नैमित्तिकं तु कर्त्तव्यं निमित्तानुक्रमोदये[१]॥

क्रतुः,—

श्राद्धं कृत्वा पुनःश्राद्धं न कुर्य्यादेकवासरे।
यदि नैमित्तिक न स्यादेकोद्दिष्टं[२] भवेद्यदि॥

संघातमरणे श्राद्धक्रमः।

बृहस्पतिः,—

एकाहनि विनष्टानां बहूनामथवा द्वयोः।
तन्त्रेण श्रपणं कृत्वा पृथक्पचं प्रकल्पयेत्॥
कृत्वा पूर्वमृतस्यादौ द्वितीयस्य ततः परम्।
तृतीयस्य ततः कार्य्यं सन्निपाते त्वयं क्रमः॥

बहूनामेकोद्दिष्टानां सन्निपाते इति शेषः।

---

(१) क्रमोदयात्।   (२) स्यादेकोद्दिष्टं।

क्रमज्ञानाभावे तु,—

भवेद्यदि सपिण्डानां युगपन्मरणं तदा ।

सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् ॥ इति ।

सपिण्डपदोपादानात् इदं सर्वं मातापितृव्यतिरिक्तविषयम् । युगपन्मरणं च जले वा गृहदाहादिना वा इति ज्ञेयम् ।

मातापित्रोस्तु सहगमनेऽन्यप्रकारेण युगपन्मरणे वा एकदैव ब्राह्मणभेदेन पूर्वमध्यमोत्तररूपाणां त्रिविधानामपि क्रियाणां करणम् ।

तथाच देवलः,—

पित्रोरुपरमे पुत्राः क्रियां कुर्य्युर्द्वयोरपि ।

अनुमृतौ च नान्येषां संघातमरणेऽपि च ॥

अनुमृतौ सहगमने शूद्रस्त्रीणां दृगाहमध्येऽनुगमने च । महाभारतादिषूभयत्रापि अनुमरणादिपदप्रयोगात् पितृश्राद्धयोर्युगपत् करणेऽपि आदौ पितृकर्म कृत्वा ततो मातृकर्म क्रियते, इति । पितृपूर्वत्वमपि संगतम् । सहाग्निप्रवेशे तिथिभेदे तु मातृसाम्वत्सरिकं यथातिथ्येव । सपिण्डनान्तक्रियायामेव मातुः तिथेरङ्गोऽप्यनादरात् । एतदशौचप्रकरणे लिखितम् ।

एवं सपत्नमातॄणां बहूनामप्यग्निप्रवेशे बोध्यं । तत्र यस्याः पुत्रो विद्येत तस्य विभक्तत्वे साम्वत्सरिकस्य तथाविधिकरणे अधिकारः । एवमपुत्रपितृव्यपत्न्याद्यग्निप्रवेशेऽपि । वैश्वदेवस्य सतन्त्रमातृसाम्वत्सरिके पूर्वानुष्ठाने सिद्धेऽपि अग्निप्रवेशे तु मातृसाम्वत्सरिकस्य पितृसाम्वत्सरिकाधीनत्वात् अन्वष्टकायामिव पश्चादनुष्ठानमविरुद्धम् ।

अमावास्यादिनित्यश्राद्धाशक्तौ संकल्पश्राद्धं कार्य्यम्,—

अशक्त्या पार्वणश्राद्धं यथावत्कर्त्तुमक्षमः।
पिण्डार्घादिविहीनं तु संकल्पश्राद्धमाचरेत्॥
अग्नौकरणमर्घं चावाहनं चावनेजनम्।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्ज्जयेत्॥
स्वधावाचनलोपोऽस्ति विकिरस्त्वेव लुप्यते।
अक्षय्यदक्षिणास्वस्तिसौमनस्यं तथापि च॥

इति वाक्यात्।

अथ वा पिण्डमात्रं देयम्,—

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः।
श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोऽपि वा॥

इति धर्मोक्तिः। अमावास्यायां तु तन्त्रोक्तविधिना षट् पिण्डाः। अष्टकायामपि तथा। अन्वष्टकायां तु छान्दोग्यव्यतिरिक्तानां नव पिण्डाः। छान्दोग्यानां षट् पिण्डाः। जीवन्मातृकाणां च तथा। इति पिण्डमात्रदानपक्षे व्यवस्था।०।

पिण्डवलिपक्षे,— भक्ष्यं भोज्यं तथा पेयं यत्किञ्चित् पच्यते गृहे।
न भोक्तव्यं पितॄणां तदनिवेद्य कथञ्चन॥

इति श्राद्धप्रकरणे यमेनोक्तत्वात् नवभाण्डे पिष्टकादिकं कृत्वा ददतीति समाचारः। पिण्डमात्रदानासम्भवे उपवासः। सर्वकृष्णपक्षाणां श्राद्धकालत्वं वैजवापः,— कृष्णपक्षे श्राद्धं प्रकुर्वीत अन्नं संस्कृत्य पक्वा,—

कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीम्।

श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥
यथा चैवापरः पक्षः कृष्णपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥

हारीतः,— सम्वत्सरः प्रजापतिः तस्योदगयनं शुक्लोऽहः पूर्वाह्णश्च देवानां दक्षिणायनं तमिस्रः रात्रिपरपराह्णश्च तत्पितॄणां इति । शुक्लः शुक्लपक्षः । तमिस्रः कृष्णपक्षः ।

ब्राह्मे,—

पयोमूलफलैः शाकैः कृष्णपक्षे च सर्वदा ।
पराधीनः प्रवासी च निर्धनो वापि मानवः ॥
मनसा भावशुद्धेन श्राद्धे दद्यात्तिलोदकम् ।
नाश्नन्ति पितरश्चेति कृत्वा मनसि यो नरः ॥
श्राद्धं न कुरुते भक्त्या तद्देहाद्रुधिरं च ते ।
पिबन्ति सर्वनाशं च कुर्वन्त्यथ पदे पदे ॥
तस्मात्प्रयत्नेन (१)स्वपितॄन् तर्पयेत् सततं बुधः ।
पक्षान्ते निर्वपेत्तेभ्यो ह्यपराह्णे च वेदवित् ॥

अत्रोक्तं तिलतर्पणं अत्यन्तासमर्थविषयमेव ।

तथा विष्णुपुराणे,—

अन्नेन वा यथाशक्त्या कालेऽस्मिन् भक्तिनम्रधीः ।
भोजयेतात्र विप्राग्र्यान् भक्त्या विभवतो नरः ॥
असमर्थोऽन्नदानस्य धान्यदानं स्वशक्तितः ।
प्रदास्यति द्विजाग्र्येभ्यः स्वल्पां वा पितृदक्षिणाम् ॥

(१) च पितॄन् ।

तचाप्यसामर्थ्ययुतः [१]कराग्र्यात्प्रस्थितांस्तिलान्।
प्रणिपत्य द्विजाग्र्याय कस्मैचित्तु प्रदास्यति॥
तिलैः सप्ताष्टभिर्वापि समवेतान् जलाञ्जलीन्।
भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति॥
यतः कुतश्चित् संप्राप्य गोभ्यो वापि गवाह्निकम्।
अभावे प्रीणयन्नस्मान् श्रद्धापूतः प्रदास्यति॥
सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः।
सूर्य्यादिलोकपालानामिदमुच्चैः पठिष्यति॥

न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोग्यं स्वपितॄन्नतोऽस्मि।
तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य॥
तचाप्यचायुत्सर्गः पितुर्येन कार्य्यः, अस्माकं समुद्दिश्येत्युक्तेः।

स्मृत्यन्तरे,—

तृणानीह गवे दद्यात् पिण्डान् वाऽप्सु निर्वपेत्।
तिलदर्भैः पितॄन् वापि तर्पयेद्विधिपूर्वकम्॥
अग्निना वा दहेत्कक्षं श्राद्धकाले समागते।
तस्मिंश्चोपवसेदाह्नि जपेद्वा श्राद्धसंहिताः[२]॥

अन्यत्र,—

किञ्चिद्दद्यादशक्तस्तु उदकुम्भादिकं द्विजे।

सर्वत्र[३] योऽयममावास्यादिकालनियम उक्तः। स शक्तस्य द्रव्यादियुक्तस्यारोगिणः। असामर्थ्ये तु वशिष्ठः,—श्रावण्याग्रहा-

---

(१) कुशाग्रसहितान्। (२) संहितां। (३) सर्वः।

यण्मोस्य अन्वष्टकासु च पितृभ्यो दद्यात् निगमा आहिताग्नेः पितृचर्चनं पिण्डैरेव ब्राह्मणानपि वा भोजयेत् पूर्वश्रुतेः। अपरपक्षे यदहः सम्पद्येत, अमावास्यायां तु विशेषेण अष्टकातीर्थतिथि-ब्राह्मणद्रव्यसम्पत्तु चिकीर्षित। इति सर्वत्र कृष्णपक्षस्य यस्यां कस्यांचित्तिथौ यच्छ्राद्धमुक्तं तत्राहिताग्नेर्नाधिकारः। न दर्शेन विनेत्यादिनान्यदिने निषेधात्। दक्षिणाग्न्युद्धरणस्य दर्शे विध-मानत्वाचेति पूर्वमुक्तं। निरग्नेरपि दर्शे करणं तस्य सर्वोद्देशेन उक्तत्वात्।

देवलेन तु,—

अनेन विधिना श्राद्धं कुर्यात् सम्वत्सरं सकृत्।

त्रिश्चतुर्वा यथान्यायं मासि मासि दिने दिने॥

इति सम्भवासम्भवतारतम्येन बहवः पक्षा उक्ताः। तत्र सकृत्-करणपक्षः कन्यायामेव। तस्यां श्राद्धेऽतिप्रशस्तत्वात्, इति निबन्धकृतः।

अथ गृहपाकपरित्यागकालाः।

प्रचेताः,—

काम्ये प्रेते च यज्ञे च पितॄणां चैव वत्सरे।

महोत्सवे व्यतीपाते पूर्वपाकं परित्यजेत्॥

स्मृतिसारे,—

विवाहोत्सवयज्ञेषु मातापित्रोर्मृतेऽहनि।

गृहे मृते प्रसूते च पूर्वपाकं परित्यजेत्॥

स्मृतिसमुच्चये,—

काम्ये प्रेते तथा यज्ञे भावदुष्टं यदा भवेत्।

सूतके मृतके चैव पूर्वपाकं परित्यजेत् ॥

स्मृतिः प्रेतकृत्ये,—

त्रिपक्षेऽब्दाऽथ षण्मासे सपिण्डीकरणे तथा ।

पूर्वपाकः परित्याज्यो मृताहात्तृद्वादशेऽहनि ॥

अथामावास्यादिश्राद्धप्रकरणे देवलः,—

तथैवामन्त्रितो दान्तः स्नात्वा प्रातः सहाम्बरः ।

आरभेत नवैः पात्रैरन्नारम्भं सबान्धवः ॥

अन्नारम्भं पाकारम्भमित्यर्थः । सहाम्बर इत्यनेन वस्त्रद्वय-धारणमुक्तम् । एकवस्त्राभावे नग्नत्वप्रसक्त्या वस्त्रपरिधाने सिद्धेऽपि सवस्त्रत्वोक्तेर्वैयर्थ्यात् । सबान्धव इत्यनेन सपिण्डानामपि पाका-धिकार उक्तः । आमन्त्रितमामन्त्रणमस्यास्तीति आमन्त्रितः कृतज्ञातिनिमन्त्रण इत्यर्थः । अत्र तिथितत्त्वकारैः आमन्त्रितो निमन्त्रितः सुहृद्भिः स्वजनैश्चेति यद्व्याख्यातं तन्न चारु । सुहृदादीनां यजमानकामन्त्रणस्यासंलग्नत्वात् । अत्र वाक्ये पाकत्यागानुक्तेर्दर्शा-दिश्राद्धेषु नवभाण्डेषु पक्त्वा श्राद्धं कुर्वीत तद्भाण्डानि पूर्वपाके च मिश्रयन्ति न तु पूर्वपाकं त्यजन्ति ।

अथ नित्यविहिततिलतर्पणनिषिद्धकालाः ।

ब्रह्माण्डपुराणे,—

पितृश्राद्धे रवौ शुक्रे सप्तम्यां निशि सन्ध्ययोः ।

संक्रान्त्यां जन्मदिवसे न कुर्यात्तिलतर्पणम् ॥

पुनस्तत्रैवापवादः,—

अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः ।

उपाकर्मणि चोत्सर्गे युगादौ पितृवासरे ॥
रविशुक्रदिने वापि न कुर्य्यात्तिलतर्पणम् ।
तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम् ॥

एवमर्थकानि मरीच्यादिवाक्यानि विस्तरभयात् न लिख्यन्ते । पितृवासर इत्यत्र मृतवासर इति मात्स्ये पाठः। अयने मकरकर्कटसंक्रान्त्यां । युगादौ तच्चतुष्टये । पितृवासरे पितृमातृसाम्वत्सरिकयोः । तिथिविशेषे सप्तम्यां । तस्या एव तिथेः पूर्वमुक्तत्वात् । प्रेतपक्षो महालयपक्षः । तथाच यथायोग्यं अयनादिप्रेतपक्षान्तेषु रविशुक्रवासरादियोगेऽपि तिलतर्पणं कार्य्यमेव । चन्द्रग्रहणे रात्रावपि तिलतर्पणं कार्य्यम् । तद्ग्रहणस्य तत्रैव प्रवृत्तेः[१] । अन्यत्र रात्रिसन्ध्ययोर्नैव तिलतर्पणं, अपवादाभावात् । अयनादियोगाभावे तु रविवारादिजन्मदिनान्तेषु नैव तिलतर्पणम् । एतेन संक्रान्तिनिषेधोऽयनविषुवव्यतिरिक्ताष्टसंक्रान्तिविषयः । पितृश्राद्धनिषेधः काम्यश्राद्धादिविषयः । केचित्तु अष्टकान्वष्टकादर्शश्राद्धानां अपवादोक्तावनुपादानात् तद्विषयेऽपीति[२] तन्न ।

उपप्लवे चन्द्रमसो रवेश्च त्रिष्वष्टकास्वप्ययने द्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥

श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत्पितरो नृपोचुः । इति विष्णुपुराणोक्तौ अष्टकासु तिलतर्पणस्य विहितत्वात् ।

---

(१) प्रसक्तेः । (२) तद्विषयोऽपीति ।

नीलपङ्कप्रमोचेण अमावास्यां तिलोदकैः ।
वर्षासु दीपकैश्चैव पितॄणामनृणो भवेत् ।

इति महाभारतमात्स्ययोर्दर्शे तद्विधानात् पारम्पर्य्याचाराच्च। यच्च प्राचीनैरुक्तं अयने विषुवे चैवेति वाक्यस्य प्रामाण्ये पितृ-सांवत्सरिके विकल्प इति तन्न। तस्मिन्नेव ब्रह्माण्डे मात्स्ये च एतद्वाक्यदर्शनादप्रामाण्यशंकाया अनुदयात् ।

उपाकर्मण्युपोत्सर्गे युगादौ मृतवासरे ।
शुक्रसूर्य्यदिने चैव न कुर्य्यात्तिलतर्पणम् ॥

इति मरीच्युक्तेश्च।

निषिद्धदिने तिलतर्पणे दोषः स्मृतौ,—

निषिद्धं दिनमासाद्य यः कुर्य्यात्तिलतर्पणं ।
रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्॥

एतत्तीर्थातिरिक्तविषयं ।

तीर्थमात्रे तु कर्त्तव्यं तर्पणं सतिलोदकैः ।
अन्यथा कारयेन्मूढः स्वविष्ठायां भवेत्कृमिः ॥ इति स्मृतेः ।

अथ दन्तधावननिषिद्धकालाः ।

नारसिंहे,—

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सत्तमाः ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥

महाभारते,—

भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि च वर्जयेत् ।

शास्त्रदृष्टानि काष्ठानीति सम्बन्धः। पर्वाणि चतुर्दश्यष्टम्यमा-

वास्थारविसंक्रान्तयः। अत्र नित्यदन्तधावने काष्ठनिषेधात् काष्ठेनापि सुखार्थदन्तधावने भोजनोत्तरादृष्टार्थदन्तधावने वा न कश्चिद्विरोधः।

स्मृत्यन्तरे,—

श्राद्धे जन्मदिने चैव विवाहे मुखदूषिते।
व्रते चैवोपवासे च वर्ज्जयेद्दन्तधावनम्॥

तथा,—

न भक्षयेद्दन्तकाष्ठमेकादश्यां नरेश्वर।
आदित्यदिवसे चैव तस्मादेनो महद्भवेत्॥

इति। केचिदत्र दीक्षाकर्माङ्गत्वेन दानहोमप्रतिषेधवत् श्राद्धाद्यङ्गत्वेन काष्ठकरणकं दन्तधावनं यदि प्रतिषिध्यते[१] । तर्हि पशाबाज्यभागयोरिव विहितप्रतिषेधात् विकल्प आपद्येत इति भयेन सुखार्थदन्तधावननिषेधः[२] कल्पनीय इति, तन्न।

व्रतोपवासदिवसे खादित्वा दन्तधावनम्।
गायत्र्याः शतशः पूता अपः प्राश्य विशुध्यति॥

इति कर्माङ्गभंगप्रायश्चित्तविधानस्य वैयर्थ्यापत्तेः।

ननु तर्हि श्राद्धदिनेषु सुखार्थदन्तधावनं पूर्ववत् कार्य्यमिति चेन्न। सर्वभोगविवर्ज्जितः इति वाक्यात् श्राद्धे भोगत्वेन एव तस्य निषेधात्। भोजनोत्तरदन्तधावनस्याप्यत्र निषेधः। विशिष्य पूर्वप्रायश्चित्तोक्तेः।

(१) प्रतिषेधते। (२) दन्तधावनविशेषः।

निषिद्धदिनेष्वपि प्रकारान्तरमाह पैठीनसिः,—

अलाभे वा निषेधे[१] वा काष्ठानां दन्तधावनम्।
पर्णेन वा विशुद्धेन जिह्वोल्लेखं समाचरेत्॥

स्मृत्यन्तरे,—

कुहूपष्ठ्योर्नवम्यां च पक्षादौ दन्तधावनम्।
पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव हि॥

व्यासः,—

अलाभे दन्तकाष्ठानां प्रतिषिद्धे[२] दिने तथा।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम्॥

तथाच दन्तकाष्ठनिषेधे द्वादशजलगण्डूषाणां शुद्धपर्णस्य च समो विकल्पः, अतएवास्मद्देशे सर्वदा आम्रपत्रैरेव दन्तधावनं कुर्वन्ति इति समाचारः। अथ[३] गण्डूषपक्षे आयुर्बलमिति मन्त्रेण वनस्पते इत्यत्र जलगण्डूष इत्यूहः कार्य्यः। धान्यमसि इत्यादि मन्त्रेषु तरसमसि इत्याद्यूहः कार्य्यः इति तरसमयाधिकरणन्यायात्। पर्णपक्षे तु नोहः। तस्यापि काष्ठवत् वनस्पतिजत्वात्। निषिद्धदिनेष्वपि जिह्वोल्लेखः कार्य्य एव, जिह्वोल्लेखः सदैव हि इत्युक्तेः।

अथ प्रसङ्गात् श्राद्धपूर्वदिनकृत्यश्राद्धदिनकृत्यनिर्णयः।

तत्र निमन्त्रणैकभक्तादिविचारः देवलः,—

अक्षुद्रो निभृतः स्वस्थः श्रद्धावान्नरः शुचिः।
समाहितमनाश्चात्र क्रियायामसकृत् सदा॥
श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्।

---

(१) निषिद्धे। (२) प्रतिषिद्धदिने। (३) तत्र।

निरामिषं सकृद्भुक्त्वा सर्वभुक्तदिने[१] गृहे ॥
असम्भवे परेद्युर्वा ब्राह्मणांस्तान् निमन्त्रयेत् ।
अज्ञातो न समानार्षो न युग्मानात्मशक्तितः ॥

निरामिषमित्यनेन हविष्यभोजन ।

सर्वकर्मस्वपि हारीतः,—

श्वोभूते दैवपित्र्ये औपवस्त्यमश्नाति इति । उपवस्तं उपवासः तस्मै हितं औपवस्त्यं घृतभूयिष्ठं हवि. ।

पूर्वेद्युर्निमन्त्रणाशक्तावपि कर्त्तुः पूर्वेद्युर्हविष्यभोजनमेव साधारणं इति कल्पतरुकाराः । सर्वे भुक्ता भुक्तवन्तो यस्मिन् तथा । असम्भवे कुतश्चित् कारणात् निमन्त्रणासम्भवे । आर्षाः प्रवराः ।

वाराहे,— वस्त्रशौचोदककर्त्तासीति जानता,—

स्नानोद्लेपनं भूमिं कृत्वा विप्रान्निमन्त्रयेत् ।
दन्तकाष्ठं च विसृजेत् ब्रह्मचारी शुचिर्भवेत् ॥

भूमिं कृत्वेति दक्षिणाश्रवणाद्दिगुणोपेतामिति शेषः । विसृजेद्ब्राह्मणादिभ्यो दद्यात् इति कल्पतरुकाराः ।

अत्र तद्व्याख्यायिभिरप्राचीनैर्यद्दन्तकाष्ठदानं लिखितं, तत् कल्पतरुकाराणां किमभिप्रायमिति यत् लिखितं, तन्न समीचीनं। निमन्त्रितब्राह्मणार्थं दन्तकाष्ठदानस्य वक्ष्यमाणत्वेन पूर्वदिननिमन्त्रणपक्षे श्राद्धकर्त्तृदन्तकाष्ठेनैव तद्दन्तधावनस्योचितत्वमिति तदभिप्रायात् । प्रातरेव दन्तधावनस्य काल इति पूर्वेद्युर्दन्तकाष्ठदानं उचितमेव इति सूक्तं कल्पतरुकारैः ।

---

(१) जने ।

मार्कण्डेयपुराणे,—

निमन्त्रयेत पूर्वेद्युः पूर्वोक्तान् द्विजसत्तमान्।
अप्राप्तौ तद्दिने वापि हित्वा योषित्प्रसङ्गिनः॥
भैक्षार्थमागतान् वापि काले संयमिनो यतीन्।
भोजयेत् पाणिपाद्याद्यैः प्रसाद्य यतमानस,॥

निमन्त्रणं प्रकृत्योशनाः,— चतुरवरान् इति। द्वौ दैवे एकैकं वा पितृमातामहवर्गयोः अपरेद्युः प्रातःकाले चामन्त्रणमिति।

मनुबौधायनशातातपाः,—

द्वौ दैवे पितृकृत्ये त्रीन् एकैकमुभयत्र वा।
भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरे॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरे॥

ब्राह्मे,—

देशकालधनाभावादेकैकमुभयत्र वा।
शेषान् वित्तानुसारेण भोजयेदन्यवेश्मनि॥
यस्माद्ब्राह्मणबाहुल्याद्दोषो बहुतरो भवेत्।
श्रीविनाशो मौनना(शः) श्राद्धतन्त्रस्य विस्मृतिः॥

उच्छिष्टोच्छिष्टसंस्पर्शः इत्यादि।

याज्ञवल्क्यः,—

मातामहानामप्येवं तन्त्रं (१)च वैश्वदेविकम्।

(१) तन्त्र वा।

अतएव सपिण्डीकरणव्यतिरिक्तश्राद्धेषु एकैकपच एवाद्रियते। राजगृहे तु महालायादौ साचाद्ब्राह्मणाभावेन छ्रीविनाशादिदोषाभावात् धनाधिक्याच्च दैवे पचद्दय पितृवर्गे पचत्रयं मातामहवर्गेऽपि पचत्रयं कुर्वन्ति।

मात्स्ये,— यः साधुभिः संनिमन्त्रयेत् इत्यनन्तरम्,—

तस्य ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम्।
अन्योऽन्यं मनसा ध्यात्वा सम्पतन्ति मनोजवाः॥

तथा,—

ब्राह्मणैश्च सहाश्नन्ति पितरो ह्यन्तरीचगाः।
वायुभूता न दृश्यन्ते भुक्त्वा यान्ति परां गतिम्॥

साधुभिः सन्निमन्त्रयेदित्यादि[१] स्वयं [२]निमन्त्रणासम्भवे।

भवितव्यं भवद्भिश्च मया च श्राद्धकर्मणि।

इति लिङ्गेन स्वनिमन्त्रणस्य मुख्यत्वात्।

यमः,—

निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा।
न च छन्दांस्यधीयीत यस्य श्राद्धं च तद्भवेत्॥

सोऽपि नाधीयीत इत्यर्थः।

हारीतः,—

[३]पूर्वेद्युर्मन्त्रितान् विप्रान् पितरः संविशन्ति वै।
यजमानं च तां रात्रिं वसेयुर्नियतास्ततः॥

---

(१) संनिमन्त्रयेदिति। (२) स्वय निमन्त्रणस्य। (३) पूर्वेद्युरामन्त्रितान्।

कात्यायनसूत्रं,— तदहः शुचिरक्रोधनोऽत्वरितो ऽप्रमत्तः सत्यवादी स्यात् अध्वमैथुनश्रमस्वाध्यायान् वर्जयेत्। आ आवाहनात् आ उपस्पर्शनात् आमन्त्रितस्यैवम्। आ उपस्पर्शनात् भोक्तृणां अन्याचमनपर्यन्तम्। तथा अनिन्द्योऽामन्त्रितो नापक्रमेदामन्त्रितोऽन्यदन्नं न गृह्णीयात्।

यमः,—

केतितस्तु यथान्यायं ब्राह्मणो हव्यकव्ययोः।
कथञ्चिदप्यत[1]तिक्रामेत् पापः सूकरतां व्रजेत्॥
ब्राह्मणं तु मुखं कृत्वा देवताः पितृभिः सह।
तदन्नं समुपश्नन्ति तस्मात्तन्न व्यतिक्रमेत्॥
केतनं कारयित्वा तु योऽतिपातयते द्विजः।
[2]ब्रह्मवध्यामवाप्नोति शूद्रयोनौ च जायते॥
आमन्त्रितस्तु यः श्राद्धे अन्यस्य कुरुते क्षणम्।
सम्वत्सरकृतं पुण्यं तस्य नश्यति दुर्मतेः॥

आमन्त्रित इति प्राप्यकर्मणि निष्ठाप्रत्ययः। तथाचामन्त्रणेन प्राप्तः स्वीकृतामन्त्रण इति यावत्। क्षणं आमन्त्रणं कुरुते स्वीकरोति, एतेन कृतनिमन्त्रणस्वीकारस्य तदतिक्रमे दोषः। न तु प्रथमतोऽस्वीकृतनिमन्त्रणस्य इति ज्ञेयं।

ब्राह्मे,—

आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन।
देवतानां पितॄणां च दातुरन्यस्य चैव हि॥

(१) यो ऽनतिक्रामेत्। (२) ब्रह्महत्यामवाप्नोति।

चिरकारी भवेद्रोगी पच्यते नरकाग्निना ।

पुनर्यमः,—आमन्त्र्य ब्राह्मणान् यस्तु यथान्यायं न पूजयेत् ।

अतिघोरासु कृच्छ्रासु तिर्य्यग्योनिषु जायते ॥

शङ्खः,— निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः ।

श्राद्धं दत्वा च भुक्त्वा च युक्तः स्याद्ब्रह्महत्यया ॥

अतएव देवलवाक्ये वृषलीं यदि गच्छति इति स्त्रीमात्रोपलक्षणम् । अन्यनिमन्त्रणपक्षे ब्राह्मणार्थं शूद्रेण सर्वथा न निमन्त्रणीयम् । शूद्रार्थं ब्राह्मणेनापि न निमन्त्रणीयम् ।

तथा च यमशातातपौ,—

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।

तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥

ब्राह्मणानां श्राद्धयोग्यत्वस्य प्रायोऽभावात् पश्चादनुकल्पपक्षं मनुराह,—

एष वै प्रथमः पक्षः प्रदाने हव्यकव्ययोः ।

अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥

मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।

दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥

एतेषां श्राद्धयोग्यत्वगुणराहित्येऽपि निमन्त्रणीयत्वमित्यर्थः ।

तत्र नियोगक्रमे हारीतः,—

विद्यातपोऽधिकानां वै प्रथमासनमुच्यते ।

ब्राह्मणाभावे विष्टरब्राह्मणकश्राद्धं, तथा च श्राद्धसूत्रभाष्ये,—

ब्राह्मणानामसम्पत्तौ कृत्वा दर्भमयान् द्विजान् ।

श्राद्धं कृत्वा विधानेन पश्चाद्विप्रेषु दापयेत् ॥

सत्यव्रतोऽपि,— निधाय दर्भविष्टरानासनेषु समाहितः[१]।

प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ॥

एतेषां श्राद्धयोग्यत्वगुणराहित्येऽपि निमन्त्रणीयत्वमित्यर्थः ।

शालग्रामशिलाब्राह्मणकश्राद्धं ।

तत्र स्मृतिः,—

शालग्रामशिलायां च श्राद्धं यः कुरुते द्विजः ।

गयायास्त्रिगुणं पुण्यं लभतेऽसौ न संशयः ॥

लैङ्गे,— शालग्रामशिलाये तु यच्छ्राद्धं क्रियते नृभिः ।

तस्य ब्रह्मान्तिकं स्थानं हृष्टास्य पितरो दिवि ॥

एतयोर्ब्राह्मणत्वपक्षे श्राद्धकाल एव निमन्त्रणं, न तत्पूर्वेद्युः, तेषां नियमाद्यभावात् ।

यत्तु विप्रमिश्रैः अनिन्धेनामन्त्रितो नापक्रामेदित्यनक्रमणार्थत्वेन अचेतनेऽपक्रमणाभावान्निमन्त्रणं न कार्यम् । निमन्त्रणस्य तु प्रेषत्वाभावेऽपि यदुक्तलदेशे तदनुष्ठानं, तत् किंनिबन्धनमिति न जानीमः, इति लिखितं । तन्न विचारचारु । प्रैषानुप्रैषसंयुक्तं विधानमिति सर्वश्राद्धेतिकर्त्तव्यतायां कार्यत्वेनोक्तत्वात् । अचेतने प्रैषानुप्रैषयोः[२] करणशङ्कायां तद्युक्तत्वमुक्तमिति तेनैव निमन्त्रणस्याप्युपलक्षणात् । भवन्तो मया निमन्त्रणीयाः निमन्त्रिताः स्थ इति प्रैषानुप्रैषसद्भावाच्च । इति ।

---

(१) एतत् वचनं पुस्तकान्तरे न दृश्यते ।

(२) प्रैषानुप्रैषयोरकरणशङ्कया तद्युक्तत्वमिति तेनैव ।

अथ श्राद्धस्थानविचारः ।

याज्ञवल्क्यः,— परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथा ।

यमः,— स्वच्छं क्रमियुतं क्लिन्नं सङ्कीर्णानिष्टगन्धकम् ।

देशं चानिष्टशब्दञ्च वर्जयेच्छ्राद्धकर्मणि ॥

दक्षिणाप्रवणं स्निग्धं विविक्तं शुभलक्षणम् ।

शुचिदेशं परीक्ष्याशु गोमयेनोपलेपयेत् ॥

अगारेषु विविक्तेषु तीर्थेषु च नदीषु च ।

विविक्तेषु च देशेषु तृप्यन्ति पितरः सदा ॥

पारक्ये भूमिभागे तु पितॄणां निर्वपेत्तु यः ।

तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥

तस्माच्छ्राद्धानि देयानि पुण्येष्वायतनेषु च ।

नदीतीरेषु तीर्थेषु स्वभूमौ च प्रयत्नतः ॥

उपह्वरे नितम्बेषु तथा पर्वतसानुषु ॥

गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च ।

क्लिन्नं पङ्किलं । उपह्वरं पर्वतान्तिकं । एतेन पुण्यायतनादौ न परकीयत्वशङ्का । एतच्च तीर्थश्राद्धप्रसङ्गलिखितायामटवीत्युक्तौ स्फुटमेव ।

भूतशुद्धेरावश्यकता, ब्राह्मे,—

जघान दानवौ विष्णुः पूर्वं तु मधुकैटभौ ।

हतं महेन्द्रय ततः पृथ्वी तन्मेदसावृता ॥

ततोऽयं मेदिनी सा च लोके विगीयते जनैः ।

तस्माच्छ्राद्धे पञ्चगव्यैर्लेप्या शोध्या तयोल्मुकैः ॥

गौरमृत्तिकयाच्छन्ना प्रकीर्णतिलसर्षपा ।

उक्तस्थानानामसम्भवे परगृहे श्राद्धे माघी,—

परकीयगृहे यस्तु स्वान् पितॄन् तर्पयेज्जड़ः ।

तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥

अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम् ।

अग्रभागो अत्र श्राद्धीयद्रव्यस्य । तेभ्यः तद्भूमिस्वामिभ्यः तद्भूमिस्वामिषु जीवत्सु आनतिकरं किञ्चिद्द्रव्यं तेभ्यो दद्यादित्यर्थः। जीवतामपि दूरस्थानां अग्रभागदानं कार्यम् । मूल्यदानाग्रभागदानयोर्हरणनिवर्त्तकत्वेन वैकल्पिकत्वात् । श्राद्धविघातनिवर्त्तकत्वेन तदङ्गत्वात् ।

श्राद्धेऽपराह्णतिलादीनां प्राशस्त्यम् मनुः,—

अपराह्णस्तिला दर्भा वास्तुसम्पादनं तथा ।

सृष्टिः सृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्मसु सम्पदः ॥

दर्भाः पवित्रं पूर्वाह्णे हविष्याणि च सर्वशः ।

पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसम्पदः ॥

वास्तुसम्पादनं दक्षिणाप्रवणत्वाद्युपलेपनादिकरणम् । सृष्टिः अकार्पण्येन अन्नव्यञ्जनसम्पादनम् । सृष्टिः अन्नादेः स्वादुत्वसम्पादनं । प्रथमपवित्रपदं मन्त्रपरम् द्वितीयं शुच्याचारादिपरम् । हव्यमत्र वैदिकं कर्म ।

दर्भाः तिला गजच्छाया दौहित्रं मधुसर्पिषी ।

कुतपो नीलकण्ठश्च पवित्राणीह पैतृके ॥

नीलकण्ठो नीलवृषः, सोऽत्र पैतृककर्मप्रसङ्गादुक्तः ।

महाभारते,— वर्द्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत्।

वर्द्धमानतिलं तिलबहुलं।

पैठीनसिः,— तिला दौहित्रकुतपा इति पवित्राणि श्राद्धे सत्यं चाक्रोधं शौचं चात्वराञ्च प्रशंसन्ति।

विष्णुः,— कुतपः कृष्णाजिनतिलसिद्धार्थकाक्षतानि पवित्राणि रक्षोघ्नानि च दद्यात्।

वायुपुराणे,— कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव च।
रक्षोघ्नं ब्रह्मवर्चस्यं पशून् पुत्रांश्च दापयेत्॥

हारीतः,— दर्भैरद्भिस्तिलैर्दत्तं तूष्णीमप्याप्नुते दिवम्।
विधिना त्वानुपूर्व्येण अक्षयं परिकल्प्यते॥
काञ्चनादिषु दर्भाद्यैर्मन्त्रवत् प्रतिपादिताः।
पितॄणामक्षयं यान्त्यमृतं भूत्वा महोर्मिभिः॥

तूष्णीं श्राद्धमन्त्रवर्जितं। इयं च दर्भादीनां विध्यानुपूर्व्यादिसहितानां स्तुतिः। काञ्चनादिषु पात्रेषु इति शेषः। प्रतिपादिताश्चाप इति शेषः। इति कल्पतरुव्याख्यानं।

हारीतः,— तिला रक्षन्ति दैतेयान् दर्भा रक्षन्ति राक्षसान्।
रक्षन्ति श्रोत्रियाः पङ्क्तिं स्नातके दत्तमक्षयम्॥

यमः,— वेदविद्रक्षति त्वन्नं यतये दत्तमक्षयम्।

विष्णुः,— तिलैश्च सर्षपैर्वापि यातुधानान् विवर्जयेत्।

उशनाः,— कुशा दर्भाः समाख्याताः कुतपा वृषयस्तथा।
दुहितुश्चैव ये पुत्रास्ते दौहित्राः प्रकीर्त्तिताः॥

वृषिः आसनविशेषः।

शातातपः,— दौहित्रं खड्गमित्याहुर्नेपालाद्यद्धि जायते।
तस्य शृङ्गस्य यत्पात्रं दौहित्रमपि तद्विदुः॥
दिवसस्याष्टमे भागे मन्दीभवति भास्करः।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम्॥
पैठीनसिः,— कुतोऽपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते।
श्राद्धं पुनाति वै तस्मात् कुतपस्तेन संज्ञितः॥
अत्र च दौहित्रकुतपयोरनेकार्थत्वात् एकतमोपादानेऽपि श्राद्ध-समृद्धिर्भवतीति कल्पतरुकाराः।
ब्राह्मे,— यतिस्त्रिदण्डः करणी राजतं पात्रमेव च।
दौहित्रं कुतपः कालश्छागः कृष्णाजिनं तथा॥
गौराः कृष्णास्तथारण्यास्तथैवं त्रिविधास्तिलाः।
पितॄणां तृप्तये सृष्टा दर्शिते ब्रह्मणा स्वयम्॥
तथा,— दर्भैर्मन्त्रैस्तिलैर्हीना रजतेन विना जलम्।
दत्तं हरन्ति रक्षांसि तस्माद्दद्यान्न केवलम्॥
मात्स्ये,— मध्याह्नः खड्गपात्रञ्च यस्य नेपालकम्बलः।
रूप्यं दर्भास्तिलाश्छागो दौहित्रश्चाष्टमः स्मृतः॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः।
अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः॥ इति।

अथ श्राद्धकाले आतिथ्यविचारः।

यमः,— भिक्षुको ब्रह्मचारी च भोजनार्थमुपस्थितः।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेत्॥
यस्य वै यजमानस्य नाग्ने भुङ्क्ते यतिस्तथा।

रजस्वलाश्च[1] षण्डश्च नेक्षेरन्नश्नतो द्विजान् ॥
होमप्रदाने भोज्ये च यदेभिरभिवीक्षितम् ।
दैवे कर्मणि पित्र्ये च तद्गच्छत्ययथायथम् ॥
घ्राणेन सूकरो हन्ति पक्षवातेन कुक्कुट, ।
श्वा तु दृष्टिनिपातेन स्पर्शेनावरजस्तथा ॥

अयथायथं । यदर्थं क्रियते तद्विपरीतं । कुक्कुटः पक्षवातेनेत्यादेरर्थः, यावति देशे कुक्कुटादीनां पक्षवातादि सम्भाव्यते । तावतो देशादपनेय[2] इत्यर्थः । अवरजः शूद्रः ।

श्राद्धकाले वर्ज्येषु यमः,—

कुक्कुटो विड्वराहश्च काकः श्वा च विडालकः ।
वृषलीपतिश्च वृषलः षण्डो नारी रजस्वला ॥
कुक्कुटः पक्षवातेन हन्ति श्राद्धमसंवृतम् ।
घ्राणेन विड्वराहश्च वायसश्च रुतेन तु ॥
श्वा तु दृष्टिनिपातेन मार्जारः श्रवणेन तु ।
वृषलीपतिः प्रदानेन चक्षुर्भ्यां वृषलस्तथा[3] ॥
छायया हन्ति वै षण्डः स्पर्शेन तु रजस्वला ।
खञ्जः काणः कुणिः श्वित्री राजप्रेष्यकरो भवेत् ॥
ऊनाङ्गो नातिरिक्ताङ्गस्तमाशु न नयेत्ततः ।

देवलः,— हीनाङ्गः पतितः कुष्ठी व्रणी पुक्कसनास्तिकौ ।
कुक्कुटः शूकरः श्वानो वर्ज्याः श्राद्धे तु दूरतः ॥
वीभत्सुमशुचिं नग्नं मत्तं धूर्त्तं रजस्वलाम् ।

---

(१) रजस्वला च । (२) दपनेया इत्यर्थः । (३) वृषली ।

नीलकषायवसनं छिन्नकर्णं तु वर्जयेत् ॥

ग्रस्तं कालायसं सीसं मलिनाम्बरवाससम् ।

अन्नं पर्युषितं वापि श्राद्धेषु परिवर्जयेत् ॥

वीभत्सुरुद्वेगकरः । मलिनाम्बरं वस्ते आच्छादयतीति मलिनाम्बरवासाः तं ।

महाभारते,— रजस्वला च या नारी व्यङ्गिता कन्यकास्तथा[१] ।

निवापेनोपतिष्ठेत संग्राह्या नान्यवंशजा ॥

निवापे श्राद्धकर्मपाकारम्भे। अन्यवंशजा मातापितृवंशासम्बन्धा। न संग्राह्या न व्यापारयितव्या इत्यर्थः ।

विष्णुः,—संवृते श्राद्धं कुर्यात् रजस्वलां न पश्येत् न श्वानं न विड्वराहं न ग्रामकुक्कुटं प्रयत्नाच्छ्राद्धमजप्य दर्शयेत् ।

पुनर्विष्णुः,—न हीनाङ्गाः श्राद्धं पश्येयुः न शूद्रा न पतिता न महारोगिणः ।

उशनाः,—विड्वराहनकुलमार्जारकुक्कुटशूद्ररजस्वलाशूद्रीभर्त्तारश्च दूरमपनेतव्याः ।

हारीतः,— दैवे वा यदि वा पित्र्ये सुरापी यत्तु संस्पृशेत् ।

रजस्वला पुंश्चली वा रक्षांसि गच्छते हि तत् ॥

वायुपुराणे,— नग्नादयो न पश्येयुः श्राद्धमेवं व्यवस्थितम् ।

गच्छन्ति तैस्तु दृष्टानि न पितॄन् न पितामहान् ॥

सर्वेषामेव भूतानां त्रपासंवरणं[२] कृतम् ।

तां त्यजन्ति तु ये मोहात्ते वै नग्नादयो द्विजाः ॥

---

(१) कन्यका तथा । (२) तमसां वरणं ।

अनिष्टमद्भुतं तस्य हरते रुक्माङ्गणः ॥

छागलेयः,—

पूजयेच्छ्राद्धकालेऽपि यतिं सब्रह्मचारिणम् ।
विप्रानुद्धरते पापात् पितॄन् मातृगणानपि ।
भुञ्जते यत्र यत्रापि यतयो ब्रह्मचारिणः ॥
गच्छन्ति पितरो देवाः स याति परमाङ्गतिम् ।
अर्चयन्ति च दातारं पुत्रान् दारान् पितॄंस्तथा ॥
तस्मात्सर्वप्रयत्नेन अर्चयेद्गृहमागतम् ।
अलाभे [१]ध्यानिभिक्षूणां भोजयेद्ब्रह्मचारिणम् ॥
तदभावेऽप्युदासीनं गृहस्थमपि भोजयेत् ।
ब्रह्मचारिसहस्रैस्तु वानप्रस्थशतैरपि ॥
गृहस्थानां सहस्रेषु यतिरेको विशिष्यते ।
गन्धमाल्यफलैश्चैव भोजनैः क्षीरसंस्कृतैः ॥
संपूजयेत् यतिं श्राद्धे पितॄणां तुष्टिकारकम् ।
ब्रह्मचारी तपस्वी च पूजनीयो हि नित्यशः ॥
तत्कृतं सुकृतं यस्मात्तस्मात्षड्भागमाप्नुयात् ।
जाप्यं योगश्च यज्ञश्च यतस्तस्मिंस्त्रयं स्थितम् ॥
तस्य प्रणामः पूजा च दत्तं भवति चाक्षयम् ।
गृहस्थस्याश्रमं गच्छेद्ब्रह्मचारी यतिस्तथा ॥
खाद्यं पानं फलं पुष्पमात्मानमपि वेदयेत् ।
अनन्तं योगयुक्तानां वीतरागतपस्विनाम् ॥

---

(१) ध्यानभिक्षूणां ।

सर्वारम्भनिवृत्तानां यतीनां दत्तमक्षयम्।
यतये वीतरागाय दत्तमन्नं सुपूजितम्॥
न क्षीयते श्रद्धयापि कल्पकोटिशतैरपि॥
ब्रह्मचारी यतिश्चैव पक्वान्नस्वामिनावुभौ।
पचमानाः पुनर्न्येते नागरः पचते पुनः॥
योगिनं समतिक्रम्य गृहस्थं यदि भोजयेत्।
न तत्फलमवाप्नोति गोत्रं सर्वं प्रतापयेत्॥
योगिन समतिक्रम्य पूजयन्ति परस्परम्।
दाता भोक्ता च नरकं गच्छन्ति सह बान्धवैः॥
अपरस्परदानानि लोकयात्रा न धर्मतः।
तस्माद्यत्नेन दातव्यमन्यथा पतितो भवेत्॥

सब्रह्मचारिणं ब्रह्मचारिसहितं, वेदयेत् निवेदयेत्, गोत्रं कुलं प्रतापयेत्, अतिक्रान्तो यतिरिति शेषः। न धर्मतः न धर्म इत्यर्थः। प्रथमान्तात्तसिल्प्रत्ययः।

शातातपः,—अतिथिर्यस्य नाश्नाति तच्छ्राद्धं न प्रशस्यते।
श्रुतव्रतविहीनैश्च भुक्तमश्रोत्रियैश्च यत्॥

तथा,— आतिथ्यरहिते श्राद्धे भुञ्जते न बुधा द्विजाः।
वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते॥

मनुः,— ब्राह्मणं भिक्षुकं वापि भोजनार्थमुपस्थितम्।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत्॥

अथ श्राद्धे निरसनीयाः।

मनुः,— चण्डालश्च वराहश्च कुक्कुटश्च तथैव च।

वृद्धश्रावकके[१] ग्रन्याः शाक्यजीवककापिलाः ।
ये धर्मान्नानुवर्त्तन्ते ते वै नग्नादयो जनाः ॥
वृथाजटी वृथामुण्डी वृथानग्नाश्च ये नराः ।
महापातकिनो ये च ते वै नग्नादयो जनाः ॥
कुलत्वमानिकाः शाक्या व्याधा मुष्टिकमल्लकाः ।
कुकर्मसंश्रितास्ते ते कुपथाः परिकीर्त्तिताः ॥
एभिर्निर्द्धूतदृष्टं वै श्राद्धं गच्छति दानवान् ।
देवतानामृषीणाञ्च पापवादरताश्च ये ॥
असुरान् यातुधानांश्च दृष्टमेतैर्व्रजत्युत ।
अपुमानपविद्धश्च कुक्कुटो ग्रामसूकरः ॥
श्वा चैव हन्ति श्राद्धानि दर्शनादेव सर्वशः ।
अविट्शूकरसंस्पृष्ट दीर्घरोगिभिरेव च ॥
पतितैर्मलिनैश्चैव न द्रष्टव्यं कथञ्चन ।
अन्नं पश्येयुरेते यत्तत्स्याद्धव्यकव्ययोः ॥
तत्संसृष्टव्य प्रधानार्थं मस्कारश्चापविस्मृतः ।
हविषां संस्कृतानां तु पूर्वमेव हि मार्जनम् ॥
मृत्संयुक्ताभिरद्भिस्तु प्रोक्षणन्तु विधीयते ।
सिद्धार्थकैः कृष्णतिलैः कार्यञ्चैवावकीरणम् ॥
गुरुसूर्याग्निवस्तानां दर्शने वापि यत्नतः ।
बृहस्पतिः,— श्वपाकषण्डपतितश्वानः सूकरकुक्कुटाः ।
रजस्वला च चण्डालः श्राद्धे कार्यास्त्वदर्शनाः ॥

(१) वृद्धश्रावककेर्ग्रन्था ।

परिश्रिते प्रदद्याच्च तिलैर्वा विकिरेन्महीम्।
शमयेच्चोपविष्टस्तु तं दोषं पङ्क्तिपावनः ॥

कुशलमानिकाः सत्कुलाभिमानेन त्यक्ताचाराः वृद्धश्रावकादयः। पाषण्डविशेषाः। मुष्टिकमल्लको मागधः।

अपविद्धस्तु,— मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वा।
यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते ॥

इति मनूक्तलक्षणपुत्रविशेषः। वस्तः छागः। असम्भवे उक्तदोषदुष्टमपि श्राद्धीयद्रव्यं मृद्भस्मजलसम्मार्जनादिछागदर्शनान्तं कृत्वा नियोज्यमिति समुदायार्थः। प्रधानार्थं श्राद्धार्थं। श्वपाकः अन्त्यजजातिविशेषः ॥०॥

अथ विश्वेदेवाः।

वृहस्पतिः,— क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च।
[1]धुरिश्च रोचनश्चैव तथा चैव पुरूरवाः ॥
माद्रवाश्च तथैते तु विश्वेदेवा प्रकीर्त्तिताः।
इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः ॥
नैमित्तिके कालकामौ काम्ये च धुरिरोचनौ।
पुरूरवा माद्रवाश्च पार्वणे समुदाहृतौ ॥
उत्पत्तिं नाम वै तेषां ये विदुर्न द्विजातयः।
अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः ॥
आगच्छन्तु महाभागा विश्वेदेवा वरप्रदाः।
ये यत्र[2] विहिताः श्राद्धे सावधाना भवन्तु ते ॥

---

(१) धूरिः। (२) चात्र।

इष्टिश्राद्धमत्र द्रव्यब्राह्मणसम्पत्ताविच्छया यत्क्रियते तदेव ।

शातातपः,— उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।
प्रदद्यात् पार्वणश्राद्धे दैवपूर्वं विधानतः ॥

शातातपः,— नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ।
मातृश्राद्धन्तु युग्मैः स्याद्दैवं प्राङ्मुखैः पृथक् ॥
योजयेद्दैवपूर्वाणि श्राद्धान्यन्यानि यत्नतः ।
स दैवं भोजयेच्छ्राद्धं तत्पूर्वञ्च प्रवर्त्तयेत् ॥
अन्यथा लवलुम्पन्ति सदैत्यासुरराक्षसाः ।

तत्पूर्वं दैवपूर्वं ।

वायुपुराणे,— नामोच्य स्पर्शयेत्किञ्चिच्छ्राद्धे दैवेऽथवा पुनः ।
उत्तरेणाहरेद्वेद्या दक्षिणेन विसर्जयेत् ॥

वेदिरत्र दक्षिणप्रवणादिश्राद्धदेशः । दैवे दैवश्राद्धे ।

मनुः,— दैवकार्याद्द्विजातीनां पितृकार्यं विशिष्यते ।
दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम् ॥
तेषामारक्षभूतन्तु पूर्वं दैवं नियोजयेत् ।
रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम् ॥
दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत् ।
पित्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः ॥

आप्यायनं पितृश्राद्धप्रधानभूतस्य समृद्धिकरं अङ्गभूतं न तु स्वतः प्रधानम् । आरक्षभूतं न तु सर्वतो रक्षाकरम् । दैवाद्यन्तं दैवे आद्यन्तौ आरम्भावसाने यस्य तत्तथोक्तम् । एतेनैतदुक्तं भवति, निमन्त्रणादि दैवपूर्वं विसर्जनं विपरीतं कार्यम् ।

देवलः,— यद्व क्रियते कर्म पैतृके ब्राह्मणान् प्रति ।
तत्सर्वं तत्र कर्त्तव्यं वैश्वदेवत्यपूर्वकम् ॥ इति ।

अथ विधिपरिभाषा ।

मनुः,— प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात् कार्यं विधिवद्दर्भपाणिना ॥

अतन्द्रिणा अनलसेन । अपसव्यं वामपार्श्वे । आनिधनात् आसमाप्तेः ।

कात्यायनः,— दक्षिणं पातयेज्जानुं देवान् परिचरन् सदा ।
पातयेदितरं जानुं पितॄन् परिचरन् सदा ॥

श्राद्धसूत्रम् कात्यायनः,— आवाहनादिवाग्यत उपस्पर्शनादामन्त्रितश्चैवं[१] श्राद्धं पिण्डपितृयज्ञवदुपचारः । पित्र्ये द्विगुणांस्तु दर्भान् पवित्रपाणिर्दद्यादासीनः सर्वत्र प्रश्ने पङ्क्तिमूर्द्धन्यं पृच्छति, सर्वान् वा पित्र्ये इति वचनात् तर्पणाद्यपि पित्र्ये द्विगुणैः कुशैरेव समाचरन्ति न तु ऋजुभिरेव ।

अथ कुशाः ।

वायुपुराणे,— रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संश्रुताः ।
उपमूले तथा लूना प्रस्तरार्थे कुशोत्तमाः ॥

तथा,— शुभाः श्राद्धे चीरकुशा वल्वजाः चार्थकी तथा ।
वीरणाद्योलपाश्चैव लब्धा वर्ज्याश्च नित्यशः ॥

संश्रुताः संस्पृष्टाः, प्रस्तरोऽत्र पिण्डप्रस्तरः । प्रस्तरः कुशमुष्टिः । शुभ्राः भद्रमुस्तकः । चीरकुशाः मत्स्यपजाताः । चार्थकी चार्थीतृणं ।

(१) चामन्त्रितश्च ।

उलपः कुशसदृशः तृणविशेषः । लम्बाः उक्तप्रमाणादधिकाः ।
हारीतः । श्वोभूते दक्षिणां दिशं गत्वा दक्षिणाग्रायतान् समूलान्
दर्भान् आहरेत् ।

आपस्तम्बः,— समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।
मूलेन लोकान् जयति शक्रस्य च महात्मनः ॥

ब्राह्मे,— गोकर्णदीर्घाश्च कुशाः सहच्छिन्नाः समूलकाः ।
पितृतीर्थेन देयाश्च दूर्वाः श्यामलमेचकाः ॥
काशाः कुशा बल्वजाश्च तथा ये तीक्ष्णशूककाः ।
मौञ्जलं(१) शाद्वलञ्चैव षड्दर्भाः परिकीर्त्तिताः ॥
श्राद्धे वर्ज्याः प्रयत्नेन ह्यनूपाः सगवेधुकाः ॥

दूर्वाद्याः कुशाभावे प्रतिनिधित्वेनोक्ताः ।
तथाच गोभिलः,—

तेषामभावे शूकतृणशरशीर्यबल्वजसुतवनल(२) शुण्ठवर्जं सर्वतृणानि
शूकतृणं शूकयुक्तधान्यतृणं । शीर्षसुतत्रणवा जातिविशेषास्तत्तद्देश-
प्रसिद्धाः । पिञ्जलः पवित्रम् तत्समाः प्रादेशमात्राः साग्रा इति
यावत् । समाहिताः निर्दोषाः ।

अथ मण्डलार्थं चूर्णविशेषाः ।

ब्राह्मे,— मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः ।
गौरमृत्तिकया वापि प्रणीतेनाथ भस्मना ॥
पाषाणचूर्णमङ्गारैर्भमाहतं तच वर्जयेत् ।

(१) मौञ्जा शाद्वलाश्चैव । (२) ववल ।

अथ श्राद्धे अर्घादिपात्राणि ।

ब्राह्मे,— अस्त्रभाण्डानि वर्ज्याणि पितृदैवतकर्मणि ।
सुवर्णताम्ररौप्याश्मस्फाटिकशङ्खशृङ्गजाः ॥
भिन्नान्यपि हि योज्यानि पात्राणि पितृकर्मणि ।
पृथिवी पितृभिर्दुग्धा पात्रे रौप्यमये पुरा ॥
स्वधामृतञ्च तस्मात्तत्तेभ्यः प्रियतरं सदा ।
रौप्यपात्रेऽर्घपाद्यादि[१] तस्मात् [२]सूक्ष्मोऽपि कारयेत् ॥
दत्वा हैममये पात्रे भगवान् स्यात् स मानवः ।
दत्वा रत्नमये पात्रे सर्वरत्नाधिपो भवेत् ॥
पलाशे ब्रह्मवर्चस्वी आश्वत्थे राज्यमाप्नुयात् ।
पात्रे औदुम्बरे दत्वा सर्वभूताधिपो भवेत् ॥
दत्वा न्यग्रोधपात्रे तु प्रज्ञां पुष्टिं श्रियं लभेत् ।
रक्षोघ्ने काश्मरीपात्रे दत्वा पुण्यं लभेत सः ॥
सौभाग्यं वाथ वाधूके फल्गुपात्रे च सम्पदम् ।
श्वेतार्कमन्दारमये दत्वा च मतिमान् भवेत् ॥
विल्वपात्रे धनं बुद्धिं दीर्घमायुरवाप्नुयात् ।
अथ पद्मपुटे दत्वा मुनीनां वल्लभो भवेत् ।
सिक्तं मधुघृताभ्यां च यथासम्भवमेव वा ॥

अस्त्रभाण्डं विशीर्णभाण्डं । फल्गुपात्रं काकोदुम्बरपात्रम् ।

वायुपुराणे,— तथापि[३] पिण्डभोज्येषु पितृणां रजतं मतम् ।
अमङ्गल्यं प्रयत्नेन देवकार्य्येषु वर्ज्जयेत् ॥

---

(१) प्राचादि । (२) सूक्ष्मापि । (३) तथार्घपिण्डभोज्येषु ।

अथ चन्दनादि विचार्य्यते।

अन्यत्र,— श्वेतचन्दनकर्पूरकुंकुमानि शुभानि च।
विलेपनार्थं दद्यात्तु यच्चान्यत् पितृवल्लभम्॥

विष्णुः,— चन्दनकर्पूरकुंकुमागुरुपद्मकाष्ठानि अनुलेपनानि इति।

श्राद्धे देयादेयपुष्पविचारः।

ब्राह्मे,— शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः॥
जवादिकुसुमं भाण्डी रूपिका[१] च कुरण्टिका[२]।
पुष्पाणि वर्जनीयानि श्राद्धे कर्म्मणि नित्यशः॥

जवादीत्यादिशब्दादेवं रक्तकुसुमम्। रूपिका अर्ककुसुमं, कुरण्टका पीतझिण्टीति कल्पतरुकाराः।

वर्ज्ज्येषु ब्राह्मे,— उग्रगन्धीन्यगन्धीनि दुष्टानि च विवर्ज्जयेत्।

शङ्खः,— उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च।
पुष्पाणि वर्ज्जनीयानि रक्तवर्णान्यपारिणः॥

रक्तेऽपवादः तेनैवोक्तः,—
जलोद्भवानि देयानि रक्तान्यपि विशेषतः।

वर्जयेदित्यनुवृत्तौ विष्णुः उग्रगन्धान्यगन्धानि कण्टकिजातानि रक्तपुष्पाणि च। सितानि सुगन्धीनि कण्टकिजातान्यपि। जलजानि रक्तान्यपि दद्यात्।

अन्यच,— श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिका श्वेतपुष्पिका।
जलोद्भवानि सर्व्वाणि कुसुमानि च चम्पकम्॥

---

(१) रुपिका। (२) कुरुण्टकाः।

तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः ।
प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ।
श्राद्धे च तुलसीदानात् पितॄणां तृप्तिरक्षया ॥

जातीपुष्पस्य सामान्यतो विशेषतश्च श्राद्धे विहितत्वात् "जाती-दर्शनमात्रेण निराशाः पितरो गताः" इति वाक्यस्य प्रामाण्येऽपि पीतजातिपरत्वमेव ॥०॥

धूपः ।

ब्राह्मे,— चन्दनागुरुणी चोभे तथैवोशीरपद्मकम् ।
तुरुष्कं गुग्गुलुं चैव घृताक्तं युगपद्दहेत् ॥
घृतं न केवलं दद्याद्दुष्टं वा तृणगुग्गुलुम् ।

विष्णुः,— मधुघृतसंयुक्तं गुग्गुलुं दद्यात् । तुरुष्कं सिह्लकरसः तृण-गुग्गुलं गुग्गुलभेदः ॥

अथ दीपः ।

शङ्खः,— घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ।
वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् ॥

विष्णुः,— वसा मज्जाद्यं दीपार्थे न दद्यात् ।

अथ वस्त्रदानस्यावश्यकता ।

ब्राह्मे,— अनङ्गलग्नं यद्वस्त्रं वितरेत्तद्गुणं शुभम् ।

वायुपुराणे,—
वासो हि सर्व्वदैवत्यं सर्व्वदेवैरभिष्टुतम् ।
वस्त्राभावे क्रिया नास्ति यज्ञा विद्यास्तपांसि च ॥
तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः ।

## अथ नानाद्रव्यदानफलानि ।

वायुपुराणे,—

लोके श्रेष्ठतमं सर्व्वमात्मनश्चापि यत्प्रियम् ।
सर्व्वं पितॄणां दातव्यं तदेवाक्षयमिच्छता ॥
जाम्बूनदमयं दिव्यं विमानं सूर्य्यसन्निभम् ।
दिव्याप्सरोभिः संपूर्णमन्नदो लभते क्षयम् ॥
आच्छादनं च यो दद्यादहतं श्राद्धकर्मणि ।
आयुः प्राकाम्यमैश्वर्य्यं रूपं च लभते सुखम् ॥
यज्ञोपवीतं यो दद्याच्छ्राद्धकाले तु धर्मवित् ।
पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम् ॥
स्नाते विप्राय यो दद्याच्छ्राद्धकाले कमण्डलुम् ।
मधुक्षीरस्रवा[१] धेनुर्दातारमनुगच्छति ॥
चक्रवर्द्धनं[२] योदद्याच्छ्राद्धकाले कमण्डलुम् ।
धेनुं स लभते दिव्यां घण्टापच्चतदोहनाम् ॥
तूलपूर्णे तु यो दद्यात् पादुके श्राद्धकर्मणि ।
शोभनं लभते यानं पादयोः सुखमेव च ॥
व्यजनं तालवृन्तं च दत्वा विप्राय संस्कृतम् ।
प्राप्नुयात् स्पर्शयुक्तानि प्रदानानि मृदूनि च ॥
श्राद्धेषूपानहौ दद्यात्ब्राह्मणेभ्यः सदा बुधः ।
दिव्यं स लभते चक्षुर्वाजियुक्तांस्तथा रथान् ॥

(१) स्रवा । (२) चक्रवर्द्ध च ।

श्वेतं छत्रं च यो दद्यात् पुष्पमालाविभूषितम् ।
प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ॥
शरणं रत्नसंपूर्णं सुशय्यासनभोजनम् ।
श्राद्धे दत्ता यतिभ्यस्तु नाकपृष्ठे महीयते ॥
मुक्तावैदूर्य्यवासांसि रत्नानि विविधानि च ।
वाहनानि च मुख्यानि अयुतान्यर्वुदानि च ॥
विमानं पुष्पकप्रख्यं सर्व्वकामसमन्वितम् ।
चन्द्रसूर्य्यप्रभं दिव्यं विमलं लभतेऽक्षयम् ॥
अप्सरोभिः परिवृतं कामगन्तु मनोजवम् ।
सगन्धर्वैर्विमानाग्यैः स्तूयमानः समन्ततः ॥
दिव्यैः पुष्पैः प्रसिञ्चन्ति जलवृष्टिभिरेव च ।
गन्धर्वाप्सरसस्तत्र गायन्त्यो वादयन्ति च ॥
कन्यायुवतिमध्यस्था हसिताभरणस्वनैः ।
सुस्वरैस्ते विबोधन्ते सततं हि मनोरमैः ॥
अश्वदानसहस्रेण रथदानशतेन च ।
दन्तिनां च सहस्रेण यत्फलं लभते नरः ॥
दद्यात्पवित्रं योगिभ्यो जन्तु[१]वारणमक्षसः ।
स्वर्णनिष्कसहस्रस्य फलं प्राप्नोति मानवः ॥
जीवितस्य प्रदानाद्धि नान्य[२] दानं विशिष्यते ।
तस्मात् सर्व्वप्रयत्नेन देयं दानाभिरक्षणम् ॥

---

(१) तन्तुवारणमक्षसं । (२) नान्यत् ।

अहिंसा सर्व्वदैवत्यं पवित्रं सोमपायिनाम् ।
दानं हि जीवितस्याऽऽर्द्दानानां परमं बुधाः ॥
लवणेन सुपूर्णानि श्राद्धे पात्राणि दापयेत् ।
रसास्तमुपतिष्ठन्ति भक्ष्यं सौभाग्यमेव च ॥
तिलानिचुंस्तथा भोज्यं श्राद्धे सत्कृत्य दापयेत् ।
मित्राणि लभते लोके स्त्रीषु सौभाग्यमेव च ॥
पात्रं च तैजसं दद्यान्मनोज्ञं श्राद्धभोजने ।
पात्रं भवति कामानां विद्यानां च धनस्य च ॥
रजतं काञ्चनं चैव दद्याच्छ्राद्धेषु यः पुमान् ।
दत्वा स लभते दानात् प्राकाम्यं धनमेव च ॥
धेनुं श्राद्धेषु यो दद्यात्गृष्टिं कुम्भोपदोहनाम् ।
गावस्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ॥
दद्यात् यः शिखरेष्वग्निं बहुकाष्ठं प्रयत्नतः ।
कामाग्निदीप्तं प्राकाम्यं सौभाग्यं रूपमेव च ॥
इन्धनानि च यो दद्यात् द्विजेभ्यः शिशिरागमे ।
नित्यं जयति सङ्ग्रामे श्रिया युक्तश्च दीप्यते ॥
सुरभीणि[१] तु स्नानानि गन्धवन्ति तथैव च ।
पूरयित्वा तु पात्राणि श्राद्धे सत्कृत्य दापयेत् ॥
गन्धवाहा महानद्यः सुखानि विविधानि च ।
दातारमुपतिष्ठन्ति युवत्यश्च पतिव्रताः ॥

---

(१) सुरभाणि ।

शयनासनदानानि भूमयो वाहनानि च ।
आद्धेष्वेतानि यो दद्यात् सोऽश्वमेधफलं लभेत् ॥
... ... ... गोसवमश्नुते ।
तस्मिन् लोके वसन् मोदेत् स्यन्दनैस्तु सवाहनैः ॥
राजभिः पूज्यते वापि धनैर्द्धान्यैश्च वर्द्धते ।
वर्णकौशेयपत्रोर्णे[१] तथा प्रावारकम्बलम् ॥
अजिनं चौमजं पट्टं प्रवेणीं मृगलोमिकाम् ।
दत्वा चैतानि विप्रेभ्यो भोजयित्वा यथाविधि ॥
प्राप्नोति श्रद्दधानस्तु वाजपेयस्य यत्फलम् ।
बह्वो नार्य्यः सुरूपास्तु पुत्रभृत्याश्च किङ्कराः ॥
वशे तिष्ठन्ति भूतानि अस्मिंल्लोके ह्यनामयम् ।
चौमकौशेयकार्पासं दुकूलमहतं तथा ॥
आद्धेष्वेतानि यो दद्यात् कामानाप्नोत्यनुत्तमान् ।
अलक्ष्मीं नाशयत्याशु तमः सूर्य्योदयो यथा ॥
भ्राजते च विमानाग्र्ये नचत्रेष्विव चन्द्रमाः ।

प्राकाम्यं ऐश्वर्यविशेषः, गृष्टिः प्रथमप्रसूता गौः, वर्णकौशेयं पीतवर्णादि[२]रञ्जितकौशेयं, प्रावारकम्बलं आच्छादनयोग्यः सूक्ष्मकम्बलः। अजिनं कटि[३]सूत्रं, चौमजं अतिसूक्ष्मपट्टनिर्मितं शमि[४] इति प्रसिद्धं। प्रवेणी गजास्तरणकम्बलः।

तथा,– राजतं रजताक्तं वा पितॄणां पात्रमुच्यते ।

---

(१) मर्णे च। (२) पीतवर्णादिकौशेयं।
(३) कटिचं। (४) चर्म।

रजतस्य कथा वापि दर्शनं दानमेव च ।
अनन्तमक्षयं स्वर्ग्यं राजतं दानमुच्यते ॥

एवमन्यान्यपि फलान्युक्तानि विस्तरभयादिरम्यते । इति ।

अथ श्राद्धे देयद्रव्यविचारः ।

शङ्खलिखितौ,— धर्मेण वित्तमादाय पितृभ्यो दद्यात् ।

मनुः,— यद्धविश्चिरकालाय यच्चानन्त्याय कल्पते ।
पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः ॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥
षण्मासान् छाग[१]मांसेन पार्षतेनाथ सप्त तु ।
अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥
दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु ॥
सम्वत्सरं तु गव्येन पयसा पायसेन वा ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्कं खड्गं गोधामिषं मधु ।
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः ॥

औरभ्रं मेषमांसं । पृषतः चित्रमृगः । एणः कृष्णसारः । रुरुः शम्बरः । गव्यपदं पयःपायसयोरपि विशेषणम् ।

(१) छाग ।

वार्द्धीणसस्य लक्षणं निगमे,—

त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्।
वार्द्धीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्म्मणि॥
कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः।
स वै वार्द्धीणसः प्रोक्त इत्येषा नैगमी स्मृतिः॥

त्रिभ्यां मुखेन कर्णाभ्यां च जलं पिबतीति त्रिपिबः। जलपान-काले मुखवत् दृढ़त्वेन विलुलितकर्णयोरपि जलमध्ये प्रवेशात्तथा कथनम्। महाशल्का रोहिताकारा मत्स्यविशेषाः। वृहच्छल्काः कामरूपेषु प्रसिद्धाः पामराणामपि महाशाला इति व्यवहार्य्याः। "महाशल्का मत्स्या" इति यमोक्तेः।

यमः,— गावयं रुद्रसंमितान्।
आनन्त्याय प्रकल्पेत खड्गमांसं पितृक्षये।
पितृक्षयो मघा ज्ञेया तत्र दत्तं महाफलम्॥

तथा,— यत्किंचिन्मधुना युक्तं तदानन्त्याय कल्पते।
उपाकृतं तु विधिना मन्त्रेणान्नं तथाकृतम्॥

गावयम्। गवयमांसं रुद्रसमितान् एकादशमासानित्यर्थः। उपा-कृतं मन्त्रविहितं संस्कृतं अन्न। तथाकृतं उपाकृतमेव।

कात्यायनसूत्रम्,— अथ हविर्ग्राम्याभिरोषधीभिर्मांसं हविः, तदभावे मूलफलैरद्भिर्वा सहान्नेनोत्तरास्तर्पयन्ति छागोस्त्रमेषा आलभ्याः शेषाणि क्रीत्वा वा स्वयं मृतानाहृत्य पचेत्।

उत्तराः तिस्र. फलमूलादयः उस्राः अनड्वान्[१] आलभ्याः छागालम्भाः।

---

(१) अनडुह।

विष्णुः,— शाकैः श्यामाकैः प्रियङ्गुनीवारैर्मुद्गैर्गोधूमैश्च मासं प्रीयन्ते। तथा कालशाकं महाशल्का, वार्द्धीणसमांसं खड्गमांस-मित्यचयाय।

पैठीनसिः,— घृतेन मासं प्रीणाति कालशाकेन द्विमासं यवागूपूप-कृशरेण त्रिमासं इत्यादि।

उशनाः,— चतुरोमासान् कृष्णसारङ्गेण।

शङ्खः,— आम्रान् पारेवतानिक्षून् मृद्वीकाभव्यदाड़िमान्।

विदार्यांश्च भारु[1]ण्डांश्च श्राद्धकालेऽपि दापयेत्॥

लाजान् मधुघृतान् दद्यात् सक्तून् शर्करया सह।

दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटविशकेतुकान्[2]॥

पारेवतं जम्बीराकारं फलं, काश्मीरदेशे तु आउ[3] आउ इति प्रसिद्धं, मृद्वीका द्राक्षा भव्यपदस्य कर्मरङ्गफलवाचकत्वात्, उआउ इति प्रसिद्धफलवाचकत्वाच्च, अविरोधात् समाचाराच्चो भयमपि ग्राह्यं इति सङ्गनिबन्धकृतः। विदार्यांश्च जलप्रभवाः कन्दविशेषाः। भारुण्डो जलप्रभवः कन्दविशेषः। केवुकं तद्वत् जलप्रभवः कन्दविशेष.।

मनुः,— मुन्यन्नानि पयः सोमो मांस यच्चानुपस्कृतम्।

अचारलवणं चैव प्रकृत्या हविरुच्यते॥

देवलः,— धानाश्च मधुसंयुक्ता दद्यांश्चैव सगोरसान्।

शर्कराः फलमूलञ्च सर्वं दद्यादमत्सरः॥

गोरसपदोपादानात् आमिक्षासारप्रभृतीनां गव्यानामेव देयत्वं

---

(१) भरण्डाश्च। (२) शृङ्गाटकसकेवुकान्। (३) उ इति

महाभारते,—

सर्वकामैः स यजते यस्तिलैर्यजते पितॄन्।

वायुपुराणे,—

श्यामाकैरिक्षुभिश्चैव पितॄणां सार्वकामिकम्।
कुर्य्यादाग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयात्॥
श्यामाका हस्तिनामानो वर्ज्जितान् यज्ञनिःसृतान्।
प्रसातिका प्रियङ्गुश्च ग्राह्याः स्युः श्राद्धकर्मणि।
एतान्यपि समानि स्युः श्यामाकानां सदा गुणैः॥
कृष्णा माषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः।
महायवा व्रीहियवास्तथैव च मधूलिकाः॥
कृष्णाः श्वेता लोहिताश्च ग्राह्याः स्युः श्राद्धकर्मणि।
विल्वामलकमृद्वीकापनसाम्रातदाड़िमम्॥
भव्यपारेवताचोड़ं खर्ज्जूराम्रफलानि च।
कशेरुकोविदार्य्यश्च तालकन्दं तथा विषम्[१]॥
तमालं शतकन्दञ्च मध्यालुं शीतकन्दकम्।
कालेयं कालशाकञ्च सुनिषण्णं सुवर्च्चला॥
मांसं शाकं दधि क्षीरं चैक्षुर्वैचाङ्कुरस्तथा।
कट्फलं कङ्गुणी द्राक्षा लकुचं मोचमेव च॥
कर्कन्धुश्चावकं वारं तिन्दुकं मधुसाह्वयम्।
वैकङ्कतं नारीकेलं शृङ्गाटककटीफलम्॥
पिप्पली मरीचं चैव पटोलं वृहतीफलम्।

---

(१) विसं।

सुगन्धिमत्स्यमांसञ्च कलायाः सर्वएव च ॥
एवमादीनि चान्यानि स्वादूनि मधुराणि च ।
नागरं चात्र वै देयं दीर्घमूलकमेव च ॥

प्रसीतिका मध्यदेशप्रसिद्धं धान्यं, महायवा वेणुयवाः, मधूलिका धान्यविशेषः, योनालभेदो देवधान्यमिति गौड़ाः । अस्यैव विशेषणं कृष्णाः श्वेता लोहिताश्चेति । आचोडं काश्मीरप्रसिद्धफलं । कोविदारः श्वेतकाञ्चनारसदृशः । तालकन्दः तालमूलीति प्रसिद्धं । शतकन्दं शतावरी । शीतकन्दं शालूकं । कालेयं तिक्तः शाकविशेषः, कालाख्यं शाकं करालाख्यमिति गोविन्दराजः । सुनिषण्णं चाङ्गेरी[१]-सदृशं जलप्रभवं शाकं । सुवर्चला सूर्यभक्तशाकं, सूर्यावर्त्ता इति गौड़ाः । चेञ्चुः चञ्चु इति प्रसिद्धं शाकं मण्डशाकमिति गौड़ाः । कट्फलं कट्फलवृक्षफलमेव । कङ्कणी द्राक्षा अम्लरसा द्राक्षा । मोचः कदलीफलं । कर्कन्धुः वदरीविशेषः । नागरं सुण्ठी, सुण्ठी आर्द्रकप्रकृतिकत्वादार्द्रकस्यापि देयत्वं । मूलकं द्विविधं, पिण्डमूलकं दीर्घमूलकं चेति ।

तत्र वक्ष्यमाणशङ्खोक्त्या पिण्डमूलकस्यैव निषेधात् ।

वायुपुराणे,—

दीर्घमूलकस्य देयत्वेनोपादानाद्दीर्घमूलकं देयमेव ।

मार्कण्डेयपुराणे,—

यवव्रीहिसगोधूमौ तिलमुद्गाः ससर्षपाः ।
प्रियङ्गवः कोविदाराः निष्पावाश्चात्र शोभनाः ॥

(१) गङ्गेरीसदृशं ।

निष्पावा शिम्बीमद्‌गा दक्षिणापथप्रसिद्धाः । तस्मादृश्याश्चिम्बस्य दानसमाचारः स्वादुमधुरत्वाच्च ।

[१]आदिपुराणे,—

मधुकं रामठं चैव कर्पूरं मरीचं शुभम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुषं तथा ॥

रामठं हिङ्गु । त्रपुषं सुखासिकापरनामिका कर्कटी मधुरत्वा-त्तज्जातीयत्वाच्चान्यकर्कटीनां दानसमाचारः । अतस्तदलाभे फलमूलै-रद्भिरिति कात्यायनसूत्रे, आपोमूलफलानि चेत्यापस्तम्बोक्त्या, अद्भि-र्मूलफलेन चेति मनूक्त्या च निषिद्धेतरस्वादुमधुरमूलफलमात्रस्य सामान्यतो विहितत्वादालुप्रभृतीनां दानसमाचारः ।

अथ वर्ज्याणि ।

हारीतः,— विषच्छन्न हतं मांसं व्याधितिर्यग्गतं च यत् ।
न प्रशंसन्ति वै श्राद्धे यच्च मन्त्रविवर्जितम् ॥

वायुपुराणे,— वर्जनीयानि वक्ष्यामि श्राद्धकर्मणि नित्यशः ।
करम्भधान्यान्यन्यानि हीनानि रसगन्धतः ॥
अवेदोक्ताश्च निर्यासा लवणान्यूषराणि च ।
दुर्गन्धि फेनिलं चैव तथा वै पल्वलोदकम् ॥
न लभेद्यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते ।
आविकं मार्गमौष्ट्रं च सर्वमेकशफञ्च यत् ॥
माहिषं चामरं चैव प्रायो वर्ज्यं विजानता ।

पल्वलं अल्पसरः ।

---

(१) आदित्यपुराणे ।

रपि न स्वरूपेण दानम् । यस्यामव्यञ्जनादेः समीपे च्युतं क्षुतं तदवच्युतं । च्युतं छिक्का । एवं रुदितं बोध्यं ।

शङ्खः,—भूस्तृणं सुरसं शिग्रु पालङ्क्यां सुमुखं तथा ।

कुष्माण्डालावुवार्त्ताकीकोविदारांश्च वर्जयेत् ॥

पिप्पली मरीचं चैव तथा वै पिण्डमूलकम् ।

कृतञ्च लवणं सर्वं वंशाग्रञ्च विवर्जयेत् ॥

राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान् ।

लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ॥

मरीचादिनिषेधोऽपि हिङ्गुवत्स्वरूपेण दीयमानस्यैवेति बोध्यं । वंशाग्रं वंशकरीरं । कोरदूषको वनकोद्रवः । राजमाषो झुडुङ्ग इति गौड़ाः । पिण्डमूलकशब्दस्य पिण्डमारु इति प्रसिद्धमूलपरत्वं केचिद्वदन्ति । केचित्तु सूरणपरत्वं । तदुभयमपि विचारासहं तयोर्मूलशब्देन व्यवहाराभावात् । तथा कोषाद्यभावाच्च । वर्त्तुल-मूलकदीर्घमूलकयोरेव मूलकशब्दप्रसिद्धेश्च । अत्र कल्पतरुकाराः,—

ततोऽन्नं बहुसंस्कारं इति वक्ष्यमाणशङ्खोक्त्या विहितस्याभ्यव-(१)हरणीयद्रव्यस्य यथालाभमुपकल्पितस्य श्राद्धस्वरूपसम्पादकत्वं, तद-भावे तु अविहिताप्रतिषिद्धं विहितसदृशमुपादातव्य । यत्तु श्राद्ध-प्रकरण एव प्रतिषिद्धं तत् प्रतिनिधित्वेनापि नोपादेयं । यच्च तु *फलविशेषसंयोगः तस्य श्राद्धस्वरूपसम्पादकत्वे सति* तत्फलविशेष-सम्पादकत्वमपि । यच न फलविशेषसंयोगः तेषां नित्यवदङ्गत्वात्त्वै-र्विना श्राद्धाङ्गानिष्पत्तिरेव । यत्तु निषिद्धं गोमहिषमांसादिफल-

(१) अभ्यवहरणीयद्रव्यस्य ।

विशेषार्थं विहितं, तत् तत्फलार्थिनैवोपादेयं, न तु श्राद्धस्वरूप-सम्पादकत्वेन। यत्तु यस्मिन्नेव द्रव्ये पितृतृप्तिकालाल्पीयस्त्वं भूयस्त्वं वा[1]। तत्तस्यैव द्रव्यस्यावस्थाविशेषापेक्षया बोद्धव्यमिति।

आलुफलकदलीकुसुमहरितकादीनां कषायवत्कलत्वाद्दानाभाव-एव। कोमलतालफलस्य मधुरत्वाद्देयत्वमिति केचित्। तदन्ये न सहन्ते।

फलं तालतरूणान्तु भुक्त्वा नरकमृच्छति।

इति वचने पक्वापक्वसाधारण्येन निषेधात्। हिङ्मोचाशाकादे-र्हविष्यत्वेऽपि तिक्तत्वाददेयत्वमेव। [2]चाङ्गेरिशाकं, श्रीहट्टेप्रसिद्ध-नामकटभालेम्बु[3]जम्भीरवीजपूरनागरङ्गप्रभृतयोऽम्लरसत्वान्न देयाः। पक्वतिन्तिड़ीनां[4] माधुर्यसाहित्याद्दानसमाचारः। लवणत्वात् समुद्र जलप्रभृतयो न देयाः।

अथ परिवेषणविचारः।

परिवेशस्तु शस्तः स्यात् भार्यया पितृतृप्तये।
पितृदेवमनुष्याणां साहाय्ये सा यतः स्थिता॥

मनुबृहस्पती,—

पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम्।
विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत्॥
मुक्त ह्युभाभ्यां हस्ताभ्यां यदन्नमुपनीयते।
तद्विप्र लुम्पन्त्यसुराः सहसा दुष्टचेतसः॥
गुणानपूपशाकाद्यान् पयो दधि घृतं मधु।

---

(१) च। (२) गा।
(३) लेम्बाडदेलेम्बाड। (४) तिन्तिडीफलस्य।

मार्कण्डेयपुराणे,—

पित्रर्थं मे प्रयच्छस्वेत्युक्त्वा यथाप्युपाहृतम् ।
वर्जनीयं सदा सद्भिस्तत्पयः श्राद्धकर्मणि ॥
दुर्गन्धि फेनिलं चाम्बु तथा न प्रदरोदकम्[१] ।
यन्न सर्वार्थमुत्सृष्टं यथाभोज्यनिपानजम् ॥
तद्वर्ज्यं सलिलं तात सदैव पितृकर्मणि ।

अभोज्यं निपानजं पतितादिकारितपुष्करिण्यादिजलं ।

मात्स्ये,—मसूरषणनिष्पावा राजमाषाः कुलत्थकाः ।
पद्मविल्वकधूस्तुरपारिभद्राटरूपकाः ॥
न देयाः पितृकार्येषु पयश्छागाविकं तथ
कोद्रवो दारविवरं कपित्थं मधुकातसी ॥
एतान्यपि न देयानि पितृभ्यः प्रियमिच्छता ।

पारिभद्रं पालिहद इति प्रसिद्धं ।

ब्राह्मे,— दधिशाकं तथा भक्ष्यं मूलं वावधि[२]वर्जितम् ।
वर्जयेच्चेत्तया चान्यान् सर्वानभिषवानपि ॥

दधिशाकं शाकविशेषो दहिदहिश्रा इति प्रसिद्धम् ।

हारीतः,— पालङ्क्या[३]नालिकापोतिकाशिग्रुस्रुसुकवार्त्ताकुभूस्तृणक-फेलुमाषमसूरकृतलवणानि च श्राद्धे न दद्यात् ।

नालिकाऊलपौति मगधादौ प्रसिद्धः शाकविशेषः । स्रुसुकं वीजपूरं । भूस्तृणं रामकर्पूरं कफेलु जलप्रभवं शाकं ।

हारीतभाष्यकारस्तु,—भूस्तृणकफेलू शाम्भारण्यौ शाकविशेषौ काश्मीर-

(१) प्रसरोदक । (२) दधिवर्जितं । (३) पलङ्क्या ।

प्रसिद्धाविदयुक्तवान् । माषनिषेधोऽच गौरमाषपरः कृष्णमाषाणां देयत्वेनोक्तत्वात् ।

विष्णुः,— पिप्पलीमरिचमुकभूस्तृणासुरीसर्षपसुरसकुष्माण्डालाबुवार्त्ताकीपालङ्क्यातण्डुलीयककुसुम्भपिण्डमूलकमहिषीक्षीराणि वर्जयेत् । राजमाषमसूरपर्युषितकृतलवणानि च ।

आसुरीसर्षपो राजसर्षपः । सुरसं तुलसीशाकम् ।

महाभारते,—

अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा ।
हिङ्गुद्रव्येषु सर्वेषु अलावु लसुनं तथा ॥
पलाण्डुशोभाञ्जनकौ तथा गृञ्जनकादयः ।
खुरखुण्डकान्यलावूनि[१] कृष्णं लवणमेव च ॥
ग्राम्यं वराहमांसं यत् यच्चैवाप्रोक्षितं[२] भवेत् ।
कृष्णाजीरी विड़ञ्चैव शीतपाकी तथैव च ॥
अङ्कुरार्यास्तथा वर्ज्या इह शृङ्गाटकानि च ।
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च ॥
अवक्षुतञ्च रुदितं तथा श्राद्धेषु वर्जयेत् ।

अत्र हिङ्गोर्निषेधः स्वरूपेण दीयमानस्य । द्रव्यान्तरसंस्कारकत्वेन तस्य पूर्वं विहितत्वात् । गृञ्जनं गाजर इति पश्चिमदेशप्रसिद्धमूलभेदः । खुरखुण्डकानि छत्राकसमानप्रकृतिकद्रव्याणि पिण्डोपमानि । कृष्णलवणं सुवर्चला । कृष्णा[३]जीरी कृष्णाजीरकं । शीतपाकी काकजङ्घा । सर्वशब्दोपादानात् सैन्धवलवणसामुद्रलवणयोर्द्वयोर्विषयो-

(१) खुरखुण्डकानि । (२) यच्चैव प्रोषितं । (३) कृष्णजीरकं ।

विन्यस्य प्रयतः सम्यक् भूमावेव समाहितः ॥
भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च ।
हृद्यानि चैव मांसानि पानानि सुरभीणि च ॥
उपनीय तु तत्सर्वं शनकैः सुसमाहितः ।
परिवेषयेत्तु परितो गुणान् सर्वान् प्रचोदयन् ॥
यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः ।
ब्रह्मोद्याश्च कथाः कुर्यात् पितॄणामेतदीप्सितम् ॥

अन्नस्येति तृतीयार्थे षष्ठी । वर्द्धितं पूरितं । उभाभ्यां सुक्तं हस्तद्वयेनासम्बद्धम् । गुणान् अप्रधानानि दध्यपूपादिविशेषणं, भोजनेऽन्नस्यैव प्राधान्यात् अपूपादीनां गुणत्वं । द्वितीयगुणानीत्यत्र माधुर्यादिगुणान् कथयन्नित्यर्थः ।

देवलः,— स्थित्वैव निभृतः कर्त्ता मुदितः सादरः शुचिः ।
ततो विषदमानीय भोजयेत्प्रयतो द्विजान् ॥

विषदं विमलं ।

शङ्खः,— उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत् ।
अन्यच फलमूलेभ्यः पानकेभ्यश्च पण्डितः ॥
भोजयेद्विधिवत् पश्चात् गन्धमाल्योज्ज्वलान् द्विजान् ।

अन्यत्रेति उक्तफलमूलान्येवानुष्णानि देयानि ।

(१)वक्ष्यमाणं याज्ञवल्क्यः,—

अन्नमुष्णं हविष्यञ्च दद्यादक्रोधनोऽत्वरः ।

आपस्तम्बः,— नैयामिकन्तु(२) यच्छ्राद्धं स्नेहवदेव दद्यात् ।

(१) देयवक्ष्यमाणं । (२) नैयामिकं च ।

सर्पिर्मांसमिति प्रथमः कल्पः, अभावे तैलं शाकमिति। मघासु चाधिकं श्राद्धकल्पेन सर्पिः ब्राह्मणान् भोजयेत्। मासिकश्राद्धे तिलानां द्रोणं येनोपायेन शक्नुयात् तेन भोजयेत्। समुदितान् सम्भोजयेत्। अस्यार्थः, नैयामिकं अमावास्यादि श्राद्धं। तत् स्नेहं विना न दद्यात्। अधिकं सर्पिर्ब्राह्मणान् भोजयेत् श्राद्धकल्पेनेत्यन्वयः। श्राद्धे वैकल्पिकमपि तैलं न देयमिति तात्पर्य्यं। तिलानां द्रोणमुपयोजयेदिति ब्राह्मणभूयस्त्वपक्षे। येनोपायेन शक्नुयादिति मोदकादिप्रकारेण समुदितान् गुणवत इति।

ब्राह्मे,— उष्णान्नं परिदग्धञ्च तथैवाग्रावलोढितम्।
शर्करीकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम्॥
पिण्याक[१]मथितञ्चैव तथातिलवणञ्च यत्।
सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षं लवणीकृताः॥
वाग्दुष्टा भावदुष्टाश्च दुष्टैश्चोपहतास्तथा।
वाससा वाऽवधूतानि वर्ज्याणि श्राद्धकर्मणि॥

उष्णान्नमित्यत्र अत्युष्णान्नमित्यर्थः। उष्णान्नदानस्य वह्नवाक्येयुक्तत्वात्। शीतलान्नदानस्य वक्ष्यमाणनिषेधाच्च। अग्रावलोढितं [२]उपयुक्ताग्रभागं। सिद्धाः कृता इत्यादेरर्थः, येषु सिद्धेषु उत्तरकालं प्रत्यक्षलवणप्रक्षेपः कृतः।

मार्कण्डेयपुराणे,—
भक्ष्यान्नानि करम्भश्च इष्टका घृतपूरकाः।
क्षरं दधि सर्पिश्च पयः पायसमेव च॥

(१) पिण्याकं मथितं। (२) तपयुक्ताग्रभागं।

स्निग्धमुष्णञ्च यो दद्यादग्निष्टोमफलं लभेत् ।
दधिगव्यमसंसृष्टं लेह्यान्नानाविधानपि ॥
दत्वा न शोचति श्राद्धे वर्षासु च मघासु च ।
घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत् ॥
शर्कराः क्षीरसंयुक्ताः पृथुका नित्यमक्षयाः ।
स्युश्च संवत्सरं प्रीता श्चोरभ्रैर्मैपकैणकैः ॥
सक्तून् लाजान् तथा पूपान् कुल्माषान् व्यञ्जनैः सह ।
सर्पिः सिद्धानि सर्वाणि दध्ना संस्कृत्य भोजयेत् ॥

करम्भो दधिमिश्रिताः सक्तवः । इष्टकाः कासारखण्डाः । घृतं भूमौ समुत्सृजेत् तथा घृतेन पात्रं पूरणीयं यथा घृतं क्षरतीत्यर्थः । पृथुकाः चिपिटकाः ।

विष्णुः,— न प्रत्यक्षलवणं दद्यात् ।

शातातपवशिष्ठवृद्धशातातपाः,—

हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनानि च ।
सैन्धवं लवणं यच्च तथा मानससम्भवम् ॥
पवित्रे परमे ह्येते प्रत्यक्षमपि नित्यशः ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ॥
तस्मादन्तरितं देयं पर्णेनैव तृणेन वा ।
प्रदद्यान्न तु हस्तेन नायसेन कदाचन ॥

वृद्धशातातपलघुहारीतौ,—

आयसेन तु पात्रेण यदन्नं सम्प्रदीयते ।
भोक्ता विष्ठासमं भुङ्क्ते दाता तु नरकं व्रजेत् ॥

यमशातातपौ,—

स्रुतं नखैश्चतुर्भिश्च यो दद्यात् प्राणिना घृतम्।

दाता पुण्यं न चाप्नोति भोक्ता पापगतिं व्रजेत्॥

तथा,— माक्षिकं फाणितं शाकं गोरसं लवणं घृतम्।

हस्तदत्तानि भुक्त्वा च दत्वा सान्तपनं चरेत्॥

हस्तदत्ता च या भिक्षा सलिलव्यञ्जनानि च।

भुक्त्वा ह्यशुचितां याति दत्वा स्वर्गं न गच्छति॥

मनुः,— राजतैर्भाजनैरेषामथवा रजतान्वितैः।

वार्यपि श्रद्धया दत्तमक्षयायोपपद्यते॥

हारीतः,— काञ्चनेन तु पात्रेण राजतौदुम्बरेण वा।

दत्तमक्षयतां याति खड्गेनार्यकृतेन च॥

आर्य्यकृतमत्र त्रैवर्णिकनिर्मितमन्यदपि पात्रमभिमतम्।

विष्णुः,— घृतादिदाने तैजसानि पात्राणि फल्गुपात्राणि प्रशस्तानि वा।

वृद्धशातातपः,— पात्रे तु मृण्मये यस्तु श्राद्धे भोजयते पितॄन्।

तत्र दाता पुरोधाश्च भोक्ता च नरकं व्रजेत्॥

अथश्चीयं प्रकृत्य पैठीनसिः,— लोहानां सिसकायसपाषाणहीन-पात्राणि तीर्थपात्राणि वा। लोहानामपि सीसकायसापेक्षया निर्द्धारणं। हीनं अतिक्षुद्रं।

मनुः,— नास्रमा [१]पातयेज्जातु न कुप्येन्नानृतं वदेत्।

न पादेन स्पृशेदन्नं न चैतदवधूनयेत्॥

---

(१) पीडयेत्।

अस्त्रं[१] गमयति प्रेतान् कोपोऽरीननृतं शुनः ।
पादस्पर्शस्तु रक्षांसि दुष्कृतानवधूननम् ॥

दुष्कृतान् पापकारिणः ।

देवलः,—अश्रु न पातयेत् श्राद्धे न जल्पेन् प्रेक्षेन्मिथः ।
न विभ्रमेन च क्रुध्येत् नोद्विजेच्चाच कुत्रचित् ॥
प्राप्ते हि कारणे श्राद्धे नैव क्रोधं समुत्सृजेत् ।
आश्रितः खिन्नगात्रो वा न तिष्ठेत् पितृसन्निधौ ॥
न चात्र श्येनकाकादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्तत्र समायान्तीति वैदिकाः ॥

कारणे क्रोधस्येति शेषः । समुत्सृजेत् अभिव्यञ्ज्यात् । आश्रितः उपाश्रितः । विष्णुः,—नान्नमासनमारोपयेत् न पदा स्पृशेत् न वा युतं कुर्यात् ।

दृष्टं निवेदितं लब्धं भुक्तं जप्तं तपः श्रुतम् ।
यातुधानाः प्रलुम्पन्ति शौचभ्रष्टद्विजन्मनः ॥
यथा क्रोधेन यद्दत्तं भुक्तं यत्त्वरया पुनः ।
उभयं तद्विलुम्पन्ति यातुधानाः सराक्षसाः ॥
पितॄन्नावाहयित्वा तु नायुक्तप्रभवो भवेत् ।
तस्मां नियम्य वाचञ्च श्रद्धया श्राद्धमाचरेत् ॥
तथा, अक्रुद्धपरिविष्टं हि श्राद्धं प्रीणयते पितॄन् ।

अयुक्तप्रभवः अयुक्तस्य असम्बन्धप्रलापादेः प्रभवः कारणं तन्न भवेदित्यर्थः ।

---

(१) अस्रं ।

बौधायनः,—

अश्रद्धाः परमः पाप्मा पाप्मा त्वज्ञानमुच्यते।
अज्ञानो लुप्तधर्मः स्याल्लुप्तधर्मोऽधमः स्मृतः॥
श्रद्धया शोध्यते[१] बुद्धिः श्रद्धया शोध्यते[२] मतिः।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापप्रमोचिनी।
तस्मादश्रद्दधानस्य हविर्नाश्नन्ति देवताः॥

मतिरिच्छा। बुद्धेः पृथगुपादानात्।

मनुः,— यद्यद्ददाति विधिवत् सम्यक् श्रद्धासमन्वितः।
तत्तत्पितॄणां भवति परत्रानन्तमक्षयम्॥

यमः,— यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा श्राद्धेषु मिष्टान्नं मन्त्रः प्रीणयते पितॄन्॥
हर्षयेद्ब्राह्मणांस्तुष्टो भोजयेत् ब्राह्मणांश्छनैः।
अन्नाद्येनासकृत् चैतान् गुणैश्च परिवेदयेत्॥
भक्ष्यभोज्यगुणानुक्त्वा भोजयेत् ब्राह्मणान् शनैः।
आख्यानैः सेतिहासैश्च पूर्ववृत्तैश्च हर्षयेत्॥

आपस्तम्बः,— प्रयतः प्रसन्नमनाः स्पृष्टो भोजयेद् ब्राह्मणान्।

सृष्ट उत्साहयुक्तः।

यमशातातपौ,—

यावदुष्णं भवति यावच्छिष्टः प्रदीयते।
तावदश्नन्ति पितरो यावन्नाहं [३]ददाम्यहम्॥

---

(१) शोधते। (२) शोधते।
(३) वदाम्यहं।

ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् ।
तयोरन्नमभक्ष्यं स्यात् भुक्त्वा चान्द्रायणं चरेत् ॥
इत्येन यद्भूतं चौद्रं तत्किमानीयतामिति ।

तदपि शौद्रं शीतलं अन्नं शौद्रम् । शूद्रैः परिवेष्टितं भवति शौद्रं । शौद्रं शूद्रस्येव अश्रद्धायोग्यमित्यर्थः । किमानीयतामिति पृष्ट्वा यदानीतमन्नादिकं तदपि शौद्रं ।

हारीतः,—पंक्त्या[१] चैवोपविष्टेभ्यः समं गन्धादि भोजनम् ।
न पंक्त्या विषमं दद्यान्न याचेन्न च दापयेत् ॥
याचिता दापिता दाता न ते स्वर्गस्य भागिनः ।
कृच्छ्राद्वा दशरात्रेण मुच्यते कर्मणस्ततः ॥
तस्माद्विद्वान् नैव दद्यात् नाभियाचेत् न दापयेत् ।
एकपंक्त्युपविष्टानां विषमं यः प्रयच्छति ॥
दुष्कृतं हरते पंक्त्या अन्नं गृह्णाति यस्य तत् ।
कुनदीसेतुकारस्य कन्याविघ्नकरस्य च ॥
पंक्त्या विषमकारस्य निष्कृतिर्नोपपद्यते ॥

कुनदी स्वल्पजला । सेतुना तत्प्रवाहस्य विच्छेदात्तदुपजीविनां बहूनां पीड़ा जायते ।

हारीतः,— यस्त्वेकपङ्क्त्या कुरुते विशेषम्,
स्नेहाद्भयाद्वा यदि वार्थहेतोः ।
ऋषिप्रणीतस्मृतिवेददृष्टाम्,
तां ब्रह्महत्यामृषयो वदन्ति ॥

(१) पङ्क्त्यां ।

याज्ञवल्क्यः,—

निरङ्गुष्ठञ्च यच्छ्राद्धं वहिर्जानु च यत्कृतम्।

वहिर्जानु च यद्भुक्तं सर्व्वमेवासुरं भवेत् ॥

मनुहारीतविष्णुशातातपोशनसः,—

अत्युष्णं सर्व्वमन्नं स्याद्भुञ्जीरंस्तेऽपि वाग्यताः।

न च द्विजातयो ब्रूयुर्दाता[1] पृष्टा हविर्गुणान् ॥

वाग्यता इत्युक्तावपि पुनर्हविर्गुणानभिधानोक्तिर्हस्तसंज्ञादिनाऽपि हविर्गुणप्रतिपादननिषेधपरा।

देवलः,—ब्राह्मणश्च तथा शुद्धः प्रसन्नेन्द्रियमानसः।

पैतृकान्नमुपाश्नीयादसंक्रान्तः प्रसन्नवान् ॥

प्रसन्नवान् प्रसन्नः।

तथा,— अन्नपानकशीतोदविधिभ्यो ह्यवलोकितः।

वक्तव्ये कारणे संज्ञां कुर्व्वन् भुञ्जीत पाणिना ॥

अन्नादिदानार्थं दाताऽवलोकितः संज्ञां हस्तादिना सङ्केतं कुर्य्यात्। एवं वक्तव्ये कारणे स्वीकारे[2] हेतौ शङ्खलिखितौ,—

ब्राह्मणा अन्नं गुणदोषैरभिवदेयुरन्योऽन्यं न प्रशंसेयुः अन्नदानं न प्रभूतमिति ब्रूयुः अन्यत्र हस्तसंज्ञया यावद्भूमौ यावदप्रशस्तं यावत् मौन तावदश्नन्ति पितरो अन्यत्र फलमूलेभ्यः। अप्रशस्तं अकृतप्रशंसं। यावद्भूमौ भूमौ भोजनपात्रं यावत्तिष्ठतीति शेषः। तेन भोजनपात्रं नोद्धर्त्तव्यं।

वाराहे,—उद्धरेद्यदि पात्रन्तु ब्राह्मणो ज्ञानदुर्व्वलः।

(१) दाता। (२) स्वीकारहेतौ।

हरन्ति राक्षसास्तस्य भुञ्जानोऽन्नं च सुन्दरि ।

यमः,— यस्तु पाणितले भुङ्क्ते यः सवायुं तथाश्नुते ।
न तस्य पितरोऽश्नन्ति यश्चैवाग्रे प्रशंसति ॥
श्राद्धे नियुक्तो भुञ्जानो न पृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥
दातुश्च पतते वाङ्जिह्वा भोक्तुश्च भिद्यते ।

सवायुं फुत्कारसहितं ।

विष्णुः,—अश्नीयु र्ब्राह्मणाश्च वाग्यताः न वेष्टितशिरसो न सोपानत्काः न पीठोपहितपाणयः ।

मनुशातातपौ,—

यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते ॥

देवलः,—

योऽप्रसन्नमना भुङ्क्ते सोपानत्कोऽपि वा पुनः ।
प्रलापशीलः क्रुद्धो वा स विप्रः पितृदूषकः ॥
प्रहसन्नपि यो भुङ्क्ते स च नाप्यायते पितॄन् ।
यो वेष्टितशिरा भुङ्क्ते यो वा भुङ्क्ते विगर्हितान् ॥

यमः,—

यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते वृषलीपतिः ।
सोपानत्कश्च यद्भुङ्क्ते यत्तु दत्तं तिरस्कृतम् ॥
तत्सर्वं दानवेन्द्राय ब्रह्मभागमकल्पयत् ।
उद्धृत्य पाणिं विहसन्सक्रोधभिषयान्वितः ॥

श्राद्धकालेषु यद्भुङ्क्ते न तत् प्रीणाति वै पितॄन्।
आसुरं विज्ञायान्नं स्यात् क्रोधान्नं राक्षसं विदुः॥
असत्कृतमविज्ञातं पैशाचं परिचक्षते॥

शातातपः,—
उपवीतं कटौ कृत्वा कुर्याद्गन्धानुलेपनम्।
एकवाससश्च योऽश्नीयान्निराशाः पितरो गताः॥
उपवीती ततः कुर्याद्भूतः श्राद्धेऽनुलेपनम्।
न भिक्षुकः शिखावर्जं माल्यं शिरसि धारयेत्॥
मध्यादंसात्परिभ्रष्टं नाभिदेशे व्यवस्थितम्।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये विवर्जयेत्॥

यमः,— अग्रासनोपविष्टस्तु यो भुङ्क्ते प्रथमं द्विजः।
बहूनां पश्यतां सोऽन्नं पङ्क्त्यां हरति किल्बिषम्॥

अग्रासनोपविष्टः पङ्क्तिमूर्द्धन्युपविष्टः।

शातातपः,—
हस्तं प्रक्षाल्य यस्त्वापः पिबेद्भुक्त्वा द्विजः सदा।
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः॥

भुक्त्वा भोजनं समाप्य। आपोऽत्र भोजनान्तचुलुकगताः।
यच्च भुक्तं पुनर्भुक्तं यच्च तैलाभिघारितम्।
रजस्वलाभिर्यद्दृष्टं तद्वै रक्षांसि गच्छति॥
केशकीटविपन्नञ्च श्रुतं श्वभिरवेक्षितम्।
रुषितं चावधूतञ्च तद्वै रक्षांसि गच्छति॥

घृतसम्भवे तैलाभिघारितं दुष्टं। अवधूतं वाससेति शेषः।

उशना,—

नियुक्तश्चैव य श्राद्धे यत्किञ्चित्परिवर्जयेत्।
पितरस्तस्य त मास नैराश्य प्रतिपेदिरे॥

यत्किञ्चित्परिविष्टमरोचमानमपि यथाशक्ति किञ्चिदपि भक्षणीयमित्यर्थ।

अथ नियुक्तस्य मासभक्षणाभक्षणविचार,— चतुर्दश्यादिपर्वस्वपि दैवात् कृतनिमन्त्रणस्वीकारेण मास भक्षणीय। पर्वसु मासभक्षणदोषापेक्षया श्राद्धीयमासत्यागे दोषगौरवात्।

तथा च मनु,—

यथाविधि नियुक्तस्तु यो मास नात्ति मानव।
स प्रेत्य पशुता याति सम्भवानेकविंशतिम्॥

यमहारीतौ च,—

नियुक्तस्तु यदा श्राद्धे यस्तु मास न खादति।
यावन्ति पशुरोमाणि तावन्नरकमश्नुते॥ इति।

किन्तु,—वर्णिना हि वधो यत्र तत्र साक्ष्यनृत वदेत्।
तत्पावनाय निर्वाप्यश्चरु सारस्वतो द्विजै॥

इत्यत्र यथा सत्योक्तौ वर्णिवधे दोषभूयस्त्वात् कूटसाक्षित्वम् कृत्वा पश्चात् प्रायश्चित्त, तथात्रापि वैदिकप्रायश्चित्त कार्यम्।

ननु श्रुत्यादिप्राप्तमासवर्जनप्रतिषेधोऽय, न तु पर्वविहितमासवर्जनप्रतिषेधविधि,

विहितप्रतिषेधे विकल्पापत्ति(१)रिति चेन्न। यथा हि दीक्षि-

(१) विकल्पापत्तेरिति।

तस्य क्रत्वर्थदानहोमपाकप्रतिषेधः पुरुषार्थलौकिकवैदिकसर्वहोमादिप्रतिषेधकः सोमाङ्गत्वेन विधीयते।

तद्वत्क्रत्वर्थमांसभक्षणस्य च पुरुषार्थमांसनिषेधबाधकत्वात्। यथा वा वैधमवैधं च मांसादि पर्वाङ्गत्वेन न निषिध्यते, एतदेवाभिप्रेत्य-कल्पतरुणाङ्गिरुक्तम्।

यत्तु मांसवर्जनात् फलं तद्देवपित्र्यर्चनशेषमांसस्य। न तु नियुक्तस्य श्राद्धीयमांसविषयं। तत्राभक्षणे दोषश्रवणात् इति। अत्र ब्रह्मचारियतिब्राह्मणकश्राद्धे तु मांसं मधु च सर्वथा न देयं।

विना मांसेन मधुना विना दक्षिणयाशिषा।

सम्पूर्णं श्राद्धकर्म स्यात् यतिषु श्राद्धभोजिषु॥ इति स्मृतेः।

ननु एतदुक्तिः कल्पतरुकारादिभिरनादृतत्वात् सन्दिग्धप्रामाण्यकमिति चेदुच्यते। मधुमांसयोः श्राद्धे दानाभावे दोषप्रतिपादकवचनं नैवास्ति। किन्तु फलार्थमेवोक्तम्। यत्यादिब्राह्मणकश्राद्धेऽपि बहुफलप्राप्तिरुक्ता इति, तल्लोभेन मधुमांसयोरदानमेव।

योगीश्वरेण,—

ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीड़यन्।

इति मांसभोजनं यत्यादेर्निषिद्धमेव।

पात्रे पतितमश्नीयान्मधुमांसविवर्जितम्।

यतिधर्मयुक्तमित्यलं प्रपञ्चेन। ननु कृतनित्यमांसवर्जनसङ्कल्पेन निमन्त्रितेन गृहस्थेन मांसादिकं भक्ष्यं न वेति चेत्, उच्यते। कृच्छ्रचान्द्रायणादिकर्त्तुरिव कृतनित्यमांसवर्जनसङ्कल्पस्य निमन्त्रणाङ्गीकरणमेव श्रेयः। स्वीकारानन्तरमपक्रमण एव दोषस्य निर्णी-

त्वात्। यदि कृतनित्यमांसवर्जनसङ्कल्पेन गृहस्थेनापि श्राद्धादिना निमन्त्रणं स्वीकृतं। तदा यतिब्राह्मणकश्राद्धवत् मांसरहितं श्राद्धं यजमानेन कार्य्यम्।

ननु यतेः प्रायश्चित्ताधिकाराभावात् तद्ब्राह्मणकश्राद्धे फलाधिक्याच्च तथा निर्णीतं। कृतनित्यमांसवर्जनेन गृहस्थेन तु भक्षणस्य क्रत्वर्थत्वात् भक्षणनिवृत्तिनियमस्य पुरुषार्थत्वात् प्राबल्येन वा यज्ञार्थत्वात् इति न्यायेन भक्षयित्वा पश्चात् प्रायश्चित्तं कार्यम्, यथा मखे दीक्षितानामेव ऋत्विजां पृष्ठ्यषडहसमाप्तौ संस्थिते पृष्ठ्यषडहे मध्वाशयेत् इति कर्माङ्गं मधु भक्षयित्वा पश्चात् प्रायश्चित्तं तद्वदिति चेत् न।

भक्षयेत् प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत्॥

इति यमोक्तेर्वर्जनीयमेव मांसम्। वर्जनदोषस्य त्वनियमपरत्वात् मधुमांसयोः फलसम्बन्धेन विहितत्वात्।

हविष्यान्नेन वै मासं पायसेन तु वत्सरम्।

इति योगियाज्ञवल्क्योक्तेः काम्यभोजिन्यायेन मांसरहितश्राद्धस्याप्यङ्गीकरणात्। शालग्रामशिलाब्राह्मणकश्राद्धे तु मांसं देयमिति केचिद्वदन्ति। युक्तिं चाहुः। शालग्रामशिलाचक्रस्य भक्षणप्रसङ्गाभावात् विष्णवे मत्स्या न देया इति वाक्याभावाच्च इति, तदस्मभ्यं न रोचते भक्षणाभावादिति यदुक्तं स हेतुः पूजायामपि वक्तव्यः स्यात्। तथापि तैर्यदुक्तं शिलाचक्रस्याहवनीयवत् प्रतिपत्तिस्थानीयत्वं न देवत्वमिति तदपि न सारम्, श्राद्धस्य याग-

तमुक्त्वा ब्राह्मणस्याहवनीयस्थानीया इति तैरेवोक्तम्। तथा च सति यतिब्रह्मचारिब्राह्मणकश्राद्धे तयोरपि प्रतिपत्तिस्थानत्वेन सन्न्यासित्वाद्यभावात् मांसदानं प्रसक्तं, किमिति तैर्नाङ्गीकृतम्। किञ्च ब्रह्मन्मते श्राद्धस्य नैव यागरूपत्वमित्युक्तं। वाक्याभावादिति यो हेतुर्दत्तः सोऽपि नादरणीयः।

ब्रह्मविष्णुशिवानाञ्च कलौ मांसेन चार्चनम्।
राज्ञः श्रियं कुलं हन्ति तस्मात् तत्परिवर्जयेत्॥

एवं यत्यादिब्राह्मणकश्राद्ध इव शालग्रामशिलाचक्रब्राह्मणकश्राद्धे गयाधिकफलोक्तेर्मांसाभावे दोषानुक्तेश्च फलसम्बन्धविहितमांसदानमनुचित इत्यस्माकं सिद्धान्तः। कर्त्तुः पर्वमांसाशनादिकं प्रतिपत्तिकर्मावसरेण[१] लेख्यं॥०॥

अथ श्राद्धोच्छिष्टदानविचारः।

आपस्तम्बः,— न चातद्गुणायोच्छिष्टं दद्युः। अतद्गुणाय श्राद्धभोक्तृगुणरहिताय।

मनुः,— श्राद्धं कृत्वा य उच्छिष्टं वृषलाय प्रयच्छति।
स मूढो नरकं याति कालसूत्रमवाक्शिराः॥
श्राद्धभोजी समुच्छिष्टं वृषलाय ददादि चेत्।
स मूढोऽनिष्कृतिः प्राह प्रायश्चित्तेन शुध्यति॥

प्रायश्चित्तं विना तस्य निष्कृतिर्नास्तीति प्राह इत्यर्थः।

ब्रह्माण्डे,—स्त्रीशूद्रायानुपेताय श्राद्धोच्छिष्टं न दापयेत्।
यो दद्याद्रागमोहाभ्यां तद्गच्छति वै पितॄन्॥

---

(१) •कर्मावसरे।

तस्मान्नदेयमुच्छिष्टमन्नाद[१] श्राद्धकर्मणि।
अन्यत्र दधिसर्पिर्भ्यां शिष्याय च सुताय च॥

अन्यत्र दधिसर्पिर्भ्यामिति दधिसर्पिर्व्यतिरिक्तं उच्छिष्टं न कस्मैचिदपि दातव्यम्। दधिसर्पिषोस्तु शिष्यपुत्रयोरपि श्राद्धभोक्तृगुणोपेतयोरभ्यनुज्ञा इति कल्पतरुकाराः॥०॥

अथ जपविधिः।

कात्यायनः,—

"अश्नत्सु[२] जपेत् व्याहृतिपूर्विकां गायत्रीं सप्रणवां सकृत्तिर्वा। रक्षोघ्नान् पितृमन्त्रान् पुरुषसूक्तमन्यानि च पवित्राणि च"। रक्षोघ्ना. कृणुष्वपाद इत्याद्या ऋचः, पितृमन्त्रा उदीरितामवर इत्यादय, पवित्राणि शतरुद्रीयादीनि।

बौधायन,—

रक्षोघ्नानि च सामानि स्वधावन्ति यजूंषि च।
मध्वोर्चोत्य[३]पवित्राणि श्राद्धकाले पठेच्छनैः॥

मनु',—स्वाध्याय श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणानि खिलानि च॥

खिलानि हरिवंशादीनि।

मात्स्ये,—ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणि विविधानि च।
इन्द्रेशसोमसूक्तानि पावनानि स्वशक्तितः॥
बृहद्रथन्तरे तद्वज्ज्येष्ठसामसुरौरवः।

(१) अन्नाद्य। (२) अश्नत्सुजपेत्।
(३) मध्वर्चाथ।

तथैव शान्तिकाध्याय मधुब्राह्मणमेव च ॥

मण्डलब्राह्मणं तद्वत् प्रीतिकारि च यत्पुनः ।

विप्राणामात्मनश्चैव तत्सर्वं समुदीरयेत् ॥

ब्राह्मे,—

वीणावेणुध्वनिं वाद्य विप्रेभ्यस्तु निवेदयेत् ॥०॥

अथ पिण्डविधिः ।

ब्राह्मे,— तत्र दक्षिणपूर्वस्यां कार्य्या वेदिस्तथा दिशि ।

हस्तमात्रा[१] श्राद्धभूमिश्चतुरङ्गुलमुच्छ्रिता ॥

तथा,—

मध्वाज्यशालिसंयुक्तं सर्वव्यंजनसंयुतम् ।

उष्णमादाय पिण्डन्तु कृत्वा विल्वफलोपमम् ।

दद्यात्पितामहादिभ्यो दर्भमूलाद्यथाक्रमम् ।

तथा,—

दद्यात् क्रमेण वासांसि श्वेतवस्त्रभवा दशाः ।

गते वयसि वृद्धानि स्वानि लोमान्यथापि वा ॥

क्षौमं सूत्रं नवं दद्यात् चीनं[२] कार्पासमेव च ।

कृष्णानि नीलरक्तानिकौशेयानि विवर्जयेत् ॥

वायवीये,—

पत्रोर्णपट्टसूत्रञ्च कौशेयञ्च विवर्ज्जयेत् ।

वर्ज्जयेच्च दशां प्राज्ञो यद्यप्याहतजा[३] भवेत् ॥

---

(१) हस्तमात्रार्द्रभूमिश्च ।　　(२) मार्गं ।　　(३) यद्यप्यहतजा ।

अत्र दशावर्ज्जनं श्वेतवस्त्रदशाव्यतिरिक्तविषयम्। "श्वेतवस्त्रभवा" इति-देवलेन श्राद्धोक्तेः।

पित्रादिस्वरूपञ्च मनुः,—

वसून् वदन्ति च पितॄन् रुद्रांश्चैव पितामहान्।
प्रपितामहान् तथादित्यान् श्रुतिरेषा सनातनी॥

याज्ञवल्क्यः,—

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः॥

इत्यादिवाक्येभ्यो यद्यपि श्राद्धे वस्वादीनां देवतात्वं प्रतीयते। तथापि "अमुकसगोत्र एतत्तुभ्यमस्तु" इत्यादिवाक्येभ्यः पित्रे पितामहाय प्रपितामहाय इत्यादि श्रुतेश्च गोत्रनामसम्बन्धविशेषकीर्त्तनेन स्वजनकादीनां चतुर्थ्यन्तेन श्रवणात् देवतात्वमिति अतएव वस्वादिरूपेण ध्येयाः। "य एवं विद्वान् पितॄन् यजते" इति पैठीनसुक्तेः।

मनुविष्णू,—

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः॥
उच्छेषणं भूमिगतमजिह्मस्याशठस्य च।
दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते॥

पित्र्ये पितृकर्मणि। कुलयोषितां त्यागिनामकरणेऽपि कुलस्त्रीत्यागवतां। [१]पचस्यमन्नं असंस्कृतप्रमीतानां। भूगतमुच्छिष्टं दासवर्गस्य।

(१) पाचस्यमन्न।

हारीतः,—

आयुर्दः प्रथमः पिण्डो द्वितीयः पुत्रदः स्मृतः ।
षट्‌ऋद्धिप्रदस्तृतीयो वै तस्मान्मध्यममाशयेत् ॥
या पत्नी पुत्रकामा स्यात् मध्यमं पिण्डमश्नीयात् ।
प्राजापत्येन विधिना स तस्मात् पुत्रदः स्मृतः ॥

"प्राजापत्योविधिरपां लौषधीनां रसं प्राश्नायनीभृतं गर्भं धत्स्व" इति मध्यमं पिण्डं पत्न्यै प्रयच्छति ।

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।

यथेह पुरुषोऽसदिति तं पत्नी प्राश्नाति इति आपस्तम्बोक्तेः।

मनुः,— एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम् ।
गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् ॥
पिण्डनिर्वपणं केचित् पुरस्तादेव कुर्वते ।
वयोभिः खादयन्त्येतान् प्रक्षिपन्त्यनलेऽप्सु वा ॥
पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डमद्यात् सम्यक्सुतार्थिनी ॥
आयुष्मन्तं सुतं विद्यात् यशोविद्यासमन्वितम् ।
धनवन्तं प्रजावन्तं धार्मिकं सात्त्विकं तथा ॥

प्रक्षिपन्तीत्यादि पूर्वोक्तजलानिलयोरनुवादः पक्षिण्यादिविधानार्थः।

वृहस्पतिः,—

अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा ।
तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति ॥

तं मध्यमं पिण्डं ।

वायवीये,—प्रार्थयन् दीर्घमायुश्च वायसेभ्यः प्रयच्छति ।

इत्युक्तत्वात् मनुक्तपक्षिपदं वायसपरम् ।

दक्षिणा श्राद्धे,—

सुवर्णरूप्यपात्राणि मनोज्ञानि शुभानि च ।

हस्त्यश्वरथयानानि समृद्धानि गृहाणि च ॥

उपानद्‌पादुकाछत्रचामराण्यजिनानि च ।

यज्ञेषु दक्षिणां पूर्णामिति सश्चिन्तयन् ददेत् ॥

दरिद्रोऽपि यथाशक्ति दद्याद्विप्रेषु दक्षिणाम् ।

बृहस्पतिः,—

हतमश्रोत्रियं श्राद्धं हता यज्ञास्त्वदक्षिणाः ।

तस्मात्पणं काकिनीं वा फलं पुष्पमथापि वा ॥

प्रदद्यात् दक्षिणां यज्ञे तया समफलो भवेत् ॥

ननु,— यतिब्राह्मणकश्राद्धे कथं दक्षिणादानं,

क्षेत्रं गावो हिरण्यञ्च यतेर्यस्य प्रतिग्रहः ।

तादृशं कल्मषं दृष्ट्वा प्रेताशौचं समाचरेत् ॥

इति यतेः प्रतिग्रहाधिकाराभावात् इति चेत् सत्यं ।

श्राद्धदक्षिणायां सुवर्णं रजतं वा न नियम्यते । तस्मात् फलादिदानस्य श्रद्धागुणसम्पादकत्वात् हरीतक्यादिफलमात्रस्य आर्द्रकमूलस्य कौपीनयोग्यवस्त्रस्य वा दाने प्रतिग्रहे च न कश्चित् विरोधः । "अघोराः पितरो नः सन्तु, दातारो नो हि वर्द्धन्तां," इत्याशीर्वादास्तु नियमेन श्राद्धाङ्गत्वेन आमन्त्रणस्वीकारविधिनैव तेषां स्वीकृता इति । आशीर्वादाकरणस्य पुरुषार्थत्वेन दुर्बलत्वात्

आशीर्वादस्य फलवर्धनेन बलवत्त्वात् नियुक्तैर्यतिभिरपि नियमेनाशीर्वादाः कार्य्या एव। इति साम्प्रदायिकाः। इति॥

अथ श्राद्धोत्तरकर्म्म।

देवलः,—निवृत्ते पितृमेधे तु दीर्घं प्रच्छाद्य पाणिना।
आचम्य हस्तौ प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत्॥
ततो ज्ञातिषु तृप्तेषु स्वान् भृत्यान् प्रतिपूजयेत्।
एकोद्दिष्टे तु शेषं तत् ब्राह्मणेभ्यः समुत्सृजेत्॥
ततः स्वयं तद्भुञ्जीत पुनर्भोजनवर्जनम्॥

प्रच्छाद्य, निर्वाप्य।

यमः,— ज्ञातिभ्यः सत्कृतं दत्वा बान्धवानपि भोजयेत्।

बृहस्पतिः,—
एवं देवान् पितॄन् तांश्च तर्पयित्वा विधानतः।
पुत्रभृत्यादिसहितो गृहस्थो भोक्तुमर्हति॥
श्रोत्रिया भोजनीयाः स्युः नव सप्त त्रयोदश।
ज्ञातयो बान्धवा निःस्वास्तथैवातिथयः परे॥
प्रदद्यात् दक्षिणां तेषां सर्व्वेषामनुरूपतः।

शातातपः,— शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम्।
इष्टैः सार्द्धं तु विधिवत् बुद्धिमान् सुसमाहितः॥

ब्राह्मे,— भगिन्यो बान्धवाः पूज्याः श्राद्धेषु च सदैव हि।
वन्दिमागधसूताश्च तौर्य्यत्रिकविदस्तथा॥
अलब्धलाभाः श्राद्धेषु नाशयन्ति महद्यशः।
तस्मात्तेऽपि विभक्तव्याः सकलश्च विभज्य च।

आपस्तम्बः,—

"सर्वतः समुपादाय ग्रासावरार्द्धं प्राश्नीयात् यथोक्तं"। ग्रासावरार्द्धं ग्रासादन्यूनं। यथोक्तं गृह्योक्तं।

चतुर्थादिनवश्राद्धादिषु न शेषभोजनम्।
न च श्राद्धेषु यच्छिष्टं गृहे पर्य्युषितञ्च यत्॥
दम्पत्योर्भुक्तशिष्टञ्च न भुञ्जीत कदाचन॥

इति विज्ञानेश्वरोद्धृतोक्तेः।

वशिष्ठः,— श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनक्षयात्।
श्योतन्ते वै सुधाधारास्ताः पिबन्त्यकृतोदकाः॥
उच्छिष्टं न प्रमृज्याद्धि यावन्नास्तमितो रविः।
क्षीरधारास्ततो यान्त्यक्षयाः सञ्चरभागिनः॥

श्योतन्ते क्षरन्ति। नोद्वासनीयानि भूमिष्ठोच्छिष्टानि इत्यर्थः। "सञ्चरभागिनोऽन्यमेदन्तमन्नं सञ्चरति यत् तत् सञ्चरः, तत् ये भुञ्जते दासादयः" इति कल्पतरुकाराः।

ब्राह्मे,— अस्तं याते ततः सूर्य्ये विप्रः[१] पात्राणि चाम्भसि।
निक्षिपेत् प्रयतो भूत्वा सर्वाण्यधोमुखान्यपि॥
द्वितीयेऽहनि सर्वेषां भाण्डानां चालनं तथा।
अनन्ता जायते तृप्तिः पितॄणां येन सर्वदा॥

अथ यजमानस्य ब्राह्मणानां च नियमाः।

मनुदेवलबृहस्पतयः,—

तां निशां ब्रह्मचारी स्यात्श्राद्धभोक्ता तथैव च।

(१) विप्रं।

अन्यथा वर्त्तमानौ तौ स्यातां नरकगामिनौ ॥

तथा,—

तस्मात् प्रदाता भोक्ता च श्राद्धे नियमितो भवेत् ।

अर्चकस्यार्चितस्योभौ भवेतां नाकगामिनौ ॥

वशिष्ठवृद्धशातातपौ,—

श्राद्धं दत्वा च भुक्त्वा च मैथुनं यः प्रयच्छति ।

भवन्ति पितरस्तस्य तं मासं रेतसो भुजः ॥

यस्ततो जायते गर्भो दत्वा भुक्त्वा च पैतृकम् ।

न च विद्यामवाप्नोति क्षीणायुश्चैव जायते ॥

मात्स्ये,—

पुनर्भोजनमध्वानं द्यूतमायासमैथुनम् ।

श्राद्धकृत् श्राद्धभोक्तैव सर्वमेतत् विवर्ज्जयेत् ॥

स्वाध्यायं कलहञ्चैव दिवास्वप्नञ्च सर्वदा ।

अध्वगमनमाक्रोशोपरि न कार्य्यम् । "अध्वगमनमाक्रोशपूरणं" इति हारीतोक्तेः । ऋतुकालप्राप्तमपि मैथुनं न कार्य्यम् । "ऋतुस्नातामहोरात्रं परिहरेत्" इति शङ्खलिखितोक्तेः ।

निगमः,— "न क्रुधेयात्" इति ॥ ० ॥

श्राद्धकर्त्तुः परगृहभोजनादिनिषेधः ।

दन्तधावनताम्बूलं चौराभ्यङ्गमभोजनम् ।

रत्यौषधपरान्नञ्च श्राद्धकर्त्ता विवर्ज्जयेत् ॥

श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च विह्वलाः ।

पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः ॥

ननु "सर्वतः समुपादाय" इति श्राद्धशेषपक्वद्रव्यमात्रस्य कर्तृ-भोजनं प्रतिपत्तित्वेनोक्तम् ।

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।

इति याज्ञवल्क्येनाप्युक्तं । तत्र श्राद्धशेषस्य काकादिस्पर्शे शेष-भक्षणं कार्य्यं न वेति चेत्? उच्यते । "पुरोडाशकपालेन तुषानुपवपति" इतिवत् परप्रयुक्तद्रव्योपजीवित्वेन अप्रयोजकत्वात् द्वितीयानिर्द्देशेन प्रतिपत्तित्वाच्च काकादिस्पृष्टशेषस्य भक्षणलोप एव। तद्वैगुण्यसमाधानार्थं विष्णुस्मरणमेव कार्य्यम् ।

ननु अमावास्यादिपर्वसु मांसभोजनस्य निषिद्धत्वात् सर्वशेष-भक्षणस्य प्रतिपत्तित्वेनावश्यकत्वात् कर्त्ता भक्ष्यं वा न वेति? सन्देह-प्रतिपत्तिकर्मापेक्षया "अर्थकर्म्मणोवलवत्त्वमिति" वलावलाधिकरणे निर्णयात् । श्राद्धशेषमांसभक्षणस्य प्रतिपत्तिकर्म्मत्वेन दुर्बलत्वात् सर्वमांसभक्षणनिषेधस्य अर्थकर्मत्वेन वलवत्त्वमिति शेषमांसभक्षणं न कार्य्यं, इति प्राप्ते ब्रूमः,—

पर्वनिषेधस्य पुरुषार्थत्वात् शेषभक्षणविधेस्तु क्रत्वर्थत्वात् पुरुषार्थ-क्रत्वर्थयोः क्रत्वर्थस्य वलवत्त्वात् श्राद्धशेषमांसं साग्निकैर्निरग्निकैश्च भक्षणीयमेव । "मा हिंस्यात् सर्वाणि भूतानि" इत्यादिनिषेधस्य "अग्निषोमीयं पशुमालभेत" इत्यादिना विहितेतरविषयत्वेन निर्णयवत् "[१]केवलपिण्डदाता मांसं न भक्षणीयं" मांसदाना-भावात्, इति सम्प्रदायविदः ।

---

(१) "केवलपिण्डदानविपक्षे तु मांसं न भक्षणीयं" ।

नतु तर्हि महालयपचश्राद्धादौ सर्वश्राद्धपूर्वदिनेषु "निरामिषं सकृद्भुक्ता" इत्युक्तस्य निरामिषभोजनस्य श्राद्धाङ्गशेषमांसभचणस्य च कथं व्यवस्थेति चेत्? उच्यते।

उपयुक्तस्य संस्कारादुपयोक्ष्यसंस्क्रिया।

गरीयसी प्रशान्तिस्तु[१] तेन दृष्टं प्रयोजनम्॥

इति मैत्रावरुणदण्डाधिकरणन्यायेन निरामिषभोजनमेव कार्य्यं, विहितनिरामिषभोजनात् कर्त्तृसंस्कारात्[२] वा उपयोच्यमाण-संस्कारात् श्राद्धशेषभचणस्य उपयुक्तसंस्कारत्वेन दुर्बलत्वात्। कृत-नित्यमांसवर्ज्जनसङ्कल्पेन कर्त्रा शेषमांसं भक्ष्यं न वेति चेत्? उच्यते। श्राद्धे मांसदानं काम्यमेवेति कृतमांसवर्जनसङ्कल्पेन मांसं न देयम्। यदि भ्रान्त्यादिना श्राद्धे मांसं दत्तं स्यात् तदा [३]"पुरुषार्थसमा-सक्तेः काम्यं नित्यस्य वाधकं" इति न्यायेन क्रत्वर्थमवाधेन गोदोह-प्रवेशवत् सङ्कल्पस्य वलवत्त्वाच्च मांसं वर्ज्यम्। किञ्च श्राद्धशेषमांसं भचयेत् इत्याहृत्यविधिरपि नास्ति।

ननु "सर्वतः समुपादाय" इति सर्वपदस्य का गतिरिति चेत्? उच्यते। सर्वपदस्य सर्वनामत्वेन विशेषरूपेण उपस्थापकत्वेऽपि मांसस्य काम्यत्वेन नियतबुद्ध्यारूढत्वाभावात् मांसातिरिक्तहविः-प्राशने प्रतिपत्तिसम्भवात्।

"ज्ञातिमार्यं प्रकल्पयेत्" इति मनूक्त्या मांसस्य ज्ञातिभोजनादौ

---

(१) प्रशान्तस्य। (२) कर्त्तृसंस्कारार्थात्।

(३) पुरुषार्थे समाधत्ते।

ननु,— अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः।

इत्यादि ब्रह्मवचनं, "वैयाघ्रपद्यगोत्राय" इत्यादि वचनञ्च कथं सङ्गच्छत इति चेत्, उच्यते। तत्र धर्म्मवाचिगोत्रपदस्य व्यक्तौ लक्षणा। यद्वा मध्यपदलोपिसमासेन सकारस्य परित्यागः। तथा इति देशान्तरीयसकाररहितप्रयोगोऽपि कथञ्चित् सङ्गच्छते।

गोभिलः,—

> गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि।
> गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता चैवं न मुह्यति॥
> सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्म्मणि।
> पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता॥
> शर्म्मन्नर्घादिके कार्य्यं शर्मा तर्पणकर्म्मणि।
> शर्म्मणोऽक्षय्यकालेऽपि पितॄणां दत्तमक्षयम्॥

तत्र ब्राह्मणादिचतुर्वर्णानां शर्म्मान्तत्वादिविचारः।

यमः:— शर्मा देवश्च विप्रस्य वर्म्मा राजा च भूभृतः।
> गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्॥

तथा च ब्राह्मणस्य नामान्ते शर्मपदप्रयोगो देवपदप्रयोगो वा इति विकल्पः। एवं क्षत्रियस्य वर्म्मा राजेति। वैश्यस्य गुप्तो दत्त इति। शूद्रस्य दास इत्येव। नात्र विकल्पः,

> शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य वै।
> वैश्यस्य गुप्तसंयुक्तं दासान्तं शूद्रजन्मनः॥

इति वाक्यान्तरादिति केचित्। वस्तुतस्तु ब्राह्मणानां पुरुषनाम्नः शर्म्मान्तत्वं, स्त्रीनाम्नो देव्यन्तत्वं। एवं क्षत्रियवैश्ययोरपि व्यवस्थितो-

विकल्पः। तथा च ब्राह्मणस्य अमुकशर्म्मा अमुका देवीति प्रयोगः। क्षत्रियस्य अमुकवर्म्मा अमुकराज्ञीति प्रयोगः। वैश्यस्य अमुकगुप्तोऽमुका दत्तीति प्रयोगः। शूद्रस्य तु अमुको दासोऽमुका दासीति व्यवस्थेति वदामः।

यत्तु अमुकदासशर्म्मा इति ब्राह्मणैरपि प्रयुज्यते, तत्र दास-इति दानपात्रत्वसूचिका लौकिक्येव संज्ञा, न शास्त्रीया। "दासो-ऽस्त्री दानपात्रे" इत्यादिविश्वप्रकाशादिकोषात्। एवं करदत्त-धरादिसंज्ञाः कुलविशेषेषु ज्ञेयाः। एवं च देवशर्म्मा इति यत् कुलविशेषे प्रयुज्यते। तत्र देवपदस्य देवतुल्यत्वप्रतिपादकत्वेन लौकिकसंज्ञात्वमिति न कश्चिद्विरोधः।

इति तिथिनिर्णयः।

अथ नक्षत्राणां तत्र कर्त्तव्यविशेषाणां च निर्णयः।

सम्पूर्णतिथिवत् सम्पूर्णनक्षत्रे न सन्देहः।

खण्डनक्षत्रे तु विष्णुधर्मोत्तरे,—

उपोषितव्यं नक्षत्रं यस्मिन्नस्तमितो(१) रविः।
युज्यते यत्र वा राम निशीथे शशिना सह॥ इति

अस्तमययोगो निशीथयोगश्च इत्युभयमुक्तं। तत्र अस्तमय-योगोमुख्यः कल्पः। निशीथयोगोऽनुकल्पः। तत्रोभयत्र योगोऽति-प्रशस्तः। यदा तु पूर्व्वेद्युः केवलनिशीथयोगः, परेद्युः केवलास्तमय-योगः, तदा परेद्युरेवोपवासः। अस्तमययोगस्य मुख्यत्वात् प्रातः-

(१) यस्तमियाद्रवि'।

प्रतिपत्तेर्यथाकथञ्चिन्निर्वाहात् कृतमांसवर्जनसङ्कल्पेन मांसं वर्ज्यमेव। अत एव विज्ञानेश्वरैः,— "यजमानस्य मांसे तु यथारुचि" इति यदुक्तं, तेनैव ज्ञायते कृतवर्जनसङ्कल्पेन त्याज्यं अन्येन भक्ष्यमिति।

एकादश्युपवासादौ तु "उपवासो यदेति" एकादशीप्रकरण लिखितवचनादाऽर्जनसमयवदाघ्राणमात्रप्रतिपत्तिरिति ॥ ० ॥

अथ श्राद्धादौ[१] गोत्रनामपदाद्युच्चारणविचारः।

पारस्करप्रचेतसौ,—

अर्घ्यदानेऽन्यसङ्कल्पे[२] पिण्डदाने तथा क्षये।
गोत्रसम्बन्धनामानि यथावत् प्रतिपादयेत् ॥

विष्णुः,— "नामगोत्राभ्यामुदङ्मुखेषु" इति।

ब्राह्मे,— प्रदक्षिणञ्च निर्म्रज्यात् गोत्रनामानुमन्त्रितम्।

छन्दोगपरिशिष्टे,—

गोत्रनामभिरामन्त्र्य पितृनर्घ्यं प्रदापयेत्।

शङ्खलिखितौ,— सव्येन पाणिना दक्षिणं पाणिमुपसमाधाय एकैकं त्रिभिरामन्त्र्य श्रावयेतत् इति। त्रिभिः गोत्रसम्बन्धनामभिरिति। एवमन्यान्यपि बहूनि वाक्यानि सन्तीति। आदौ नामप्रयोगो यद्वा गोत्रप्रयोग इति सन्देहे,

नामगोत्रे समुच्चार्य्य अथवा गोत्रनामनी।

इति विकल्प इति केचित्। [३]वस्तुतस्तु नागृहीतविशेषणे

(१) श्राद्धादिषु।
(२) ऽन्नसंकल्पे।
(३) यद्वस्तु।

विशेष्ये बुद्धिरिति न्यायेन विशेषणस्य पूर्वपाठसिद्धेः गोत्रस्यादौ प्रयोग एवेति, समाचारस्तेवमेव बहूनां।

किन्तु,

सम्बोध्य नामगोत्राभ्यां प्रेतकृत्यं दशाह्निकम्।
शेषं समापयेत् सर्वं गोत्रसम्बन्धपूर्वकम्॥

इति स्मृतेः, प्रेतकृत्ये पश्चात् गोत्रप्रयोगः। सर्वेषां दशाह्निकमिति सपिण्डीकरणान्तक्रियोपलक्षणम्। अत्र "सन्ततिर्गोत्रजननकुलानि" इति पर्य्यायपाठात् सा च विशेषरहितेति विशेषलाभाय तदादिभूतपुरुषेण कुशिकादिना स्वपिणावच्छिन्नो गोत्रशब्दार्थः। यद्यप्यनादिसंस्कारे सृष्ट्याद्यभावपक्षे अनादिपुरुषसम्भवः। तथापि कौशिकस्य ये पित्रादयः पूर्वे, ये च तत्पुत्रादयोऽर्वाञ्चः ते सर्वे कौशिकेन गोत्रान्तरेभ्यो व्यावृत्ताः कौशिकोपलक्षितपुत्रपौत्रपरम्परात्वेन गोत्रशब्दाभिधेयाः। एवं च गोत्रशब्दस्य परम्परारूपधर्म्मवाचित्वात्[१] तद्धर्म्मविशिष्टव्यक्तिलाभाय सगोत्र इति। तेनावच्छेदकपुरुषसमानपुत्रपौत्रपरम्पराक इत्येव विशेषणविशेष्यभावात् कौशिकसगोत्र इत्यादिनिर्द्देशो भवति।

अत एव स्मृतिः,—

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि।

"असगोत्रा च या पितुः" इत्यादि।

महाभारते,— पराशरसगोत्रस्य वृद्धस्य सुमहात्मनः।

इत्यादिनिर्द्देशः।

---

(१) परम्पराख्यधर्म्मविशिष्टव्यक्तिलाभाय।

सङ्कल्पकाले नक्षत्रसत्त्वाच्च। यदा दिनद्वयेऽप्यस्तमययोगाभावः, पूर्वेद्युः केवलनिशीथयोगः, तदा पूर्वेद्युरुपवासः। निशीथयोगस्य अनुकल्पत्वेनापि ग्राह्यत्वात्।

यत्रार्द्धरात्रादर्वाक् तु नक्षत्रं प्राप्यते तिथौ।
तन्नक्षत्रव्रतं कुर्यादतीते पारणं भवेत्॥

इति स्मृतेः, व्रतमत्र उपवासः। इति नक्षत्रोपवासनिर्णयः॥०॥

अथ नक्षत्रैकभक्तनक्तविचारः।

नात्र तिथिवन्मध्याह्नप्रदोषव्याप्तिव्यवस्था, किन्तु पूर्वोक्तोपवासवदत्र व्यवस्था।

तथा च स्कान्दे,—

तत्रैवोपवसेदृक्षे यन्निशीथादधो भवेत्।
उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः॥

इति नक्षत्रैकभक्तनिर्णयः॥०॥

अथ तत्र व्रतनिर्णयः।

व्रतादौ उदयव्याप्त्यैव व्यवस्था।

तथा च विष्णुधर्मोत्तरे,—

सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः।
तथा कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्॥

अत्र यद्यपि सूर्योदयकाल एव प्रतीयते, न तु परिमाणविशेषः, तथापि तिथिवत् त्रिमुहूर्त्तव्याप्तिरत्रापि ग्राह्या। तस्याः सर्वसाधारण्येन प्रवृत्तत्वात्।

ननु, तर्हि नक्षत्रैकभक्तनक्तोपवासेष्वपि स न्यायो ग्राह्य इति

चेत्[१]। तेषु कालविशेषस्य प्रातिस्विकत्वेनोक्तेः। यदोभयदिने नक्षत्रस्योदये त्रिमुहूर्त्तव्याप्तिः, तदा व्रतदानयोः पूर्वदिनेऽनुष्ठानम्। सर्वकर्मकालव्याप्तेः। स्वनक्षत्रपूजायाः व्रतान्तर्गतत्वात् व्रतवद्व्यवस्था।

या तु कालमाधवीये उपाकर्मविषये,—

श्रवणं तूत्तरं ग्राह्यं उपाकरणकर्मणि।

इति कारिका। सा बह्वृचविषयैवेति पूर्वमेव निर्णीतम्।

तत्र विचारान्तरं। कर्म द्विविधं। अहोरात्रसाध्यं दिनसाध्यं चेति। तत्रोपवासोऽहोरात्रसाध्य इति न तत्रानुपपत्तिः। एकभक्तनक्तयोरपि अल्पकालनिष्पाद्यभोजनरूपत्वेऽपि तस्मिन्नहोरात्रे भोजनान्तरपरित्यागसहितभोजनस्य एकभक्तादिरूपत्वात् अहोरात्रसाध्यत्वमुपपन्नं। दानव्रतश्राद्धानां अहन्येव कार्य्यत्वाद्दिनसाध्यत्वं। तत्र नक्षत्रे कथमहोरात्रसाध्यत्वं, कथं वा दिनसाध्यत्वं इति चेत्? उच्यते। तल्लक्षणं पारिभाषिकं। तथा च मार्कण्डेयः,—

तन्नक्षत्रमहोरात्रं यस्मिन्नस्तमितो रविः।
यस्मिन्नुदेति सविता तन्नक्षत्रं दिनं भवेत्॥

तथा च उपवासादौ नाक्षत्राहोरात्रो ग्राह्यः। अहोरात्रस्य नाक्षत्रत्वं सूर्य्यास्तमयकाले नक्षत्रव्याप्त्या भवति। दिनस्य तु नाक्षत्रत्वं सूर्य्योदयव्याप्त्येति निर्णयः॥०॥

नक्षत्रे श्राद्धकालनिर्णयः।

बौधायनः,—

सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः।

(१) इति चेत्, न।

वर्द्धमानस्य पक्षस्य हानौ लक्षमयं प्रति ॥ इति।

तथा च तिथिवृद्धिक्षयश्राद्धव्यवस्था ॥०॥

अथ योगनिर्णयः ।

विष्कुम्भादियोगानां उभयदिनव्याप्तित्वे उपवासादिकं पूर्वेद्युः। योगो यदा निशीथमात्रं व्याप्नुयात् तदा तदन्तापेक्षायां पारणस्यासम्भवात्, रात्रौ च पारणस्य निषिद्धत्वात्, "ततोऽहन्येव पारणं" इति पूर्वेद्युरेवोपवासः। दानव्रतयोस्तु उदयत्रिमुहूर्त्तव्याप्तिर्ग्राह्या। श्राद्धे तु कर्मकालव्याप्तिर्ग्राह्या ॥०॥

अथ करणनिर्णयः।

ववादिकरणानां तिथ्यर्द्धपरिमितत्वेन दिनद्वयव्याप्तिसन्देहोऽपि नास्ति। तस्मादुदयेऽस्तमये वा यस्मिन् दिने करणसद्भावः तस्मिन्नेव दिने कर्मानुष्ठानं। यदा तु पूर्वेद्युः सायंसन्ध्यामारभ्य परेद्युः उदयात् प्रागेव करणं समाप्यते। तदा कथमिति चेत्? उच्यते। करणेषु निर्णयस्यानुक्तत्वेऽपि भद्रान्यायो योज्यः।

तथा च भद्राविषये भविष्योत्तरे,—

यस्मिन् दिने भवेद् भद्रा तस्मिन्नहनि भारत।
उपवासस्य नियमं कुर्य्यान्नारी नरोऽपि वा ॥
यदि रात्रौ भवेद्विष्टिरेकभक्तं दिनद्वये।
कार्य्यं येनोपवासः स्यादिति पौराणिको विधिः ॥
प्रहरस्योपरि यदा स्याद्विष्टिः प्रहरद्वयम्।
उपवासस्तदा कार्य्यमेकभक्तं ततोऽन्यथा ॥

| | | |
|---|---|---|
| Muntakhabu t Tawarikh (Text) Fasc 1 15 @ /6 each | Rs 5 | 10 |
| Muntakhabu t Tawarikh (English) Vol I Fasc 1 7 Vol II, Fasc 1 5 and 3 Indexes Vol III Fasc 1 @ /12 each | 12 | 0 |
| Muntakhabu l Lubab (Text) Fasc 1 19 @ /6/ each | 7 | 2 |
| Ma asir Alamgiri (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Nukhbatu l Fikr (Text) Fasc 1 | 0 | 6 |
| Nizami s Khiradnamah i Iskandari (Text) Fasc 1 2 @ /12/ each | 1 | 8 |
| Riyazu s Salatin (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Ditto Ditto (English) Fasc 1 3 | 2 | 4 |
| Tabaqat i Nasiri (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Ditto (English) Fasc 1-14 @ /12/ each | 10 | 8 |
| Ditto Index | 1 | 0 |
| Tarikh i Firuz Shahi of Ziyau d din Barni (Text) Fasc 1 7 @ /6/ each | 2 | 10 |
| Tarikh i Firozshahi of Shams i Siraj Aif (Text Fasc 1 6 @ /6/ each | 2 | 4 |
| Ten Ancient Arabic Poems Fasc 1 2 @ 1/8/ each | 3 | 0 |
| Wis o Ramin (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Zafarnamah Vol I Fasc 1 9 Vol II Fasc 1 8 @ /6/ each | 6 | 6 |
| Tuzuk i Jahangiri (Eng ) Fasc 1 | 0 | 12 |

## ASIATIC SOCIETY S PUBLICATIONS

| | | | |
|---|---|---|---|
| 1 | ASIATIC RESEARCHES Vol VII Vols XI and XVII and Vols XIX and XX @ 10/ each | 50 | 0 |
| 2 | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl ) @ /6/ per No and from 1870 to date @ /8/ per No | | |
| 3 | JOURNAL of the Asiatic Society for 1843 (12) 1844 (12) 1845 (12) 1846 (5) 1847 (12) 1848 (12 1866 7) 1867 (6) 1868 6) 1869 (8 1870 (8) 1871 7 1872 (8 1873 (8) 1874 (8) 1875 (7) 1876 (7) 1877 (8) 1878 8) 1879 (7) 1880 (8 1881 7) 1882 (6) 1883 5) 1884 (6 1885 (6) 1886 (8) 1887 (7) 1888 (7) 1889 (10) 1890 (11) 1891 (7) 1892 (8) 1893 (11) 1894 (8) 1895 (7) 1896 (8) 1897 (8) 1898 (8) 1899 (8) 1900 (7) & 1901 (7) 1902 (9) @ 1/8 per No to Members and @ 2/ per No to Non Members<br>*N B—The figures enclosed in brackets give the number of Nos in each Volume* | | |
| 4 | Centenary Review of the Researches of the Society from 1784–1883 | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan by R B Shaw (Extra No *J A S B* 1878) | 4 | 0 |
| | Theobald s Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No *J A S B* 1868) | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah by E Blyth (Extra No *J A S B* 1875) | 4 | 0 |
| | Introduction to the Maithili Language of North Bihar by G A Grierson Part II Chrestomathy and Vocabulary (Extra No *J A S B* 1882) | 4 | 0 |
| 5 | Anisul Musharrahin | 3 | 0 |
| 6 | Catalogue of Fossil Vertebrata | 3 | 0 |
| 7 | Catalogue of the Library of the Asiatic Society Bengal by W A Bion | 3 | 8 |
| 8 | Inayah a Commentary on the Hidayah Vols II and IV @ 16/ each | 32 | 0 |
| 9 | Jawamiu l ilm ir riyazi 168 pages with 17 plates 4to Part I | 2 | 0 |
| 10 | Khizanatu l ilm | 4 | 0 |
| 11 | Mahabharata Vols III and IV @ 20/ each | 40 | 0 |
| 12 | Moore and Hewitson s Descriptions of New Indian Lepidoptera Parts I III with 8 coloured Plates 4to @ 6/ each | 18 | 0 |
| 13 | Sharaya-ool Islam | 4 | 0 |
| 14 | Tibetan Dictionary by Csoma de Körös | 10 | 0 |
| 15 | Ditto Grammar | 8 | 0 |
| 16 | Kacmiracabdamrta Parts I and II @ 1/8/ | 3 | 0 |
| 17 | A descriptive catalogue of the paintings statues &c in the rooms of the Asiatic Society of Bengal by C R Wilson | 1 | 0 |
| 18 | Memoir on maps illustrating the Ancient Geography of Kaśmir by M A Stein Ph D 3) Extra No 2 of 1899 | 4 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts Fasc 1 29 @ 1/ each | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature by Dr R L Mitra | 5 | 0 |

N B—All Cheques Money Orders &c must be made payable to the Treasurer Asiatic Society only

Books are supplied by V. P P 6-9-03

BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No. 1088.

# GADĀDHARA PADDHATAU KĀLASĀRA

BY

GADĀDHARA RĀJAGURU.

EDITED BY

SADĀÇIVA MIÇRA

OF PURĪ

VOL. I, FASCICULUS VII

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1904.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

No 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS MESSRS LUZAC & CO

46 Great Russell Street, London W C, and Mr Otto Harrassowitz, Bookseller, Leipzig, Germany

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock*

## BIBLIOTHECA INDICA

### *Sanskrit Series*

| | Rs | As |
|---|---|---|
| Advaita Brahma Siddhi (Text) Fasc 1 4 @ /6/ each | 1 | 8 |
| Advaitach nta Kaustubha Fasc 1 | 0 | 6 |
| *Agni Purana (Text) Fasc 4-14 @ /6/ each | 4 | 2 |
| Aitareya Brahmana Vol I Fasc 1 5 and Vol II, Fasc 1 5 Vol III Fasc 1-5 Vol IV Fasc 1 5 @ /6/ | 7 | 8 |
| Anu Bhasyam (Text) Fasc 2 5 @ /6/ each | 1 | 8 |
| Aphorisms of Sandilya (English) Fasc 1 | 0 | 12 |
| Astasahasrika Prajnaparamita (Text) Fasc 1 6 @ /6/ each | 2 | 4 |
| Açvava dyaka (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Avadana Kalpalata (Sans and Tibetan) Vol I Fasc 1-5; Vol II Fasc 1 5 @ 1/ each | 10 | 0 |
| Bāla Bhatt Vol I Fasc 1 | 0 | 6 |
| Baudhayana Srauta Sutra Fasc 1-2 @ /6/ each | 0 | 12 |
| *Bhamati (Text) Fasc 4-8 @ /6/ each | 1 | 14 |
| Bhatta D pika Vol I Fasc 1 4 | 1 | 8 |
| Brhaddevata (Text) Fasc 1 4 @ /6 each | 1 | 8 |
| Brhaddharma Purana (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Bodh caryavatara of Cantidevi Fasc 1-2 | 0 | 12 |
| Catadusani Fasc 1 | 0 | 6 |
| Catalogue of Sanskrit Books and MSS Fasc 1-4 @ 2/ each | 8 | 0 |
| Çatapatha Brahmana Vol I Fasc 1 7 Vol II Fasc 1-2 | 3 | 6 |
| Çatasahasrika prajnaparamita (Text) Part I Fasc 1-6 @ /6/ each | 2 | 4 |
| *Caturvarga Chintamani (Text) Vols II 1 25 III Part I Fasc 1-18 Part II Fasc 1-10 @ /6/ each | 19 | 14 |
| Çlokavart ka (English) Fasc 1 4 | 3 | 0 |
| *Çrauta S tra of Āpastamba (Text) Fasc 4 17 @ /6/ each | 5 | 4 |
| Ditto Çankhayana (Text) Vol I Fasc 1 7 Vol II Fasc 1 4 Vol III Fasc 1-4 @ /6/ each | 5 | 10 |
| Çri Bhashyam (Text) Fasc 1 3 @ /6/ each | 1 | 2 |
| Dan Kr ya Kaumud Fasc 1 2 | 0 | 12 |
| Gadadhara Paddhati Kalasara Vol I Fasc 1 6 | 2 | 4 |
| Kala Madhava (Text) Fasc 1-4 @ /6/ each | 1 | 8 |
| Kala Viveka Fasc 1-6 | 2 | 4 |
| Katantra (Text) Fasc 1-6 @ /12/ each | 4 | 8 |
| Katha Sarit Sagara (English) Fasc 1 14 @ /12/ each | 10 | 8 |
| Kurma Purana (Text) Fasc 1 9 @ /6/ each | 3 | 6 |
| Lalita Vistara (English) Fasc 1-3 @ /12/ each | 2 | 4 |
| Madana Par jata (Text) Fasc 1-11 @ /6/ each | 4 | 2 |
| M 1 1 bhasya prad pōdyōta (Text) Fasc 1 9 & Vol II Fasc 1-11 @ /6/ each | | |
| Manutika Sangraha (Text) Fasc 1 3 @ /6/ each | 7 | 8 |
| Markandēya Purana (English) Fasc 1 8 @ /12 each | 1 | 2 |
| *M mamsa Darçana (Text) Fasc –19 @ /6/ each | 6 | 0 |
| Nyayavartika (Text Fasc 1 6 @ /6 | 4 | 14 |
| * r kta (Text) Vol III Fasc 1 6 Vol IV Fasc 1 8 @ /6/ each | 2 | 4 |
| tracaraj ad lhati Fasc 1 (Text) @ /6/ | 5 | 4 |
| acaraj rad pl Fasc 1-4 | 2 | 10 |
| Nya abi dap ka (Text) | 1 | 8 |
| Ny ya Kus mavali Prakarana (Text Vol I Fasc 1 6 Vol II Fasc 1 3 @ 6 each | 0 | 10 |
| * | 3 | [illegible] |

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No 966, 981, 994, 1026, 1033, 1049, 1088

---

# GADĀDHARA-PADDHATAU

## PRATHAMAṂ KHAṆḌAṂ

### KĀLASĀRAḤ

BY

GADĀDHARA RĀJAGURU

EDITED BY

PAṆḌIT SADĀŚIVA MIŚRA

VOL I

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1904.

# कालसारस्याशुद्धिशुद्धि-निर्घण्टः ।



| अशुद्धि । | शुद्धि । | पृष्ठाङ्क । | पङ्क्त्यङ्क । |
|---|---|---|---|
| तुलशीवंशात् ... | तुलसीवंशात् ... | १ ... | ६ |
| सिद्धान्तशिरमणौ | सिद्धान्तशिरोमणौ | ४२ ... | १८ |
| ध्याह्न .. | मध्याह्न .. | ४७ ... | २२ |
| सह .. | सह ... ... | ४८ ... | १७ |
| पूण्य . | पुण्यं | ५३ ... | २ |
| शुद्धति | शुध्यति .. ... | ५४ ... | १४ |
| प्रतान्तक | प्रतान्तर . .. | ५५ ... | ७ |
| मुख्याकाल .. | मुख्यकाल | ५८ ... | ८ |
| पालकै | पानकै | १०६ ... | ६ |
| अद्राहात्मक | अष्टाब्दात्मक | १११ | २१ |
| दृष्टे ... | दृष्टे . | ११४ ... | १३ |
| विश्वामित्र | अनावश्यकोऽयमत्र . | १२० ... | १६ |
| कलाकाष्ठ ... | कलाकाष्ठा इति | १२८ | १९ |
| मद्दीनं ... | मद्दिनं . | १४० | १४ |
| द्वादशी | द्वादश्या .. | १५० | ३ |
| त्रिमुहूर्त्तव्यामेव | त्रिमुहूर्त्तव्याप्येव | १५६ .. | २० |
| अन्तवेध | अन्तवेध . . | १६३ | २२ |
| पुजा . .. | पूजा ... . | १६६ ... | ११ |
| चतुर्दश्यप्यमावास्या | चतुर्दश्यमावास्या | १८२ | १६ |
| गण्डिचा | गुण्डिचा ... . | १८७ .. | १० |

| अशुद्धिः। | शुद्धिः। | पृष्ठाङ्कः। | पङ्क्त्यङ्कः। |
|---|---|---|---|
| दोलयात्रा | दोलायात्रा | १८६ | २१ |
| श्राद्धभूक् | श्राद्धभुक् | १६५ | २ |
| मरुद्देशस्थः | मरुदेशस्थः | २०० | १३ |
| पापिटकस्य | पापिष्ठकस्य | २०० | २२ |
| विद्वराह | विड्वराह | २०१ | ७ |
| दुर्वाभिः | दूर्वाभिः | २०७ | ११ |
| दुर्वा | दूर्वा | २०७ | १५ |
| एवमित्यारभ्याक्रियतइत्यन्तं | अनावश्यकोऽयमत्र | २०६ | १४ |
| द्वादशेहनि | द्वादशेऽहनि | २१८ | ११ |
| वराजेन्द्र | राजेन्द्र | २१८ | ११ |
| भ्रणहत्या | भ्रूणहत्या | २२२ | १५ |
| दक्षिणात्य | दाक्षिणात्य | २२४ | २२ |
| प्रतिप्रसवाङ्मूलं | प्रतिप्रसववाङ्मूल | २२६ | २२ |
| दित्येवेत्य | दित्यवेत्य | २३३ | १७ |
| दित्येवेत्य | दित्यवेत्य | २३३ | २१ |
| इत्यथः | इत्यर्थः | २३६ | १८ |
| केवलाधिमासर्षे | केवलाधिमासवर्षे | २३७ | ८ |
| वर्ज्याविर्ज्यानि | वर्ज्यावर्ज्यानि | २३७ | १६ |
| निस्फलाः | निष्फलाः | २३८ | १ |
| तस्करतो | तस्करतो | २४८ | ३ |
| ज्योतिवचनेन | ज्योतिर्वचनेन | २४८ | ६ |
| मायद्य | मागध्य | २४८ | १४ |
| गयाश्राद्ध | गयाश्राद्धं | २५० | २१ |
| षष्ठाह | षष्ठा | २६० | ५ |
| याज्ञवल्कीय | याज्ञवल्कीय | २६३ | ८ |

| अशुद्धिः । | शुद्धिः । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| प्रेयान | प्रेयान् | २६३ | ११ |
| त्रिरात्रं | त्रिरात्रं | २६६ | ६ |
| दिवसैः | दिवसैः | ३०२ | ७ |
| त्रिरात्रोशौचं | त्रिरात्राशौचं | ३१० | २० |
| याज्ञवल्क्यः | याज्ञवल्क्यः | ३१२ | २१ |
| दुश्चिकित्से | दुश्चिकित्से | ३१७ | १७ |
| धानादि | धनादि | ३२० | १२ |
| यमायमादीनां | यमार्यमादीनां | ३६४ | १० |
| प्रतिग्रहीत्वऽपि | प्रतिग्रहीतृत्वेऽपि | ३६५ | १३ |
| अपराह्नः | अपराह्णः | ३८० | ११ |
| वाधित्वा | वाधित्वा | ३८९ | ११ |
| तदनुष्ठेयं | तदनुष्ठेयं | ३९८ | १३ |
| यत्क्रमार्थं | यत्कर्मार्थं | ४०२ | २२ |
| आहिताग्निं | आहिताग्नेः | ४०५ | २२ |
| प्रतिभावमापन्ना | प्रतभावमापन्ना | ४०७ | १ |
| इष्टं ... | इष्टं | ४२६ | ६ |
| सपिण्डीकरणावचारः | सपिण्डीकरणविचारः | ४२९ | १७ |
| अश्वमेघफल | अश्वमेघफलं | ४३० | ५ |
| सविशेषं | सविशेषं | ४३१ | १५ |
| अव्यन्तं | अत्यन्तं | ४३८ | ३ |
| ह्रासस्यादल्पत्वात् | ह्रासस्याल्पत्वात् | ४३८ | २१ |
| इत्युक्ते | इत्युक्तेः | ४४१ | २१ |
| मध्यपङ्क्ति | माध्यपङ्क्ति | ४६७ | ११ |
| प्रदापयत् | प्रदापयेत् | ४६८ | १५ |
| कार्यमेव | कार्यमेव | ४७३ | १३ |

| अशुद्धिः । | शुद्धिः । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| मध्याह्रे ... | मध्याह्ने ... | ... ४८० | ... १४ |
| प्रमाणिकोक्तेः ... | प्रामाणिकोक्तेः | ... ४८५ | ... १३ |
| प्रतिषिद्धते ... | प्रतिषिध्यते ... | ... ५०८ | ... ११ |
| दानेवौ ... | दानवौ ... | ... ५१६ | ... १९ |
| वृतं ... ... | वृत्तं ... | ... ५१६ | ... २० |
| सौगाग्यो ... | सौभाग्ये ... | ... ५२९ | ... १४ |
| प्राह्ण ... | प्राह्णः ... | ... ५३१ | ... १२ |
| मधूरत्वात् ... | मधुरत्वात् ... | ... ५४१ | ... ६ |
| तथ ... ... | तथा ... | ... ५४२ | ... १० |
| पार्णिन ... | पाणिना ... | ... ५४९ | ... २ |
| विद्याद्र ... | विद्याद् ... | ... ५५५ | ... १० |
| शान्तिकाध्याय | शान्तिकाध्यायं | ... ५६१ | ... १ |
| शद्धं ... | श्राद्धं ... | ... ५६४ | ... १० |
| वश्यस्य ... | वैश्यस्य ... | ... ५७३ | ... ३ |
| तिष्णु ... | विष्णु ... | ... ५७४ | ... १८ |
| खन्दति ... | स्यन्दति ... | ... ५७९ | ... २ |
| उर्द्ध ... | ऊर्द्धं ... | ... ५८० | ... ४ |
| परदिनस्य ... | परदिनस्य ... | ... ५८० | ... ८ |
| उभयाथा ... | उभयथा ... | ... ५८० | ... १७ |
| चन्द्रर्कग्रहणे ... | चन्द्रार्कग्रहणे | ... ५९० | ... ७ |
| प्रतिपन्मिश्र ... | प्रतिपन्मिश्रा | ... ६०४ | ... १३ |
| प्युद्रत ... | प्युद्धृत ... | ... ६१२ | ... १२ |

# कालसारधृतप्रमाणग्रन्थानां ग्रन्थकर्तॄणाञ्च अनुक्रमणी ।

नामानि | पत्रेषु

नामानि पत्रेषु

नामानि पत्रेषु

नामानि पत्रेषु

नामानि पत्रेषु

नामानि पत्रेषु

नामानि — पत्रेषु

# कालसारस्य विषयानुक्रमणी ।

——:o:——

## अ ।

## ग।



## घ।



## च।



## ज।

## त ।



## द ।



## न ।

## ब।



## भ।



## म।



## य।



## र।

भद्रेति विष्टेः संज्ञान्तरं। उदयादारभ्य यावदस्तमयं विष्टि-सत्तायां नास्त्युपवासे सन्देहः। यदा तु प्रहरमात्रं विष्टिर्नास्ति। तस्योपरि प्रहरत्रयं विष्टिर्भवति। तदा कृत्स्नदिनव्यापिविष्टेरभावे ऽप्येकदेशव्याप्तेः सद्भावात् तस्मिन्नेवदिने उपवासः। अन्यथेत्यनेन एकदेशव्याप्तेरभावो विवक्षितः। तस्मिन् पक्षे समनन्तरातीतव्याख्योक्तं कार्यं। यस्तु भद्राव्रतं सङ्कल्प्य अहोरात्रमुपोषितुं न शक्नुयात्। असौ भद्रायुक्तघटिकासु न भुञ्जीत।

तथा च भविष्योत्तरे,—

प्रातः संपूज्य तामेव ब्राह्मणञ्च स्वशक्तितः।
ततो भुञ्जीत राजेन्द्र यावद्भद्रा न जायते॥
अथवान्तेऽपि भद्रायाः काम्यतोवाग्यतः शुचिः।
न किञ्चित् भक्षयेत् प्राज्ञो यावद्भद्रा प्रवर्त्तते॥ इति।

अह्नः चरमभागे यदा भद्राप्रवेशः। तदानीं एकदेशभद्रा-योगिनोदिनस्य पूजाद्यनर्हत्वात् अशक्तस्य भद्राप्रवेशात् प्रागेव भोजने प्राप्ते सति अभुक्तेन पूजादेरनुष्ठेयत्वात् भद्रारहितेऽपि काले पूजा-दिकं न विरुध्यते। यदा तु भद्राया अन्ते भुङ्क्ते। तदा कर्म्मः कालव्यापिशास्त्रात् भद्रोपेतकाल एव पूजादिकं कर्म्म कार्य्यं। पच-दयेऽपि यदि घटिकासु न किंचित् भक्षयेत्; तावत् भद्रोपवासः पूर्यत-इति यदि ववादिकरणेषु कस्यापि विशेषस्य शास्त्रेणानादृ-तत्वात् भद्रायां कृत्स्नस्य न्यायस्यातिक्रमे, कारणाभावाच्चाद्यं निर्णय-प्रकारः सर्वोऽपि योज्यः। एवं तिथिनक्षत्रयोगकरणानां काल-निर्णयः कृतः।

## ष।



## स।

रविवारादीनां सप्तानां अहोरात्रपरिमितत्वनिर्णयेन सन्देहा-भावात्तद्व्यवस्था न कृता । इति ।

अथ रविसङ्क्रान्तिकालनिर्णयः ।

ज्योतिःशास्त्रे,—

मेषो वृषश्च मिथुनं कर्कटः सिंह ईरितः ।
कन्या तुला वृश्चिकश्च धनुर्मकरकुम्भकौ ॥
मीनश्चेति द्वादशैवं रविसंक्रान्तयो मताः ।

तत्र विशेषान्तरं वा,

अयने विषुवे द्वे च चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥
मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषौ(१) गोलमध्ये ततोऽपराः ॥
धनुर्मिथुनकन्यासु मीने च षडशीतयः ।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता ॥

तासां नैमित्तिकत्वात् स्नानदानादिकमवश्यं कार्य्यं ।

तथा च शातातपः,—

संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥
रविसंक्रमणे पुण्ये न स्नायात् यदि मानवः ।
सप्तजन्मन्यसौ रोगी दुःखभागी च जायते ॥

---

(१) तुल्यामेषे ।

संक्रान्तिकालस्तु देवीपुराणे,—

स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम्।

तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः॥

तत्पराच्छतभागस्तु त्रुटिरित्यभिधीयते।

त्रुटेः सहस्रभागो यः स कालो रविसंक्रमः॥

तत्र विशेषमाह देवलः,—

संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः।

तद्योगतोऽप्यधश्चोर्द्ध्वं त्रिंशन्नाड्यः पवित्रिताः॥

इदं संक्रान्तिपूर्वापरकालीनषष्टिदण्डात्मकतदुपलक्षिताहोरात्र-परि[1]मिततद्दिन एव उपवासस्तैलस्त्रीमांसचौरादिवर्ज्जनं च।

स्नानदानयोस्तु विशेषः, तत्र वृद्धवशिष्ठः,—

अतीतानागते पुण्ये द्वे उदग्दक्षिणायने।

त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृताः॥

वृहस्पतिदेवलशातातपाः,—

अयने विंशतिः पूर्वा मकरे विंशतिः परा।

वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश॥

पुनर्देवलशातातपौ,—

षडशीत्यामतीतायां षष्टिरुक्तास्तु नाडिकाः।

पुण्यायां विष्णुपद्याञ्च प्राक्पश्चादपि षोडश॥

वर्त्तमाने रवाविति शेषः। एतत् सर्वत्र सम्बध्यते। तेन

---

(१) पर।

कर्कटके रवौ[१] वर्त्तमाने पूर्वा विंशतिर्नाड्यः पुण्या इत्यर्थः। उभयत्रेति तुलामेषयोरित्यर्थः, न तु पार्श्वद्वये इति कृत्यकौमुदीकाराः।
वशिष्ठः,— अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया।

उर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयं॥

तथा,— संपूर्णे चेदर्द्धरात्रे रविसंक्रमणं भवेत्।

प्राह्णर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ॥

यस्मिन् दिने अर्द्धरात्रादधः संक्रान्तिः, तद्दिन इत्यर्थः। दिनद्वयं दिनार्द्धद्वयं पूर्वदिनस्य उत्तरार्द्धं परदिनस्य पूर्वार्द्धमित्यर्थः। अर्द्धरात्रादित्यादि पूर्ववाक्यात्।

देवीपुराणे,—

आदौ पुण्यं विजानीयात् यदभिन्ना तिथिर्भवेत्।

अर्द्धरात्रे व्यतीते तु विज्ञेयश्चापरेऽहनि॥

तथा च संक्रान्तिकालीनतिथिर्यदा अभिन्ना पूर्वदिनगामिनी। तर्हि आदौ पूर्वदिने पुण्यं विजानीयात्। अर्थात् तिथिभेदे उत्तरदिने पुण्यं विजानीयात्। एवं संपूर्णार्द्धरात्रे संक्रमणे तत्कालीनतिथिर्यदि पूर्वदिनगामिनी उभयदिनगामिनी वा, उभयथापि पूर्वदिनमध्याह्नादूर्द्ध्वं पुण्यं विजानीयात्। संक्रान्तिकालीनतिथिर्यदि परदिनगामिनी, तर्हि परदिनार्द्धमेव पुण्यं। आदौ पुण्यमिति वाक्यस्य दिनद्वयव्यापितिथिकेऽपि प्रवृत्त्यविशेषात्। अर्द्धरात्रे व्यतीते तु संक्रान्तौ यदि तिथिरेकैव, तदापरेऽह्नि पुण्यं विजानीयात् इत्यर्थः।

---

(१) यर्के।

वृद्धगार्ग्यः,—

यद्यस्तमनवेलायां मकरं याति भास्करः ।

प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥

अर्द्धरात्रे तदूर्द्ध्वं वा संक्रान्तौ दक्षिणायने ।

पूर्व्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥

भविष्योत्तरेऽपि,—

मिथुनात्कर्किसंक्रान्तिर्यदि स्यादंशुमालिनः ।

प्रभाते वा निशीथे वा कुर्य्यादहनि पूर्व्वतः ॥

यद्यप्ययमाचारः कल्पतरुकारैर्न लिखितः, तथापि सर्व्वदेशीय-शिष्टपरिगृहीतत्वात् अस्मद्देशीयैः सर्व्वैरप्यादृत एव ।

ननु,—

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् ।

इति वृद्धवशिष्ठेन सर्व्वस्याह्नः पुण्यत्वमुक्तं । "अयने विंशतिः पूर्व्वाः" इत्यादिषु कालविशेषाणां पुण्यत्वमुक्तं ।

देवलेन तु,—

या याः सन्निहिता नाड्यः तास्ताः पुण्यतमाः स्मृताः ।

इति सन्निहितनाडीनां पुण्यत्वमुक्तं । तत्कथमिदं सर्व्वं सङ्गच्छते ? इति चेदुच्यते । सन्निहितनाडीनां पुण्यतमत्वं, व्यवहितनाडीनां पुण्यतरत्वं, कृत्स्नस्याह्नः पुण्यत्वमिति, वृद्धवशिष्ठदेवलवाक्ययोः पुण्यतमत्वस्य स्पष्टत्वात् । अर्थात् "अयने विंशतिः पूर्व्वाः" इति तद्व्यवहितनाडीनां पुण्यतरत्वं सिद्धं । यथोक्तद्वादशसंक्रान्तीनां यथोक्तपुण्यकालेषु मन्वादिनामभिः प्रत्येकं सप्तधा ।

विशेषो देवीपुराणेऽनुसन्धेयः,—

अयने कोटिगुणितं लक्षं विष्णुपदीफलम् ।
षडशीति सहस्रन्तु षडशीत्यां स्मृतं बुधैः ॥

विषुवे शतसाहस्रमिति ।

ब्राह्मे,— नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतिपातेषु पर्वसु ॥
अहोरात्रोषितं[१] स्नानं श्राद्धं दानं तथा जपम् ।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयं फलम् ॥

इति च उपवास उक्तः, स गृहस्थेतरेषां ।

तथा च स्मृतिमीमांसायां,—

आदित्येऽहनि संक्रान्त्यां ग्रहणे चन्द्रसूर्य्ययोः ।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा तथा ॥

विष्णुपुराणे,—

विशाखायां यदा सूर्य्यश्चरत्यंशं तृतीयकम् ।
तदा चण्डं विजानीयात् कृत्तिकाशिरसि स्थितम् ॥
कृत्तिकायां यदा सूर्य्यः प्रथमांशञ्च गच्छति ।
विशाखायां तृतीयांशे तदा ज्ञेयो दिवाकरः ॥
तदैव विषुवाख्यायां[२] पुण्यकालो विधीयते ।
तदा दानानि देयानि विप्रेभ्यः प्रयतात्मभिः ॥

---

(१) अहोरात्रोषित ।

(२) विषुवाख्योऽयं ।

इति पारिभाषिकोऽन्यः पुण्यकालः। न तु मेषतुलापरनामकविषुवकालः।

देवीपुराणे,— संक्रान्तिषु स्नानविशेषा लिखिताः।

तादृशकाम्यकर्माणि तत्र तत्र दृष्ट्वा कार्य्याणि।

मेषसंक्रान्तौ विशेषः, विष्णुधर्मोत्तरे,—

मेषसंक्रमणे भानोर्मेषदानं महाफलं।

तथा,—

यथा तथा प्रपां दत्वा नागलोके महीयते।

इत्यादौ प्रपास्थान[१]तदुपलेपनरज्जुवारिधानीकुम्भशरावदानपरिचारकजननियोजनेषु फलान्युक्तानि।

भविष्योत्तरे,—

प्रपां दातुमशक्तौ च विशेषाद्धर्ममाप्नुयात्[२]।

प्रत्यहं धर्मघटकः कर्पटीवेष्टिताननः॥

ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः।

तस्यैवोद्यापनं कार्य्यं मासि मासि नरोत्तम॥

मण्डलैरिष्टकाभिश्च पक्वान्नैः सर्वकामिकैः।

उद्दिश्य शङ्करं विष्णुं ब्रह्माणं वासवं तथा।

सलिल[३] मोचयित्वा तु मन्त्रेणानेन मानवः॥

एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः।

अस्य प्रदानात्सकला मम सन्तु मनोरथाः॥

---

(१) प्रपास्थानं।

(२) प्रपां दातुं मशक्तैश्च विशेषाद्धर्ममिच्छुभिः। (३) सतिलं।

तदसम्भवे अश्वत्थतरुमूलसेचनं मासचतुष्टयपर्य्यन्तं तत्रैव लिखितं।
नन्दीपुराणे,— केवलजलदानमप्युक्तम्,

योऽपि कश्चिन्तृषार्त्ताय जलपानं प्रयच्छति।
स नित्यतृप्तो भवति स्वर्गे युगशतं नरः॥ इति।

सुमन्तुः,—

विप्रेभ्यः पादुके[१] छत्रं पितृभ्यो विषुवे पुमान्।
सक्तूंश्च शर्करामिश्रान् दद्यात् सजलकर्करीम्॥
शरावापूर्य्य[२] पानीयं स्नानं दद्यात् प्रपासु च।
मत्प्रीणनाय मासांस्त्रीन् मम लोके महीयते॥

इत्यादि। ग्रामनगरमार्गादिषु प्रपादाने कपिलाकोटिदानादि-फलं लिखितं। विस्तरभयात् न लिख्यते।

इति संक्रान्तिनिर्णयः।

पृथ्वीरजस्वलात्वकालः।

शतानन्दसंग्रहे।

मृगर्च्चेऽर्के निदाघस्य तन्मध्येऽपि दिनत्रयम्।
रजस्वला स्यात् पृथिवी कृषिकर्म्मविगर्हिता॥

निदाघस्य ग्रीष्मर्त्तोः सौरस्यैवेति विज्ञेयं। सूर्य्ये मृगर्च्चे मृगशिरोनक्षत्रगते वृषान्ते मिथुनादौ चेत्यर्थः। मृगशिरोनक्षत्रस्य वृष-मिथुनोभयराशिभोग्यत्वात्। तथा च वृषान्तदिनं मिथुनसंक्रान्ति-दिनं तत्परदिनं चेति दिनत्रयमित्यर्थः। योग्यत्वात्।

वृषान्ते मिथुनस्यादौ तन्मध्येऽपि दिनत्रयम्।

(१) पादुकं। (२) शरासुवर्य्यपानीयं स्नानं।

इति वाक्यान्तरात्। तन्मध्ये मिथुनमध्ये मिथुनद्वितीयदिन इत्यर्थः। स्वतो दिनत्रयस्य निरन्तरत्वात्॥०॥

अथागस्त्यार्घविचारः।

अगस्त्यस्य दक्षिणाशास्थितिमुपक्रम्य श्रीभगवद्वचनम् विष्णुरहस्ये,—

ये त्वां तत्र स्थितं भक्त्या नार्चयिष्यन्ति मानवाः।
तेषां साम्वत्सरं पुण्यं मत्प्रसादाद्भवेत्तव॥
ये त्वां महाविधानेन पूजयिष्यन्ति वारुणे।
श्वेतद्वीपं गमिष्यन्ति ते नरा मत्प्रसादतः॥

इत्यगस्त्यार्घस्य नित्यकाम्यत्वेऽपि,

अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः।
अर्घं दद्युरगस्त्याय ये च सन्ति महोदये॥

इति वाक्यान्तरात्।

महोदयस्थानमुपक्रम्य,

यस्तु भाद्रपदस्यान्ते उदिते कलशोद्भवे।
अर्घं दद्यादगस्त्याय सर्वान् कामान् लभेत सः॥

इति भीमपराक्रमोक्तेश्च नास्मद्देशे तत्समाचारः। सत्रिभागैः त्रिभिर्दिनैः त्रयोदशदिनैः न्यूने सिंह इत्यर्थः।

महोदये तन्नामकस्थानविशेषे भाद्रपदशब्दोऽपि सौरमासविषयः।

घृतकम्बलं विष्णुधर्म्मे,—

आलिङ्गदेवपर्य्यन्तं यो दद्याद्घृतकम्बलम्।

जागरं नृत्यगीताद्यैः सह्नन् कृत्वा च पर्व्वणि ॥
मन्वन्तरसहस्राणि शिवलोके महीयते ।

पर्व्वणि मकरसंक्रान्तौ "मृगं यत्र रविर्व्रजेत्" इति वाक्यान्तरात्। मृगं मकरं "मकरो मृगास्यः" इति ज्योतिः शास्त्रात् ॥०॥

नदीनां रजस्वलात्वविचारः ।

छन्दोगपरिशिष्टे,—

यत्यद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः ॥
धनुःसहस्राण्यष्टौ च[१] गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः ॥

तदपवादः पुनस्तत्रैव,—

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥

यत्योमासः । समुद्रगाः साक्षात् समुद्रप्रविष्टाः ।

अन्यथा,

यथा नदी नदाः सर्व्वे समुद्रं यान्ति संस्थितिम् ।

इति मनूक्तेः, सर्व्वासां नदीनां परम्परयाऽब्धिप्रवेशात् दोषाभावः प्रसज्येत ।

धनुः परिमाणं विष्णुधर्म्मोत्तरे,—

द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयञ्च शयः स्मृतः ।

---

(१) चाष्टौ तु ।

तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रिकः ॥

गयो हस्तः। अयं दोषाभावो जलान्तरासम्भव एव। एवं "न-दूष्येत्तीरवासिनां" इति मदनपारिजातधृतायां स्मृतावपि बोध्यम्। अत एव व्याघ्रपादः,—

अभावे कूपवापीनामन्येनापि समुद्धृते ।
रजोदुष्टेऽपि पयसि ग्राम्यभोगो न दुष्यति ॥

अन्येनापि घटादिना, श्रावणादिद्वयं सौरमासविषयम् । तथा च कर्कटमिथुनयो रजोदोषः,—

आदौ कर्कटके नद्यः सर्वा एव रजस्वलाः ।
त्रिदिनन्तु चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी यथा ॥

इति स्मृतौ सौरमासे एवकारेण समुद्रगानां नदीनामपि [१]शुद्धिलकथनात्। दिनत्रयेऽपि गङ्गायां दोषः, अस्या दृष्टान्तत्वे-नोपादानात् ।

अत एव देवलः,—

गङ्गा च यमुना चैव प्लक्षजाता सरस्वती ।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः ॥

प्लक्षजाता सरस्वती कुरुक्षेत्रगता सरस्वती । नदाः शोणादयः । ते च,—

शोणः सिन्धुर्हिरण्याख्यकोकलोहीतघर्घराः ।
शतद्रूश्च नदाः सप्तपावना ब्रह्मणः सुताः ॥

---

(१) अचिरत्वकथनेनस्पष्टीकृतत्वात् ।

यत्तु,

भागीरथी च कालिन्दी नर्मदा च सरस्वती।
विशोका च वितस्ता च गौतमी कृष्णवेणिका।
तुङ्गभद्रा भीमरथी(१) तापी चैव पयोष्णिका।
द्वादशैता महानद्यः पापिनः पावयन्ति ताः(२) ॥

इति वाक्यात् समुद्रगापदं महानदीपरमिति प्राचीनाः। तन्न, समुद्रगापदस्य यौगिकार्थत्यागेन अप्रसिद्धरूढकल्पनायां मनाभावात्। इति सौरमासकार्याणि ॥०॥

## अथ ग्रहणं।

तत्र वृद्धगार्ग्यः,—

पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम्।
ग्रसते चन्द्रमर्कञ्च दर्शप्रतिपदन्तरा ॥

पूर्वान्तिमभागः स्पर्शकालः। प्रतिपदाद्यभागो मोचकालः। तदुक्तं ब्रह्मसिद्धान्ते,—

यावत्कालः पर्वणोऽन्ते तावत् प्रतिपदादिमः।
रवीन्दुग्रहणानेहाः सम्पूर्णो मिश्रितो भवेत् ॥

अनेहाः कालः। विशेषोऽन्यो ज्योतिःशास्त्रे द्रष्टव्यः।

जाबालिशातातपौ,—

संक्रान्तेः पुर्वकालस्तु षोडशोभयतः कलाः।
चन्द्रसूर्योपरागे च यावद्दर्शनगोचरः ॥

---

(१) भीमरथ्या।
(२) गाः।

नच । "चन्द्रसूर्यग्रहे स्नायात्" इत्यादौ स्नानादौ नैमित्तिके चन्द्रसूर्योपरागमात्रस्य निमित्तत्वश्रवणेऽपि वाक्यान्तरेण यावद्दर्शन-गोचर इति निमित्तस्य विशेषणान्तरमुपादीयते । "यावज्जीव-मग्निहोत्रं जुहुयात्" इति जीवनस्य निमित्तत्वश्रुतावपि सायं प्रातर्जुहोति इति वाक्यान्तरेण सायं प्रातःकालावच्छिन्नजीवनस्य निमित्तत्ववत् संक्रान्तिपुण्यकालवाहुचर्य्यादिवमेवं निर्णयः । दर्शनं चाक्षुषज्ञानं द्विविधपण्यायित्वान्नस्वरूपेण निमित्तविशेषं, दर्शन-काले स्नानश्राद्धादेरसम्भवात् ।

अत एव लक्ष्मीधरः,– "चाक्षुषज्ञानविषयस्यैव निमित्तता । चाक्षुष एव ज्ञाने दर्शनपदस्य मुख्यत्वात् । तेन मेघाच्छन्नतायां न स्नानादिकं कार्य्यं इति । तेन चाक्षुषज्ञानविषयस्य मनुष्याधिकारं शास्त्रं इति स्वपरसाधारण्येन निमित्तत्वादन्धादेरपि स्नानादा-वधिकारः ।

एवं,

जन्मभे जन्मनक्षत्रे सप्तमे चाष्टमे तथा ।
चतुर्थे द्वादशे चैव न कुर्य्याद्राहुदर्शनम् ॥

इति निषिद्धनक्षत्रेषु दर्शनाभावेऽपि स्नानादिकरणमावश्यकम् ।

ननु,

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपसृष्टं न वारिस्थं नो मध्यं नभसोगतम् ॥

इति मनूक्तौ राहुग्रस्ते सूर्य्यदर्शनस्य निषिद्धत्वात् कथं राहु-ग्रहणं चक्षुर्ग्राह्यं स्यात्, इति चेत्, सत्यं । सूर्य्यग्रहणे ज्ञातेऽपि

यदपरं दर्शनं प्राप्तं तदेवानेन निषिद्धं। न तु प्रथमदर्शनं। अतो न कश्चित् विरोधः।

दर्शनसन्देहे वशिष्ठः,—

यासदर्शनमात्रेण यदि हानि(१)र्भवेद्ध्रुवम्।
जायते यदि सन्देहस्तस्मात्तत् परिवर्जयेत्॥

स्मृत्यन्तरे,—

चन्द्रार्कग्रहणे चैव यो न स्नातीह मानवः।
स सप्तजन्म कुष्ठी स्याद्दुःखभागी च सर्वदा॥

व्यासः,—

इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं तथा।
गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश॥
गवां कोटिसहस्रस्य यत् फलं लभते नरः।
तत्फलं जाह्नवीतोये राहुग्रस्ते निशाकरे॥
दिवाकरे तु स्नानस्य दशसङ्ख्यमुदाहृतम्।
चन्द्रसूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीम्॥
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम्॥

अन्यकालस्नानादिन्दुग्रहणे लक्षगुणं। सूर्य्यग्रहणे तद्दशगुणमित्यर्थः।

मात्स्ये,—

गङ्गाकनखले पुण्ये प्रयागः पुष्करं गया।
कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे॥

(१) पार्थहानिः।

कोटिजन्मकृतं पापं पुरुषोत्तमसन्निधौ।
कृत्वा सूर्य्यग्रहे स्नानं विमुञ्चति महोदधौ॥
दशजन्मकृतं पापं स्नानान्नश्यति पुष्करे।
शतजन्मकृतं पापं गङ्गासागरसङ्गमे॥
जन्मान्तरसहस्रेण यत्पापं समुपार्जितम्।
तत्सर्वं सन्निहत्यायां राहुग्रस्ते दिवाकरे॥

सन्निहत्या कुरुक्षेत्रे तीर्थविशेषः।

महाभारते,—

महानदीषु चान्यासु स्नानं कुर्य्यात् यथाविधि।

यथाविध्युक्तः साङ्गं स्नानमदृष्टार्थमिति बोध्यम्। ब्राह्म्याद्युक्त-महानद्योऽस्मत्कृताचारसारे द्रष्टव्याः।

असम्भवे शङ्खः,—

नदीकूपतडागेषु नदप्रस्रवणेषु च।
नद्यां नदे देवखाते सरसीषूद्धृताम्बुनि॥
उष्णोदकेऽपि वा स्नायात् ग्रहणे चन्द्रसूर्य्ययोः॥

उष्णोदकमातुरस्यैव।

आदित्यकिरणैः पूतं पुनः पूतं च वह्निना।
अतो (१)व्याध्यातुरः स्नायाद्ग्रहणे (२)चन्द्रसूर्य्ययोः॥

इति व्यासोक्तेः।

---

(१) वाधातुरः।
(२) ऽप्युष्णवारिणा।

एवञ्च,—

मृते जन्मनि संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

इति निषेधो नातुरविषयः ।

एतत्सर्वमभिप्रेत्य व्यासः,—

सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्य्ययोः ॥
शीतमुष्णोदकात्पुण्यं अपारक्यं परोदकात् ।

इत्यादिमार्कण्डेयोक्तिर्नित्यस्नानेऽस्मत्कृताचारसारे द्रष्टव्या ।

यद्देवीपुराणे,—

कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे ॥ इति

तत्सर्वं गङ्गासममित्यनेनैव चरितार्थमिति विस्तरभयात् न लिखितं । ग्रहणे नदीषु रजोदोषाभावः पूर्वं लिखितः ।

व्यासः चूड़ामणियोगमाह ।

रविग्रहे सूर्य्यवारे सोमे सोमग्रहे तथा ।
चूड़ामणिरितिख्यातस्तत्रानन्तफलं भवेत् ॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्य्ययोः ।
तत्पुण्यं कोटिगुणितं ग्रस्ते चूड़ामणौ स्मृतम्

ग्रहणनिमित्तकं श्राद्धं नित्यं काम्यमिति न लिखितम् ।

यमशातातपौ,—

स्नानं दानं तपः श्राद्धमनन्तं राहु

आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥

देवलः,—

यथा स्नानञ्च दानञ्च सूर्यस्य ग्रहणे दिवा।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

कौर्म्मे,— काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु।

ग्रहणदिनपतितवार्षिकश्राद्धादीनि ग्रहणनिमित्तकश्राद्धं च हेम्ना आमद्रव्येण वेति पूर्वमुक्तं। ग्रहणे आमश्राद्धपक्षे पिण्डवर्ज्जनमित्यपि लिखितं। नवश्राद्धादिसपिण्डान्तमेतत्कृत्यानि पक्वान्नेनैव इति सपिण्डीकरणप्रकरणेऽप्युक्तं।

ब्रह्माण्डपुराणे,—

अशौचं जायते नृणां ग्रहणे चन्द्रसूर्य्ययोः।
बान्धवानां च मरणे राहुस्पर्शे विशांपते ॥
रवेरपि ततः स्नात्वा दानादौ कल्पते नरः।
ग्रहणे शावमाशौचं विमुक्तौ सूतकं स्मृतम् ॥ इति

ग्रासमुक्त्योरपि स्नाननिमित्तत्वमुक्तं।

षट्त्रिंशन्मते,—

सर्वेषामेव वर्णानां सूतकं राहुदर्शने।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं परित्यजेत् ॥

शृतं पूर्वपक्वं।

मुक्तावपि स्नानं, स्मृत्यन्तरे,—

(१)ग्रसमाने भवेत् स्नानं ग्रस्ते होमो विधीयते।

---

(१) ग्रास्यमाने।

सार्द्धप्रथमयामादूर्द्ध्वं मुहूर्त्तचतुष्टयं महानिशेति लक्ष्मीधरः। पूर्वकाले भोजनविधेर्विशेषमाह वृद्धवशिष्ठः,—

> ग्रहणं चेद्भवेदिन्दोः प्रथमादधियामतः।
> भुञ्जीतावर्त्तनात्पूर्वं पश्चिमे प्रथमादधः॥
> रवेश्चावर्त्तनादूर्द्ध्वमर्वागेव निशीथत.।
> चतुर्थप्रहरे चेत्स्याच्चतुर्थप्रहरादधः॥

रात्रौ प्रथमयामात्पूर्वं(१) चन्द्रग्रहणं चेत्, तदावर्त्तनान्मध्याह्नात्पूर्वं भुञ्जीत। रात्रौ पश्चिमे चेत्, रात्रिप्रथमयामादर्वाक् भुञ्जीत इति। सूर्य्यस्य तु दिवावर्त्तनान्मध्याह्नादूर्द्ध्वं ग्रहण चेत्, तदा निशीथतोऽर्द्धरात्रादर्वाक् भुञ्जीत। अर्कश्चतुर्थप्रहरे चेत्, रात्रिचतुर्थप्रहरादधो भुञ्जीतेत्यर्थः। चन्द्रग्रहणे यामत्रयेण व्यवधानं। सूर्य्यग्रहणे यामचतुष्टयेनेति तात्पर्य्यार्थ.।

तथा च स्मृतिः,—

> सूर्य्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम्।
> चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना॥

बालवृद्धातुरविषये तु मात्स्ये,—

> अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे।
> भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भुक्तिमाचरेत्॥

शशिग्रहे ग्रस्तोदये वृद्धवशिष्ठः,—

> ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्।

---

(१) दूर्द्ध्वं।

उभयोर्ग्रस्तास्तमये भृगुः,—

ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि ।
तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः ॥

समर्थस्य ग्रहणनिषेधकाले भोजने प्रायश्चित्तमाह कात्यायनः,—

चन्द्रसूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति ॥

ननु मुक्तिं दृष्ट्वापरेऽह्नि भुञ्जीतेत्युक्तं; मेघाद्याच्छन्ने भोक्तव्यमिति चेन्न ।

चन्द्रसूर्य्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः ।
राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम् ॥

इति वृद्धगौतमस्य वचने शास्त्रज्ञानस्य विवक्षितत्वात् ।

अतएव कृत्यमहार्णवधृते स्मृत्यन्तरे,—

मेघमालादिदोषेण मुक्तयोरनवेक्षणे ।
आकलय्य ततः कालं भुञ्जीत स्नानपूर्वकम् ॥

एवं तर्हि परेद्युरुदयात् प्रागपि शास्त्रज्ञानसम्भवात् तदैव भोजनं प्रसज्येत इति चेन्न । तयोः परेद्युरुदये स्नात्वाभ्यवहरेदहोरात्रं न भोक्तव्यं इति वचनद्वयेन तदप्रसङ्गात् ।

नन्वशौचान्तरे सर्वस्मार्त्तकर्म्म निषिद्धं, अत्र तत्कार्य्यं न वा? इति सन्देहे व्याघ्रपादः,—

स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके ।
श्रौते कर्म्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥

दक्षः,— अयने विषुवे चैव चन्द्रसूर्य्यग्रहे तथा ।

मुच्यमाने भवेद्दानं मुक्तौ [1]होमो विधीयते ॥

ब्रह्मवैवर्त्ते,—

स्नानं स्यादुपरागान्ते मध्ये होमः सुरार्चनम् ।

शिवरहस्ये,—

सूर्येन्दुग्रहणं यावत्तावत् कुर्याज्जपादिकम् ।

न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः ॥

वृद्धवशिष्ठः,—

सर्वेषामेव वर्णानां निमित्तं राहुदर्शने ।

सचेलं च भवेत्स्नानं सूतकान्नं च वर्जयेत् ॥

ग्रहणकाले ततः पूर्वं यावत् पक्वं, तत्सर्वं सूतकान्नं, तत्तु पश्चादपि न भुञ्जीतेत्यर्थः इति माधवाचार्य्याः ।

ब्राह्मे,—

उपमर्द्दे लक्षगुणं ग्रहणे चन्द्रसूर्य्ययोः ॥

पुण्यं कोटिगुणं मध्ये [2]मुक्तिकाले त्वनन्तकम् ।

बौधायनः—

श्रोत्रियोऽश्रोत्रियो वापि पात्रं वापात्रमेव वा ।

विप्रब्रुवो वा विप्रो वा ग्रहणे दानमर्हति ॥

दक्षः,—

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।

श्रोत्रिये शतसाहस्रं पात्रे त्वानन्त्यमश्नुते ॥

---

(१) स्नानं । (२) ग्रहयकाले ।

पात्रलक्षणं याज्ञवल्क्यः,—

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥

महाभारते,—

भूमिर्गावः सुवर्णं वा धान्यं वा यद्‌यदीप्सितम् ।
तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता ॥

चन्द्रसूर्य्ययो रात्रिदिवसविपर्यासेन यद्‌ग्रहणम् । तत्र स्नानादिकं न कार्य्यम् ।

तदुक्तं निगमे,—

सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत तदा दानं न कुत्रचित् ॥

ग्रहणे भोजनाभावमाह मनुः—

चन्द्रसूर्य्यग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः ।
अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि ॥

ग्रहे ग्रहणे, स्पर्शकालमारभ्य मोक्षकालपर्य्यन्तं ग्रहणकाल इति माधवाचार्य्याः ।

ग्रहणात् पूर्वमपि भोजनाभावमाह व्यासः,—

नाद्यात्सूर्य्यग्रहात्पूर्वमह्नि सायं शशिग्रहात् ।
ग्रहकाले च नाश्नीयात्स्नात्वा(१) ग्रहविमुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ॥
अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेऽहनि ॥

---

(१) स्नात्वा श्रीयात् ।

अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते ॥

अत [1]एव लैङ्गादौ यदुपवासचयमुक्तं, तत्सर्वं पुत्रिणा न कार्य्यं।

सङ्क्रान्त्यामुपवासञ्च कृष्णैकादशीवासरे ।

चन्द्रसूर्य्यग्रहे चैव न कुर्य्यात् पुत्रवान् गृही ॥

इति नारदोक्तेः । ग्रहणस्नानश्राद्धादिकं[2] सूतकमृतकाशौचयोरपि कार्य्यं इत्यशौचप्रकरणे लिखितं । किन्तु लैङ्गोक्तौ सूतकमृतकयोरुपादानात् आर्त्तवाशौचक्रियाकर्त्रशौचेषु स्नानादीनामभावसमाचारः । ग्रहणे स्नानमन्त्रः,

स्वस्थानं गम्यतां राहो त्यज्यतां चन्द्रसङ्गमः ।

परमचण्डालयोने त्वं मम पापक्षयं कुरु ॥

ग्रहणकाले तीर्थस्नानमन्त्रं बाधित्वास्यैव प्रवेशः ।

वैश्वदेवनिमित्तपाञ्चदश्यवन्नैमित्तिकत्वान्निरवकाशत्वाच्च ।

मुक्तिस्नानमन्त्रः,—

यथापदो विमुक्तोऽसि राहोर्वदनसङ्कटात् ।

तथा त्वं रोहिणीनाथ आपदो मां विमोचय ॥

सूर्य्यग्रहे तु प्रथममन्त्रे सूर्य्यसङ्गम इत्यूहः ।

मुक्तिमन्त्रे सञ्ज्ञाया नाथेत्यूहश्च । ग्रहणयोरपि दिनत्रयमनध्याय इति अनध्यायप्रकरणे लिखितम् ।

ग्रहणविषयेऽस्मत्कृतशुद्धिसारकारिकाः,—

पूर्वं स्यात्पादयामादनशनमघमप्युष्णरश्मौ स्मृतम्,

यामानां शीतरश्मेस्त्रितयमभिहितं ग्रासयामादधस्तात् ।

(१) एवं । (२) श्राद्धदानादिकं ।

इन्दौ ग्रस्तोदितेऽलं गलवति च चतुर्यामकान् पूर्वतोऽपि,
ग्रस्तावस्तं गतौ तौ यदि परदिवसे हृद्यान्नं तयोस्तत् ॥
श्रौतस्मार्त्तादिकर्माण्यपि रविशशिनोः सूर्यग्रहाशौचमध्ये,
नेहाग्न्यं सूक्ष्ममन्नं घृतमपि तदितोऽहानि न चौष्णधीतिः ।
श्राद्धं यद्वार्षिकाब्दं ग्रहणसमयजं वा तदामैः पदार्थैं,
र्हेमवाप्यादथान्नैः परमिह निखिलं प्रेतकृत्यं तु पक्वैः ॥
चन्द्रे ग्रस्तास्त एतत्परदिनपतितं वार्षिकं श्राद्धमामै,
र्हेम्ना वा पूर्ववत्स्यादिति श्रुतिविदितैर्विप्रमिश्रैरलेखि ।
हेमामैः श्राद्धसिद्धिर्भवति न हि पुनर्भोजनं यन्निषिद्धं,
तत्श्राद्धब्राह्मणोऽतिक्रमितुमिह वचोऽस्तीति युक्तिः कृतापि ॥
इति ग्रहणविचारः ।

अथालभ्ययोगाः ।

तत्र सामान्यतो गार्ग्यः,—

माघसंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः ।
गुरुणा याति संयोगं सा तिथिर्महती स्मृता ॥

शङ्करगीतायाम्,—

एकराशिगतौ स्यातां यदा गुरुनिशाकरौ ।
सा पौर्णमासी महती सर्वपापहरा स्मृता ॥

महती तिथिः महाचैत्र्यादिनाम्नीत्यर्थः ।

महामाघ्यादियोगेषु तीर्थविशेषेषु फलाधिक्यमाह गार्ग्यः,—

महामाघी प्रयागेषु नैमिषे फाल्गुनी तथा ।
शालग्रामे महाचैत्री कृताः पुण्यस्य हेतवः ॥

गङ्गाद्वारे च वैशाखी ज्यैष्ठी च पुरुषोत्तमे।
आषाढी वै कनखले केदारे श्रावणी तथा॥
बदर्य्यां च प्रौष्ठपदी कुब्जाद्रौ च महाश्विनी।
पुष्करे कार्त्तिकी कान्यकुब्जे मार्गशीर्षी तथा॥
अयोध्यायां महापौषी स्मृता च सुमहाफला।

विशेषतो महावैशाखी, स्कान्दे,—

मेषेऽर्के कार्मुके जीवे मकरस्थेऽथवा द्विज।
पूर्णिमा रविवारेण तुलास्थे च शनैश्चरे॥
वरीयोयोगयुक्ते च विशाखर्क्षे यदा शशी।
महाशब्दा तदा ज्ञेया कोटिसूर्य्यग्रहाधिका॥
कोटिजन्मकृत पापं दृष्ट्वा श्रीपुरुषोत्तमम्।
महावैशाख्यां मुच्यन्ति स्नान कृत्वा महोदधौ॥

महाज्यैष्ठी, कौर्मे,—

ऐन्द्रे गुरुः शशी चैव प्राजापत्यगते रवौ।
पौर्णमासी गुरौ ज्यैष्ठी महाज्यैष्ठीति सा स्मृता॥
महाज्यैष्ठ्यां च यो गच्छेत् चेत्र श्रीपुरुषोत्तमम्।
व्रजेत् पदानि यावन्ति क्रतुतुल्यानि तानि तु॥
तत्र गत्वा हरेर्धाम्नि गत्वा श्रीपुरुषोत्तमम्।
विश्रम्य विधिवत् स्नायात् प्रतितीर्थेषु वै क्रमात्॥

प्राजापत्य रोहिणीनक्षत्र। प्रकारान्तर तु फलाल्पत्वान्नाद्रियते। अयं योगो गङ्गायामपि।

तथा च ब्राह्मे,—महाज्यैष्ठ्यां तु य पश्येत् पुरुष पुरुषोत्तमम्।

प्रकारान्तरं ब्रह्माण्डे,—

कुम्भस्थे भास्करे राजन् मकरे चाङ्गिरःशनौ ।
द्वादशी शुक्लपक्षस्य पुष्यर्क्षे जायते यदि ॥
गोविन्दद्वादशी नाम महापातकनाशिनी ।
तस्यां क्षत्वोदधिस्नानं दृष्ट्वा श्रीपुरुषोत्तमम् ॥
(१)श्वेतसन्निहिते गङ्गामवगाह्य विधानतः ।
चयोदशसहस्राब्दैरिष्ट्वा: फलमाप्नोति मानवः ॥

अत्र प्रकारद्वये योगतारतम्यात् फलतारतम्यं । एतत्प्रकारद्वयं श्रीपुरुषोत्तमक्षेत्र एव ।

यत्तु,—यत्र कुत्र हरेः स्थाने यः कुर्य्यात् व्रतमीदृशम् ।

इति, तत्क्षेत्रे यत्र कुत्रापि इति ज्ञेयं । अन्यथा "पञ्चतीर्थं(२) नरः कुर्य्यात्" इत्याद्यसङ्गतं स्यात् । सामर्थ्ये उपवासः, असामर्थ्ये हविष्यं ।

तथाच तार्क्ष्ये,—

बालवृद्धातुराः कन्या येऽसमर्था उपोषितुम् ।
हविष्यभोजनं कृत्वा विष्णुपूजनतत्पराः ॥

पुनः प्रकारान्तरं विष्णुधर्म्मे,—

फाल्गुनामलपक्षस्य पुष्यर्क्षे द्वादशी यदि ।
गोविन्दद्वादशी नाम महापातकनाशिनी ॥
तस्यामुपोष्य विधिवत् नरः प्रक्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥

---

(१) श्वेतसन्निहिते । (२) पञ्चतीर्थं ।

गङ्गाद्वारे च वैशाखी ज्यैष्ठी च पुरुषोत्तमे ।
आषाढी वै कनखले केदारे श्रावणी तथा ॥
वदर्य्यां च प्रौष्ठपदी कुब्जाद्रौ च महाश्विनी ।
पुष्करे कार्त्तिकी कान्यकुब्जे मार्गशीर्षी तथा ॥
अयोध्यायां महापौषी कृता च सुमहाफला ।

विशेषतो महावैशाखी, स्कान्दे,—

मेषेऽर्के कार्मुके जीवे मकरस्थेऽथवा द्विज ।
पूर्णिमा रविवारेण तुलास्थे च शनैश्चरे ॥
वरीयोयोगयुक्ते च विशाखर्क्षे यदा शशी ।
महाशब्दा तदा ज्ञेया कोटिसूर्य्यग्रहाधिका ॥
कोटिजन्मकृतं पापं दृष्ट्वा श्रीपुरुषोत्तमम् ।
महावैशाख्यां मुञ्चन्ति स्नानं कृत्वा महोदधौ ॥

महाज्यैष्ठी, कौर्मे,—

ऐन्द्रे गुरुः शशी चैव प्राजापत्यगते रवौ ।
पौर्णमासी गुरौ ज्यैष्ठी महाज्यैष्ठीति सा स्मृता ॥
महाज्यैष्ठ्यां च यो गच्छेत् चेत्रं श्रीपुरुषोत्तमम् ।
व्रजेत् पदानि यावन्ति क्रतुतुल्यानि तानि तु ॥
तत्र गत्वा हरेर्धाम्नि गत्वा श्रीपुरुषोत्तमम् ।
विश्रम्य विधिवत् स्नायात् प्रतितीर्थेषु वै क्रमात् ॥

प्राजापत्यं रोहिणीनक्षत्रं । प्रकारान्तरं तु फलाल्पत्वान्नाद्रियते ।
अयं योगो गङ्गायामपि ।
तथा च ब्राह्मे,—महाज्यैष्ठ्यां तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।

प्रकारान्तरं ब्रह्माण्डे,—

कुम्भस्थे भास्करे राजन् मकरे चाङ्गिरःशनौ ।
द्वादशी शुक्लपक्षस्य पुष्यर्क्षे जायते यदि ॥
गोविन्दद्वादशी नाम महापातकनाशिनी ।
तस्यां कृत्वोदधिस्नानं दृष्ट्वा श्रीपुरुषोत्तमम् ॥
(१)श्वेतसन्निहिते गङ्गामवगाह्य विधानतः ।
त्रयोदशसहस्रेभ्यः फलमाप्नोति मानवः ॥

अत्र प्रकारद्वये योगतारतम्यात् फलतारतम्यं । एतत्प्रकार-द्वयं श्रीपुरुषोत्तमक्षेत्र एव ।

यत्तु,— यत्र कुत्र हरेः स्थाने यः कुर्यात् व्रतमीदृशम् ।

इति, तत्क्षेत्रे यत्र कुत्रापि इति ज्ञेयं । अन्यथा "पञ्चतीर्थं(२) नरः कुर्यात्" इत्याद्यसङ्गतं स्यात् । सामर्थ्ये उपवासः, असामर्थ्ये हविष्यं ।

तथाच तार्क्ष्ये,—

वालवृद्धातुराः कन्या येऽसमर्था उपोषितुम् ।
हविष्यभोजनं कृत्वा विष्णुपूजनतत्पराः ॥

पुनः प्रकारान्तरं विष्णुधर्मे,—

फाल्गुनामलपक्षस्य पुष्यर्क्षे द्वादशी यदि ।
गोविन्दद्वादशी नाम महापातकनाशिनी ॥
तस्यामुपोष्य विधिवत् नरः प्रक्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥

---

(१) श्वेतसन्निहिते । (२) पञ्चतीर्थीं ।

एतेन पापं दशजन्मभिः कृतम्
जेष्वीयते तस्य महत्तमाशु तत् ॥

वायवीये,—

कुम्भे वा यदि वा मीने फाल्गुनैकादशी शिता ।
पुष्यर्चगुरुसंयुक्ता महापापप्रणाशिनी ॥

नारदे,—

एकादश्यां शिते पचे पुष्यर्चं यत्र सत्तम ।
तिथौ भवति सा प्रोक्ता विष्णुना पापनाशिनी ॥
तस्यामाराध्य गोविन्दं जगतामीश्वरं परम् ।
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥
यश्चोपवासं कुरुते तिथौ तस्यां दिजोत्तम ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
दानं यद्दीयते किञ्चित् समुद्दिश्य जनार्द्दनम् ।
होमो वा क्रियते तस्यामचयं कथितं फलम् ॥

गोविन्दद्वादशी ।

तार्चपुराणे,—

फाल्गुनस्यामले पचे कुम्भस्थे दिवसाधिपे ।
जीवे धनुषि योगे च शोभने रविवासरे ॥
पुष्यर्चं यदि सपूर्णा गोविन्दद्वादशी स्मृता ।
गोविन्दद्वादशीं प्राप्य गच्छेत् श्रीपुरुषोत्तमम् ॥
व्रतमापूर्य्य तत्रैव विष्णुसायुज्यमाप्नुयात् ।
महाज्यैष्ठ्याद्दशगुणं फलमाप्नोति मानवः ॥

तस्यां तस्यां महापुण्या अहो भद्रेति कीर्त्तिता ॥
तस्यां दानं तथा स्नानं तर्पणं द्विजभोजनम् ।
मत्प्रीतये कृतं देवि दशसाहस्रिकं भवेत् ॥

महामाघी, वायुपुराणे,—
मेषपृष्ठे यदा शौरिर्गुरुः सिंहे च चन्द्रमाः ।
भास्करे श्रवणामध्ये महामाघीति सा स्मृता ॥

राजमार्त्तण्डे,—
पौर्णमास्यो भवन्त्यन्याः कामं नक्षत्रयोगतः ।
माघ एव तु माघी स्यात् मकरस्थे दिवाकरे ॥

वायवीये,—
फाल्गुने पापनाशिन्येकादशी ।

ब्रह्माण्डे,—पुनर्वसौ देवगुरौ निशाकरे,
निशेशवारेऽमरपूज्यकेऽथवा ।
कुम्भे रवौ मत्स्यगते वृहस्पतौ,
एकादशी स्यात् खलु पापनाशिनी ॥
जप्यञ्च तप्यञ्च तपोऽर्च्चितं(१) कृतम्,
यत्किञ्चिदस्यां किल धर्मसञ्चितम् ।
अनन्तपुण्यानि भवन्ति तस्य वै,
सूर्य्यग्रहात् कोट्यधिकं फलं तथा ॥
क्षीरोदके वा ह्यवगाह्य यो नरः,
संपूज्य कृष्णं रजनीमुपोषितः ।

(१) ऽर्जितं ।

तस्मिन् काले तु राजेन्द्र गत्वायं पुरुषोत्तमम् ।
सागरे विधिवत् स्नात्वा दृष्ट्वा नारायणं प्रभुम् ॥
कोटिजन्मार्ज्जितं पापं नाशयेत् तत्क्षणाद्ध्रुवम् ।
स्नानं दानं तथा जप्यमक्षय्यफलभाग्भवेत् ॥

व्यतीपातयोगः, स्कान्दे;—

माघ इन्दुक्षये पाते वारेऽर्के श्रवणं यदि ।
अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः[1] समः ॥
दिवैव योगः शस्तोऽयं न तु रात्रौ षडानन ।
नान्यः पुण्यतमः कालो योऽर्द्धोदयसमो भवेत् ॥
तावत् गर्जन्ति पापानि सुबहूनि महान्त्यपि ।
यावदर्द्धोदयोऽभ्येति सर्वपापप्रणाशनः ॥
अदत्वा लङ्घितो येन प्राक्कताभ्युदयस्य हि ।
अर्द्धं हरत्यतः प्राङरर्द्धोदयमिमं बुधाः ॥
अर्द्धोदये च संप्राप्ते मुनिदेवगणार्च्चिते ।
पापान्धकारान्मुच्यन्ते भवेयुर्विमला नराः ॥
अर्द्धोदये महापुण्ये सर्वं गङ्गासमं जलम् ।
यत्किञ्चित् कुरुते दानं तद्दानं मेरुसम्मितम् ॥

इत्यादि । पातो व्यतीपातः । विधिरस्यात्कृतव्रतसारे द्रष्टव्यः ।

अथ भद्राष्टमीयोगः ।

शतानन्दसङ्गहे,—

पौषे मासि यदा विप्र शुक्लाष्टम्यां बुधो भवेत् ।

(१) सहस्रार्कग्रहैः ।

तथा मैत्रगते भानौ षड्गुणं फलमश्नुते ॥
तथैवात्र गते सूर्य्ये षड्गुणात् षड्गुणं फलम् ।
सोमवारे विशेषेण माचय्यफलदा कुहूः ॥

तथा,—तस्यां मोचोत्तमे चैत्रे देशे श्रीपुरुषोत्तमे ।

इत्यादि ।

प्रविश्य मन्दिरं रामं सुभद्रां च सुरारणीम्[1] ।
कृष्णं च पूर्ववन्मन्त्रा प्रणवं च प्रणम्य च ॥

इत्यादि पुरुषोत्तमेऽधिको विधिः कौर्मे द्रष्टव्यः ।

तथा,—महाज्यैष्ठ्यां तु यत्पुण्यमस्यामेव हि तत्समम् ।

तत्र शिनीवालीलक्षणम्, वृद्धवशिष्ठः,—

दृष्टचन्द्राममावास्यां शिनीवालीं प्रचक्षते ।
एतामेव कुहूमाहुर्नष्टचन्द्रां महर्षयः ॥

तथा चतुर्द्दशीमिश्रा शिनीवाली । प्रतिपन्मिश्रा कुहूः ।

मात्स्यब्रह्माण्डयोः,—

कुह्विति कोकिलेनोक्ते यावत्कालः समाप्यते ।
तत्कालसंज्ञिता चैषा अमावास्या कुहूः स्मृता ॥

अर्द्धोदयामावास्या ।

महाभारते,—

अमार्कपातश्रवणैर्युक्ता चेत् पुष्यमाघयोः ।
अर्द्धोदयः स विज्ञेयः कोटिसन्निहितं फलम् ॥

---

(१) सुरारणिं ।

अत्यर्थं राजते यस्मात्पौर्णमास्यां निशाकरः ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ॥

वृद्धवशिष्ठः,—

राका चानुमतिश्चैव पौर्णमासीद्वयं विदुः ।
राका संपूर्णचन्द्रा स्यात् कलोनानुमतिः स्मृता ॥
रात्रिदृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता ॥

अन्यच,—

पूर्वोदिते कलाहीने पौर्णमास्यां निशाकरे ।
पूर्णिमानुमतिर्ज्ञेया पश्चादस्तमितार्क्कका[१] ॥
यत्र त्वस्तमियात् सूर्य्यः पूर्णश्चेन्दुरुपागमत् ।
युगपत् सोत्तरा राका तदा भवति पूर्णिमा ॥

महोदध्यमावास्या ।

कौर्म्मे,— मार्गमासि शिनीवाल्यां सागरे यत्र कुत्रचित् ।
स्नात्वाश्वमेधावभृथस्नानस्य लभते फलम् ॥
तथा,— सागरस्योदकं पीत्वा प्रतिगण्डूषसङ्ख्यया ।
सोमपानसमं पुण्यं वारिणा हृद्गतेन तु ॥
तथा,— सागरस्योत्तरे तीरे भूस्वर्गस्य च दक्षिणे ।
तत्र स्नात्वा तु सन्तर्प्य कृत्वा श्राद्धादिकाः[२] क्रियाः ॥

इत्यादि ।

तथा तत्रैव,—

विशाखायास्तुरीयांशे सचन्द्रे च गते रवौ ।

---

(१) पश्चास्तमितभास्करा । (२) पूजादिकाः ।

मन्दे चार्के गुरौ वापि वारेष्वेतेषु च त्रिषु ।
चीर्णेतानि च ऋचाणि स्वयं प्रोक्तानि ब्रह्मणा ॥
तत्राश्वमेधिकं पुण्यं स्नातस्य च भवेन्नृप ।
दानमक्षयतां याति पितॄणां तर्पणं तथा ॥

रोहिणीप्रतिपत्, आग्नेये,—

अनुमत्यामतीतायां प्रतिपद्रोहिणी शशी ।
यदा भवति संयोगः कार्त्तिकान्ते विशेषतः ।
मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तोऽपि लभ्यते ॥
रोहिणी प्रतिपच्चन्द्रे अर्घ्यदानं महाफलम् ।
वृश्चिकस्थो यदा भानुः पद्मादौ च प्रजापतिः ॥
षष्टिमन्निहितं पुण्यं भौमे वा यदि वा रवौ ।
तस्मिन् काले नृपश्रेष्ठ कुरुक्षेत्राधिकं फलम् ॥
दशानामश्वमेधानां फलं प्राप्नोत्यसंशयम् ।
एवं ज्ञात्वा विशेषेण गन्तव्यं पुरुषोत्तमम् ॥
कोटिसन्निहितं पुण्यं स्नात्वा चैव महोदधौ ।

अत्र विधिरसमत्कृतव्रतसारे द्रष्टव्यः ।
तत्रानुमतिस्वरूपं कठशाखायां,—"या पूर्वा पौर्णमासी सानुमतिः योत्तरा सा राकेति" ।

राका चानुमतिश्चैव पौर्णमासी द्विधा मता ।

अनुमतिराकाशब्दौ मात्स्यब्रह्माण्डयोः,—

यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह ।
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ॥

विष्णुलोकमवाप्नोति मोक्षं गङ्गाम्बुमज्जनात् ॥

चित्राकृष्णचतुर्दशी, पुष्करपुराणे,—

कार्त्तिके भौमवारे तु यदा कृष्णचतुर्दशी ।
तस्यामाराधितः स्थाणुर्नयेत् शिवपुरं ध्रुवम् ॥
यां काञ्चित्मरितं प्राप्य कृष्णपक्षे चतुर्दशीम् ।
यमुनायां विशेषेण नियतं तर्पयेद्यमान् ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ।
एकैकस्य तिलैर्मिश्रान् त्रींस्तु दद्याज्जलाञ्जलीन् ।
सम्वत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

महाकार्त्तिकी, विष्णुपुराणे,—

विशाखायां यदा सूर्य्यश्चरत्यंशं तृतीयकम् ।
तदा चन्द्रं[१] विजानीयात् कृत्तिकाशिरसि स्थितम् ॥
कृत्तिकायां यदा चन्द्रः प्रथमाङ्घ्रौ भवेत् क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥
यदा याम्यान्तु भवति तिथौ तस्यान्तु कुत्रचित् ।
तिथिः सापि महापुण्या ऋषिभिः परिकीर्त्तिता ॥
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥

---

(१) चक्रं ।

विष्णुधर्मोत्तरोक्ते तु न पुरुषोत्तमक्षेत्रगमननियमः, तत्रानुक्तत्वात्। राजमार्त्तण्डोक्तप्रकारद्वयेऽपि एवं बोध्यं।

तथा च,—

संयोगो द्वादशीपुष्ये कुम्भसंस्थे दिवाकरे।

तथा,—

कुम्भे तीक्ष्णमयूखमालिनि निशानाथोपगूढे गुरौ।

द्वादश्यां विधिवत् विधाय विविधां पूजां हरेः श्रद्धया।

पूर्वं प्राश्य हविष्यमच्युतकथां शृण्वन् व्यपोहत्यघम्।

द्वादश्यां विधिरेष पुष्यविगमे कार्य्यो बुधैः श्रद्धया॥

द्वादश्यां शुक्लपक्षे शशिनि गुरुयुते कुम्भसंस्थे खरांशौ,

पूजां कृत्वा मुरारेर्विधिविहितहविः प्राशयेत् मन्त्रपूतम्।

पुष्यां ऋक्षं[1] न चेत्स्यात्तदपि विधिममुं वासुदेवस्य कृत्स्नम्,

द्वादश्यामेवकुर्य्यान्न हि विहितविधिर्द्वादशीमन्तरेण॥

पुरुषोत्तमव्यतिरिक्तस्थलेऽपि योग उक्तः। तथा च, गोविन्दद्वादशीयोगो गङ्गायामप्युक्तः।

महापातकसंज्ञानि यानि पापानि सन्ति मे।

गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि॥

इति पद्मपुराणीयमन्त्रलिङ्गात्।

शिष्टाः,—

पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी।

तस्यां नदीषु स्नानेन वाजपेयफलं लभेत्॥

(१) पुष्या ऋक्षं।

विष्णुलोकमवाप्नोति मोचं गङ्गाम्बुमज्जनात् ॥

चित्राकृष्णचतुर्दशी, पुष्करपुराणे,—

कार्त्तिके भौमवारे तु यदा कृष्णचतुर्दशी ।
तस्यामाराधितः स्थाणुर्नयेत् शिवपुरं ध्रुवम् ॥
यां काञ्चित्मरितं प्राप्य कृष्णपक्षे चतुर्दशीम् ।
यमुनायां विशेषेण नियतं तर्पयेद्यमान् ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ।
एकैकस्य तिलैर्मिश्रान् त्रींस्तु दद्याज्जलाञ्जलीन् ।
सम्वत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

महाकार्त्तिकी, विष्णुपुराणे,—

विशाखायां यदा सूर्य्यश्चरत्यंशं तृतीयकम् ।
तदा चन्द्रं[१] विजानीयात् कृत्तिकाशिरसि स्थितम् ॥
कृत्तिकायां यदा चन्द्रः प्रथमाङ्घ्रौ भवेत् क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥
यदा याम्यान्तु भवति तिथौ तस्यान्तु कुत्रचित् ।
तिथिः सापि महापुण्या ऋषिभिः परिकीर्त्तिता ॥
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥

---

(१) चर्क्कं ।

सप्तमी रविवारेण बुधवारेण चाष्टमी ।
अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्दशी ॥
सोमवारे त्वमावास्या सूर्यपर्वशताधिका ॥

वैशाखमासमधिकृत्यादित्यपुराणे,—

गुरुवारेऽप्यमावास्यामश्वत्यच्छायवारिणा ।
स्नानं प्रयागस्नानेन समं पातकनाशनम् ॥

अथ व्यतिपातयोगः ।

वृद्धमनुः,—

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतं अश्लेषा । मस्तकं मृगशिराः ।

भगवतीपुराणे,—

स्नानं दानं तथा होमं श्राद्धं देवार्चनम् तथा ।
व्यतीपातेषु यत्पुण्यं कोटिसन्निहिताधिकम् ॥

इत्यादिविधिस्तत्रैव द्रष्टव्यः ।

अथ त्र्यहस्पृक् ।

तिथिस्त्रिस्पृगहोरात्रे दिनत्रयमुदाहृतम् ।
त्र्यहस्पृशि तत्र दिने स्नानञ्च जप एव च ॥
सहस्रगुणितं प्राक्तरिदमेव दिनत्रयम् ।
प्रथमे वाजिनो यान्ति द्वितीये सारथिस्तथा ॥
तृतीये सविता तेन पुण्यं तत् स्यात् दिनत्रयम् ।

एवमादियोगेषु न तीर्थविशेषनियमः ।

## करतोयायां योगः।

स्मृतिः,—

करतोयाजलं प्राप्य यदि सोमयुता कुहूः।
अरुणोदयवेलायां सूर्य्यग्रहशतैः समाः॥

तत्र स्नानमन्त्रः,—

करतोये सदानीरे सरित्श्रेष्ठे सुविस्तरे।
पुण्यान् प्लावयसे नित्यं पापं हरकरोद्भवे॥

पुण्यान् देशविशेषान्।

## गङ्गायां योगः।

व्यासः,—

अमावास्यां भवेद्वारो यदि भूमिसुतस्य वै।
गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी॥
शिनीवाली कुहूर्वापि यदि सोमदिने भवेत्।
गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम्॥

## वारुण्यादियोगाः।

स्कान्दे,—

वारुणेन समायुक्ता मधुकृष्णत्रयोदशी।
गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा॥
शनिवारसमायुक्ता सा महावारुणी स्मृता।
शुभयोगसमायुक्ता शनौ शतभिषा यदि।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्॥

वारुणं शतभिषा। मधुः चैत्रमासः। कुलं पुरुषः।

अत्र प्राचीनगौडैः,—

स्नानं कुर्वन्ति या नार्य्यश्चन्द्रे शतभिषाङ्गते ।
सप्तजन्म भवेयुस्ता विधवा दुर्भगा ध्रुवम् ॥
त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः ।
शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथञ्चन ॥

इति प्रचेतोजाबालिवाक्याभ्यां स्त्रीशूद्राणां वारुण्यादौ स्नानं निषिद्धं, स्त्रीणां तु महादोषश्रवणादकरणे प्रत्यवायाभावाच्चेत्युक्तम्, तन्न। तादृशवाक्यानां यादृच्छिकस्नानपरत्वात्, केवलनक्षत्रपरत्वाच्चेति सिद्धान्त इत्येके ।

अत्र यन्तिथितत्त्वकारैः रात्रावपि वारुण्यादिस्नानम् ।

दिवारात्रौ च गङ्गायां सन्ध्यायाञ्च विशेषतः ।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृतसज्जलैः ॥

इति ब्रह्माण्डपुराणे ।

गन्धर्ववाक्यञ्च,—

अतो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः ।
गर्हयन्ति जनान् सर्वान् वनस्थान्नृपतीनपि ॥

अथार्जुनस्य प्रतिवाक्यम्,—

समुद्रे हिमवत्पार्श्वे नद्यामस्यां च दुर्मते ।
रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः ॥
असम्बाधा देवनदी स्वर्गसम्पादिनी तथा ।
कथमिच्छसि[१] तां रोद्धुं नैष धर्मः सनातनः ॥

---

(१) सि ।

अनिवार्यमसम्बाधं तत्र वाचा कथं वयम् ।
न स्पृशेम यथाकामं पुण्यं भागीरथीजलम् ॥

इति रात्रिंचराधिकारमुपक्रम्यादिपर्वणि ।

सर्व एव शुभः कालः सर्वो देशस्तथा शुभः ।
सर्वो जनस्तथा पात्रं स्नानादौ जाह्नवीजले ॥

इति भविष्यपुराणे च सामान्यतः प्रतिप्रसवात् । पात्रमधिकारी ।

देवलः,—

महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।
तस्यां स्नानं न कुर्वीत काम्यनैमित्तिकादृते ॥

अत्र महानिशायामपि काम्यनैमित्तिकस्नानं प्रतीयत इति लिखितं । तन्न विचारचारु, प्राचीनाचारविरुद्धं च । तथाहि, यदि दिवारात्रौ चेति सामान्यं वाक्यं काम्ययोगेऽपि प्रवर्त्तते । तर्हि तद्वाक्यैकदेशोक्तोद्धृतजले न वारुणादिस्नानमपि दुर्निवारं । यदि तु आदिपर्वोक्तसामान्यवाक्याद्योगेऽपि गङ्गास्नानं कार्य्यं, तर्हि समुद्रेऽपि सर्वयोगे रात्रौ स्नानं केन वार्य्यते । यच्चोदाहृतं सर्व एव शुभ इत्यादि तत्र सर्व एव शुभः काल इत्यादौ स्वस्य स्वारस्यं सामान्यत इत्यादिना तैरेव सूचितं । तथाहि, सामान्यवाक्यादिशिष्य सर्वकालस्य यदि स्नानार्हत्वं, तर्हि पित्रादिमरणकालेऽपि योगस्नानमनिवार्य्यम् । नापि तथाचारो दृश्यते । यदपि महानिशेति देवलवाक्यमुपात्तम् । तत्र काम्यपदं काम्यव्रतपरं न तु सर्वकाम्यपरं । नैमित्तिकपदं चन्द्रग्रहणादिपरं । तथा चैतद्वाक्यस्य व्याख्यानार्थं देवलस्यैव वाक्यान्तरम् ।

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
नद्यां स्नानादिकं कुर्युर्निशि काम्यव्रतेषु च ॥ इति ॥

तस्मात् सर्वथा न रात्रौ योगस्नानम्। दिवैव योगः शस्त इति स्कान्दोक्तौ स्फुटमेव। सङ्कल्पवाक्ये तिथ्युल्लेखानन्तरं वारुणीयोग-इत्याद्युल्लेखं "निमित्तानां च सर्वशः" इत्याद्युक्तेः ॥ ० ॥

श्रीनीलाम्बरराजगुर्वभिधया ख्यातो हरेकृष्णभूनाथ-
प्राप्तगजातपत्र उदभूद्यो याजयूकः सुधीः ।
श्रीमान् राजगुरुर्गदाधरसुधीस्तस्यात्मजः कौशिको-
ग्रन्थं संशयनाशकं रचितवान् श्रीकालसाराभिधम् ॥

इति कालसारः समाप्तः ।